O.R.I. SERIES No.—184

श्रीयज्ञेश्वरदीक्षितविरचितम्

# अलङ्काररराघवम्

प्रथमो भागः

# ALAṄKĀRARĀGHAVAM

OF

YAJÑEŚVARADĪKṢITA

PART-I

*Critically Edited by*

VIDWAN DR. T. V. SATHYANARAYANA, M.A., Ph.D.




ORIENTAL RESEARCH INSTITUTE
UNIVERSITY OF MYSORE
MYSORE
1997

*Price* : Rs. 48-00

O.R.I. SERIES No.—184

श्रीयज्ञेश्वरदीक्षितविरचितम्

# अलङ्काररराघवम्

प्रथमो भागः

# ALAṄKĀRARĀGHAVAM

OF

YAJÑEŚVARADĪKṢITA

PART-I

*Critically Edited by*

VIDWAN DR. T. V. SATHYANARAYANA, M.A., Ph.D.



ORIENTAL RESEARCH INSTITUTE
UNIVERSITY OF MYSORE
MYSORE
1997

*Price :* Rs. 48-00

UNIVERSITY OF MYSORE
ORIENTAL RESEARCH INSTITUTE SERIES-184

मैसूरुविश्वविद्यानिलयः
प्राच्यविद्यासंशोधनालयग्रन्थमाला — १८४

श्रीयज्ञेश्वरदीक्षितविरचितम्

# अलङ्काररराघवम्

## प्रथमो भागः

# ALANKĀRA RĀGHAVAM

OF

ŚRĪ YAJÑEŚVARA DĪKŚITA

PART—I



प्राच्यविद्यासंशोधनालयः, मैसूरु
ORIENTAL RESEARCH INSTITUTE, MYSORE
1997

मैसूरुविश्वविद्यानिलयः
प्राच्यविद्यासंशोधनालयग्रन्थमाला—१८४

श्रीयज्ञेश्वरदीक्षितविरचितम्

# अलङ्काररराघवम्

## प्रथमो भागः

प्रधानसम्पादिका
विदुषी डा. हेच्. पि. देवकी, एम्. ए., पिहेच्.डि.
अलङ्कारशास्त्रविद्वत्
प्राच्यविद्यासंशोधनालयस्य निर्देशिका
स्नातकोत्तरसंस्कृताध्ययनसंशोधनविभागस्य प्रवाचिका मुख्या च
मानसगङ्गोत्री, मैसूरु

प्राच्यविद्यासंशोधनालयः, मैसूरु
१९९७

UNIVERSITY OF MYSORE
ORIENTAL RESEARCH INSTITUTE SERIES-184

# ALAṄKĀRA RĀGHAVAM

OF

## ŚRĪ YAJÑEŚVARA DĪKṢITA

PART—I

*General Editor* :

**Vidushi, Dr. H. P. DEVAKI, M.A., Ph.D.,**
Alankarashastravidwath
Director, Oriental Research Institute, Mysore
and
Reader and Chairman
Department of Studies in Sanskrit
Manasagangotri, Mysore

ORIENTAL RESEARCH INSTITUTE
MYSORE - 570 005
1997

मैसूरुविश्वविद्यानिलयः
प्राच्यविद्यासंशोधनालयग्रन्थमाला—१८४

श्रीयज्ञेश्वरदीक्षितविरचितम्

# अलङ्कारराघवम्

## प्रथमो भागः

सम्पादकः
प्रतिभापटुः, वेदसूक्तविद्यासागरः, वेदविद्यानिधि
विद्वान् डा. टि. वि. सत्यनारायणः, एम्.ए., पिहेच्.डि.
अलङ्कारव्याकरणशास्त्रविद्वान्, संस्कृतकोविदः
सहायकसंशोधकः—I
प्राच्यविद्यासंशोधनालयः, मैसूरु

प्राच्यविद्यासंशोधनालयः, मैसूरु
१९९७

UNIVERSITY OF MYSORE
ORIENTAL RESEARCH INSTITUTE SERIES-184

# ALAṄKĀRA RĀGHAVAM

OF

ŚRĪ YAJÑĒŚVARA DĪKṢITA

PART–I

*Editor* :

'Prathibhapatu', 'Vedasuktavidyasagara', 'Vedavidyanidhi'

**Vidwan, Dr. T. V. SATHYANARAYAṆA,**
M.A., Ph.D.

Alankara-Vyạkarnashastra Vidwan
Samskrita Kovida
Senior Research Assistant
Oriental Research Institute, Mysore

ORIENTAL RESEARCH INSTITUTE
MYSORE – :70 005
1997

## FOREWORD

It is generally accepted that a very few languages of the world equal the marvels of the rich oriental language, Sanskrit. Its contribution to all branches of learning is unique. The century old Oriental Research Institute of Mysore is well known for preservation and publication of rare Sanskrit manuscripts. This prestigeous institute is presenting one more publication, entitled 'Alaṅkāra Rāghavam -Part 1.' The second part of this novel work has already been published in the year 1991 itself by the same institute. Both are the outcome of the scholarly task of Vidwan Dr. T. V. Satyanarayana a a Senior Research Assistant in the Oriential Research Institute.

The extensive work Alaṅkārarāghavam is divided into two parts. The first part which is being published now begins with a critical introduction to Alaṅkāraśāstra. The elaborate treatment of Nāyaka, Kāvyanirūpaṇam, Abhidhā-Lakṣhaṇā-Vyanjanā are discussed in detail. In addition to this the other fundamental topics of Alaṅkāraśāstra such as Vṛtti, Rīti, Dhvani and Kāvyaprabhedas, Rasas, Dośas and Guṇas are treated briefly and effectively. He also bring the ten varieties of Rūpaka under the heading Natya-prakaraṇa. In all these contexts the author Yajneśvara Dixita exhibits his outstanding scholarship.

The Alaṇkāra Rāghavam—Vol. 2 which is published first before the first volume for technical reasons, enumerates 6 śabdālaṅkāras and 78 arthālaṅkāras.

In these two volumes of Alaṇkāra Rāghavam the author, instead of presenting a mere epitome of the fundamental doctrines of Alaṅkāraśstāra, reviews the opinions of other rhetoricians popular by his time. Of course, Yajñeśvara Dīxita is influenced by Bharata, Bhāmaha, Daṇḍin, Rudrata, Vāmana, Ānandavardhana, Mammaṭa, Ruyyaka and other famous works on Alaṅkāraśāstra. Still, he does not blindly admit the view of others. He also quotes from Rasārṇavasudhākara of Śiṅgabhūpāla and Sāhityacintāmaṇi of Vīranārāyaṇa.

Another notworthy point that draws our attention is that the illustrative verses appearing as examples in the whole work are his own compositions. They glorify the ideals and adventures of the epic hero Śrīrāma.

The other works of Yajñeśvara Dīxita are Alaṅkārasūryodaya, Alaṅkāraratnākara, Kāvyaprakāśa-tīka. This versatile writer has also composed 'Śāstracūḍāmaṇi', which is a critique on Tattvacintāmaṇi of Gangeśopādhyāya. But, unfortunately the works of Yajñeśvara-Dīxita remained unpublished for a long time. Due to tireless efforts of Dr. T. V. Satyanarayana, this precious work on Alaṅkāraśāstra is able to reach the lovers of literature.

Vidwan Dr. T. V. Satyanarayana richly deserves our appreciation for his endeavour to collate the manuscripts from Adyar Library, Chennai, and other libraries of our country. The Vice-Chancellor of Mysore University Prof. M. L. Madaiah, who has been the source of inspiration for bringing out the very rare works of Sanskrit, richly deserves our deep gratitude. Thanks are due to the Registrar Prof. V. G. Talvar, Deputy Registrar Sri Poornadanda, our finance officer Sri Mahadevaswamy, Mr. Siddegowda Director, University Printing Press and other officials of the University who have extended their helping hand in the pursuit of academic activities of the Institute.

I acknowledge the sincere efforts of 'Samskrita Sahitya Sadana Printing Press' in bringing out this book attractively in time.

(Mrs.) Dr. H. P. DEVAKI
Director
Oriental Research Institute
Mysore

14-7-1997

# प्रस्तावना

महदिदं प्रमोदस्थानं यत् अलङ्काररराघवाख्योऽयं ग्रन्थः प्रकाशं नीयत इति। एतादृशाः नैकविधाः ग्रन्थाः प्राच्यविद्यासंशोधनालयात् प्रकाशिताः इति च। विदितमेव सर्वेषाम् अयं संशोधनालयः आशतवर्षेभ्यः त्र्यशीत्यधिकशतसंख्याकान् (183) ग्रन्थान् प्राकाशयत् इति। अयं च चतुरशीत्यधिकशतसंख्याकः (184) इदानीं प्राकाश्यं नीयते।

सन्ति चास्मिन् ग्रन्थालये एकादश संख्याकाः विद्वांसः। ते च भारते सञ्चार्य हस्तप्रतीः सङ्गृह्णन्ति। सङ्गृहीतानां हस्तप्रतीनां रक्षणं अत्र क्रियते। मुख्याः सर्वजनोपयुक्ताः ग्रन्थाः ये वर्तन्ते तान् ग्रन्थान् विद्वांसः सम्पादयन्ति। विद्वद्भिः सम्पादिताः ग्रन्थाः अस्मात् संशोधनालयात् प्रकाशं नीयन्ते।

प्रकृते प्रकाशपदं नीयमानोऽयम् अलङ्काररराघवाख्यो ग्रन्थः। अस्मिन् ग्रन्थे भागद्वयं वर्तते। द्वितीयभागः षड्वर्षेभ्यः प्रागेव मुद्रितः। प्रथमः भागः इदानीं प्रकाशपदं नीतः।

ग्रन्थस्यास्य रचयिता यज्ञेश्वरदीक्षितः कविः। स तु स्वग्रन्थे स्वयमेव स्वनाम निर्दिष्टवान्। अयं च कविः अलङ्कारशास्त्रे तथा न्यायशास्त्रे च प्रवीणः। 'भगवतः रामस्य स्वप्नप्रेरणया ग्रन्थोऽयं मया रचितः' इति कविः स्वस्यानुभवं स्वयमेव ग्रन्थे प्रकटीकरोति। यथा—

रामाज्ञया स्वप्ननिरूढया मे
विनिर्मितेऽलङ्कृतिराघवेऽस्मिन्।

न युक्तिदौर्बल्यमुदाहृतीनां
न मान्यमित्यादरयन्तु सन्तः ॥७॥

अयं च कविः रामभक्तः। रामानुग्रहपात्रं च। समग्रग्रन्थे सीतारामयोः एव नाम स्मरति। दृष्टान्तत्वेन तावेव स्वीकरोति। राम-नामाङ्कितत्वादेव अय ग्रन्थः सर्वैः आदरणीयः इति कविः स्वाहङ्कारं खण्डयति। यथा—

सम्भवत्स्वपि दोषेषु रामनामाङ्कनादिह।
ग्रन्थे सुपुरुषैः सम्यक् युज्यते कर्तुमादरः ॥८॥

अनेन स्वकृतग्रन्थेन न केवलम् अलङ्कारशास्त्रज्ञानम् अपि तु वर्गादिप्रयोजनञ्चास्तीति वदति। यथा—

"तथाहि अलंकारशास्त्रेण गुणदोषालंकारस्वरूपे निरूप्यमाणे वेदेऽपि सालंकारनिर्दोषार्थज्ञानं फलति। तेन वेदार्थानुष्ठाने स्वर्गादिसिद्धिः प्रयोजनम्।"

श्रीरामभक्तोऽयं कविः नायकनिरूपणसन्दर्भे एवं वदति—

श्रीरामचन्द्रं स्वकृतेः कवीशः
यो नायकं नायकमातनोति।
स एव सैवात्र कृतिश्च धन्या
तस्यैव लोके सफलं च जन्म ॥५३॥

काव्यप्रकरणे वृत्तिनिरूपणसन्दर्भे लक्षणावृत्तेः लक्षणकथनावसरे एकावलीकारोक्तं काव्यप्रकाशिकाकारोक्तं साहित्यचिन्तामणिकारोक्तं

शालिकनाथोक्तं तत्त्वचिन्तामणिकारोक्तं च लक्षणालक्षणम् अनूद्य खण्डयति । एतैः सर्वैरप्युक्तं लक्षणम् असमीचीनमित्युक्त्वा स्वमतमेवं निरूपयति — 'गुणयोगनिमित्तत्त्वे सति उत्तमकाव्यत्वाप्रयोजक-प्राधान्यवत्त्वे सति परत्र परशब्दस्य प्रयोगे लक्षणा' इति ।

महाकाव्यप्रबन्धनिरूपणप्रकरणे महाकाव्यलक्षणमेवं निरूपयति कविः

'नगरार्कशैलचन्द्रार्कोदयोद्यानजलक्रीडामधुपानरतोत्सवविप्र-लम्भविवाहकुमारोदयमन्त्रदूतप्रयाणादिनायकाभ्युदयरूपाष्टादशवस्तु-वर्णनात्मकत्वं महाकाव्यत्वम्' इति ।

नाट्यप्रकरणे नाटकं प्रकरणं भाणः प्रहसनं डिमः व्यायोगः समवकारः वीथी अङ्कः ईहामृगः इति यानि दशरूपकाणि प्रसिद्धानि तेषां समेषामपि संक्षेपेण सुन्दरतया लक्षणानि कथितानि ।

मुखसन्धिः प्रतिमुखसन्धिः गर्भसन्धिः विमर्शसन्धिः निर्वहण-सन्धिः इति ये प्रसिद्धाः पञ्च सन्धयः तेषां लक्षणं स्वरसतया संक्षेपेण नाट्यप्रकरणे निरूपितम् ।

चक्षुप्रीतिर्मनस्सङ्कल्पप्रलापजागरकार्श्यारतिलज्जात्यागसञ्ज्वरोन्माद — मूर्च्छनमरणानीति द्वादशावस्थाः प्रसिद्धाः । रसप्रकरणे एतासां द्वादशा-वस्थानां स्वस्वरूपं सोदाहरणं प्रत्येकं हृदयङ्गमतया निरूपितम् । गुणानां सम्यग्विवेकाय दोषप्रकरणे काव्यदोषाः निरूपिताः । शब्ददोषाः अर्थ-दोषाश्च प्रत्येकं सदृष्टान्तं विवृताः ।

काव्यगुणान् एकत्र सङ्गृह्य 'बहुविधाः गुणाः वर्तन्ते' इति उक्त्वा श्लेषप्रसादादि त्रयं विंशति (2) गुणानामपि विवरणं प्रत्येकं सदृष्टान्तम् उपपादितम् ।

एवं गुणप्रकरणान्तः प्रथमः भागः ।

द्वितीयभागे अलङ्कारसामान्यलक्षणमुक्त्वा षड् शब्दालङ्काराः एकोनचत्वारिंशदधिकद्विशतार्थालङ्काराश्च (239) निरूपिताः ।

एतादृशमत्यपूर्वं सर्वोपयुक्तं सुज्ञेयं सुमधुरम् अलङ्कारराघवाख्यं ग्रन्थं निर्माय राराज्यतेऽयं यज्ञेश्वरदीक्षितः ।

ग्रन्थस्यास्य संशोधकः सम्पादकश्च विद्वान् डा. टि.वि सत्यनारायणः। स तु न केवलं ग्रन्थमिमं सम्पादितवान् किन्तु अध्येतॄणां आनुकूल्याय तत्र तत्र आवश्यकसन्दर्भे टिप्पणीश्च रचितवान् । महता प्रयत्नेन वैदुष्यपूर्णतया च सम्पादनकर्मानेन व्यधायि ।

अयमलङ्कारशास्त्रे च निपुणः । एतेन विद्वत्परीक्षयोः तथा एम्. ए. परीक्षायां च प्रथमस्थानं प्राप्य सुवर्णपदकानि प्राप्तानि । अनेकभाषणस्पर्धासु भागमूढ्वा बहुमानं प्राप्तवान् । अनेकानि लेखनानि संस्कृतकर्णाटकोभयभाषयोः अनेन लिखितानि मुद्रितानि च । अनेक–धार्मिकसंस्थासु उपन्यासाः अनेन कृताः । अस्य विद्वत्तां तथा प्रतिभां च दृष्ट्वा विविधसङ्घसंस्थाः 'प्रतिभापटुः' 'वेदसूक्तविद्यासागरः' इति प्रशस्तिप्रदानेन इमं पुरस्कृतवत्यः ।

अन्यच्च प्रमोदस्थानं यत् पिहेच्. डि. पदवी अपि अनेन स्वीकृता इति ।

एतादृशाः विद्वांसः अस्यां संस्थायां कर्म कुर्वन्ति इति वक्तुं सन्तुष्यति मे मनः । अनेन महाभागेन सम्पादितेन अलङ्कारराघवेण विद्वज्जनाः तोषं प्राप्नुवन्तु इत्याशासेऽहम् ।

अस्याः संस्थायाः इदानीन्तननिर्देशिकामहाभागा डा. हेच्. पि. देवकी । एषा महाभागा शास्त्रज्ञा सुसंस्कृता विद्वत्प्रिया च । अलङ्कारशास्त्रे प्राप्तविद्वत्पदा । मैसूरुविश्वविद्यानिलयस्य संस्कृतविभागे मुख्या च । स्वभावसरला इयं महाभागा सम्पादनादिकर्मसु विदुषां विशेषेण प्रोत्साहदायिनी च । अस्याः अधिकारावधौ नैकविधाः ग्रन्थाः सहृदयहस्तं प्राप्नुयुः इति च आशासेऽहम् ।

सुधीविधेयः

पण्डितरत्नम् वेदान्तभूषणम् विद्यावाचस्पतिः
वेदान्तसमर्थः सच्छास्त्रविचक्षणः न्यायवेदान्तविद्वान्
आर्. जि. माळगी, एम्. ए.
उपनिर्देशकः
प्राच्यविद्यासंशोधनालयः

दिनाङ्कः 28-7-97
मैसूरु-5

## उपोद्घातः

सहृदयरञ्जकस्य काव्यस्य स्वरूपकथनशास्त्रम् अलङ्कारशास्त्रम् साहित्यशास्त्रम् इत्यादिशब्दैः व्यवह्रियते । तस्मिन् शास्त्रे काव्यस्य सर्वे विषयाः भरतादारभ्य जगन्नाथपर्यन्तम् अतिसूक्ष्मतया निरूपितास्सन्ति । अनेके आलङ्कारिकाः शास्त्रेऽस्मिन् अनेकान् ग्रन्थान् रचयामासुः । परं तेषां ग्रन्थेषु अनेके ग्रन्थाः अद्यापि अप्रकटिताः मातृकास्वेव सन्तीति चिन्तनीयो विषयः । तादृशेषु ग्रन्थेषु अलङ्कारराघवनामकग्रन्थोऽप्येकः । तस्य प्रकाशनमिदानीं संपन्नमिति तु मोदावहो विषयः ।

## ग्रन्थकारस्य परिचयः

अलङ्कारराघवस्यास्य ग्रन्थस्य कर्ता यज्ञेश्वरदीक्षितः । स्वयमेव ग्रन्थकारः स्वनाम ग्रन्थमध्ये निर्दिशति । शब्दालंकारनिरूपणानन्तरं शब्दालंकारप्रकरणसमाप्तिवाक्ये— इति श्रीचरकूरिकोण्डुभट्टोपाध्यायतनययज्ञेश्वरदीक्षितेन तिरुमलयज्वप्रियसोदरेण विरचिते अलङ्कारराघवे शब्दालंकार—निरूपणं सम्पूर्णमिति कथितवान् । अनेनेदं निश्चितं यत् कृतेरस्याः रचयिता यज्ञेश्वरदीक्षितः पिता कोण्डुभट्टउपाध्यायः तिरुमलयज्वाऽस्य सोदरः आन्ध्रप्रदेशस्थः चरकूरिनामकः ग्रामः जन्मभूमिरस्येति[1] च ।

---

[1] i) अलङ्कारराघव by Cerukuri Yajnesvara Diksita, son of Kondubhatta and brother of Tirumala Yajvan, C. 1600 A.D.

[New Catalogus Catalogorum Vol. I.P. 296]

ii) 'The Author is the son of Cerukuri Kondubhatta and nephew of the famous Lakshmidhara, as a commentator of his son's 'Citrabandha Ramayana' composed in A.D. 1635.

यज्ञनारायण[1] इति नामान्तरमप्यस्यासीत्। षड्भाषाचन्द्रिकाकारः[2] लक्ष्मीधरः अस्य यज्ञेश्वरदीक्षितस्य सम्बन्धी[3]। लक्ष्मीधरोऽयं कोण्डुभट्टस्य [4]शिष्योऽप्यासीत्। यज्ञेश्वरदीक्षितस्य पुत्रः वेङ्कटेश्वरः। स च महान् कविरासीत्। 'चित्रबन्धरामायणम्' नामकः शब्दालङ्कारप्रधानः काव्यग्रन्थः अनेन रचित इति ग्रन्थकारवचसैव[5] ज्ञायते।

---

He should have lived in 17th Century. [M. Krishnamachari Op Cit, p. 640] [Descriptive Catalogue of Sanskrit manuscripts, Adayar Library vol-v Madras p 516-517 ]

[1] 'This Yajnesvara Diksita was otherwise known as Yajnanarayana also and under no. 3774 another work of this author has been already described. [A Descriptive Catalogue of the Sanskrit manuscripts, Tanjore vol-ix, p. 3975-3978]

[2] षड्भाषाचन्द्रिका प्राकृतव्याकरणम्—by Lakshmidhara-Burnell 43b. Oppert 3237-5689, 8308-II 3077 Rice 26
[Catalogus Catalogorum Part-I p 679]

[3] i) अलङ्कारराघवः—alam. by Cerukuri Yajnesvara Dixita. son of Cerukuri Kondubhatta and brother of Tiruvala Yajvan and a nephew of Lakshmidhara. [New Catalogus Catalogorum – University of Madras, vol-I p. 402]

ii) Yajnesvara was the son of Kondubhatta and nephew of Lakshmidhara of Cerukuri family. [HOCSL by M K.]

[4] लक्ष्मीधरः —son of Yajnesvarabhatta pupil of Kondubhatta (Shadbhashachandrika) [Catalogus Catalogorum Part-I p. 538]

[5] i) 'सद्भावेङ्कितबन्धुभूषचतुरैः' इति चक्रबन्धोदाहरणपद्य एवमुक्तम् — 'अत्र कविकाव्यनामनी निबद्धे। वेङ्कटेश्वरः कविः। बन्धरामायणम्। अस्मत्पुत्रवेङ्कटेश्वरकृतचित्रबन्धरामायणस्थाः चित्रबन्धाः एते' इति। (p. 16)

ii) चित्रबन्धरामायणम्—Kavya by Venkatesha Kavi-Burnell 158b Oppert-II. 1750, 3332 [Catalogus Catalogorum Part-I p.187]

यज्ञेश्वरोऽयं स्वपुत्रकृतस्य चित्रबन्धरामायणस्य व्याख्यामेकां[1] कृतवानस्ति। एषोऽप्यंशः अस्यैव वचनेन विज्ञायते। एवमेव अन्तस्साक्ष्यं बहिस्साक्ष्यं च अनुसृत्य अनेके ग्रन्थाः रचिताः इति ज्ञायते। अलङ्कारशास्त्रे अलङ्कार-राघवम्, अलङ्कारसूर्योदयः, अलङ्काररत्नाकरः, काव्यप्रकाशटीका चेति इतराः कृतयः[2] एतस्य। अनेन साहित्यरत्नाकरः[3] इत्यन्यः कश्चन

---

iii) चित्रबन्धरामायण—Kavya in 6 sargas comosed in 1635 A.D., by Venkatesha Kavi son of Yajnesvara Dixita and grandson of Cerukuri Kondubhatta, Burnell 158b. Oppert II 1750, 3332. TD3772-73 [New Catalogus Catalogorum vol-vii p. 40]

[1] i) 'रामं देवं धामायातम्' इति कङ्कणबन्धोदाहरणपद्ये एवमुक्तम् —'चित्रहारादि-बन्धविशेषाः चित्रबन्धरामायणे एव द्रष्टव्याः। एतेषामुद्धारप्रकारः अस्मत्कृत-चित्रबन्धरामायणव्याख्यायां द्रष्टव्यः' इति। (p. 17)

ii) He commented upon his son's 'Citrabandharamayana' [Descriptive Catalogue of Sanskrit manuscripts vol-ix P. Nos. 3975-3978.

iii) As a commentator of his son's 'Chitrabandharamayana' composed in A.D. 1635. (Descriptive Catalogue of Sanskrit manuscripts, Adyar Library, vol-v. p. 516-517).

[2] i) He wrote 'Alankararaghava', 'Alankarasuryodaya' and a commentary on 'Kavyaprakasha' and lived about 1600 A.D. (History of classical sanskrit literature by M Krishnamachari, p. 801)

ii) अलङ्कारसूर्योदयः — by Cerukuri Yajnesvara Dixita son of Cerukuri Kondubhatta, (N.C.C. vol-I p. 299)

iii) अलङ्काररत्नाकरः — alam by Yajnanarayana etc. (N.C.C. vol-I p. 296)

iv) काव्यप्रकाशटीका—by Yajnesvarabhatta etc. (N.C.C. vol-iv) (यज्ञेश्वरदीक्षितस्य—'यज्ञेश्वरभट्ट' इत्यपरं नाम आसीदित्यनेन प्रमाणेन ज्ञायते)

[3] Krishnayajvan's 'Raghunathabhupaliyam' as a similar work illustrating the greatness of 'Raghunatha naik' who ruled at

साहित्यशास्त्रग्रन्थः सुरचितः इत्यपि ज्ञायते । **शास्त्रचूडामणिः** इति तर्क-ग्रन्थः **विवरणोज्जीविनी** इति शास्त्रचूडामणिग्रन्थस्य व्याख्यानात्मकः ग्रन्थश्च एतेन कृतः इति अस्य वचनेनैव परिज्ञायते । शास्त्रचूडामणिः — गङ्गेशोपाध्यायेन विरचितस्य 'तत्त्वचिन्तामणि' नामकग्रन्थस्य खण्डनात्मकः ग्रन्थः । तदुक्तं ग्रन्थकारेणैव अलङ्काररराघवे तत्र तत्र—

१) काव्यप्रकरणे अभिधालक्षणकथनसन्दर्भे 'तस्मात् प्राथमिकस्य व्युत्पत्त्यनुरोधात कार्यान्विते स्वार्थे अभिधेति सिद्धम् । प्रपञ्चस्तु अस्मत्कृते 'तत्त्वचिन्तामणिखण्डने शास्त्रचूडामणौ' द्रष्टव्यः इति ।

२) काव्यप्रकरणे लक्षणालक्षणकथनसमये...... शब्दात् व्यापार-विशेषं विना संबन्धो लक्षणेत्यपि परमार्थ इत्यपि 'तत्त्वचिन्तामणिकारः' इति चेन्मैवम । ......' मुख्यतात्पर्यस्यैव वृत्तित्वोपपत्तौ शक्तेरप्युच्छेदापत्तिरिति दूषणविस्तरः शास्त्रचूडामणौ द्रष्टव्यः' इति ।

३) मङ्गलाचरणं युक्तमिति समर्थनसमये उपोद्घातप्रकरणे — 'प्रपञ्चस्त्वस्मत्कृतशास्त्रचूडाणिविवरणोज्जीविन्ययोः द्रष्टव्यः' इति ।

४) उपोद्घातप्रकरणे अध्ययनविधिरेव अलङ्कारशास्त्रकर्तव्यताबोधकं मूलप्रमाणमवगन्तव्यमिति कथनसमये — 'विवरणोज्जीविन्यां तृतीयवर्णके

---

Tanjor at the end of the 17th century. There is Commentary by Sudhindra likewise are 'Sahityaratnakara' and 'Alankararatnakara' of Yajnanarayana. (Histry of classical Sanskrit Literature by M. Krishnamachari. p. 801)

अस्माभिः बहुविधा निराकृतत्वात्' इत्युक्तम् । तत्रैव पुरतः पुनः — 'विवरणोज्जीविन्यां प्रत्यपादीति द्रष्टव्यम्' इत्युक्तम् ।

५) अर्थालङ्कारप्रकरणे तद्गुणालङ्कारे चित्रवर्णं न रूपान्तरमिति कथनवेलायामेवमुक्तम्— 'वस्तुतस्तु चित्रं न रूपान्तरमिति विवरणोज्जीविन्यामुक्तं द्रष्टव्यम्' इति ।

६) अर्थालङ्कारप्रकरणे असङ्गत्यलङ्कारे—'तत्रापि निःशब्दवस्वरूपफलं कर्तृगतमेवेति न क्रियाफलयोः भिन्नदेशत्वमित्यस्मत्तत्वचिन्तामणिखण्डने शास्त्रचूडामणौ प्रतिपादितत्वात्' इत्युक्तम् ।

एवमेतैः ग्रन्थोक्तग्रन्थकारवचनैरेव तत्त्वचिन्तामणिग्रन्थस्य खण्डनात्मकः 'शास्त्रचूडामणिः' 'विवरणोज्जीविनी' इति तट्टीका च यज्ञेश्वरकर्तृकेति निश्चितं भवति ।

महाकाव्यप्रबन्धनिरूपणसमये ग्रन्थकारेण यज्ञेश्वरदीक्षितेन—'पद्यकाव्यं रघुवंशास्मत्कृताष्टभाषारामायणादि । असर्गबन्धमपि काव्यमिष्यते । असर्गबन्धं वंशस्थरामायणस्तोत्ररत्नाकरादि । गद्यपद्यमयं चम्पूरित्यभिधीयते । चम्पूकाव्यमस्मत्कृतचम्पूरत्नादि । गीतगोविन्दास्मत्कृतसङ्गीतराघवादिकमपि चम्पूकाव्यभेद एव इत्युक्तमस्ति । एतदनुसारात् 'अष्टभाषारामायणम्' नामकं पद्यकाव्यं, 'वंशस्थरामायणम् स्तोत्ररत्नाकरः' इति असर्गबन्धरूपस्तोत्रद्वयं, 'चम्पूरत्नम्, सङ्गीतराघवम्' इति चम्पूकाव्यद्वयं च यज्ञेश्वरदीक्षितः रचितवानस्तीति ज्ञायते ।

अद्भुतरामः इति नाटकमप्येकमनेन सुनिबद्धमिति अलङ्काररराघवे उद्धृतैर्वाक्यैरवगम्यते। एतन्नाटकं नाट्यप्रकरणस्य उदाहरणरूपं नाटकम्। विद्यानाथेन यथा प्रतापरुद्रीये नाटकप्रकरणस्य नाटकमेकमुदाहरणत्वेन निर्मितं तथैव अनेनाऽपि कृतमिति ज्ञायते। अस्मिन् नाटके राम एव नायकः। सीतैव नायिका। रामस्य पराक्रमातिशयः सम्यक् वर्णितः अत्र। 'अद्भुतराम' नाटकस्य कर्ता यज्ञेश्वरदीक्षितः इत्यत्र ग्रन्थप्रमाणमेवमस्ति—

नाटकप्रस्तावनायां सूत्रधारः एवं वदति—

१) विनिर्मितं श्रीचरकूरिकोण्डश्रीवरेण्ययज्ञमौलिना।

रसज्ञरम्यरसपोषभूषितं प्रयुज्यतामद्भुतरामनाटकम्॥ (सहर्षम्)

अस्मदभिनयकौशलानुरूपमेव नाटकमभ्यनुज्ञातं सामाजिकैः। यत्र च—

श्रीरामभक्तिभाजां चेतसि रमणीयमखिललोकानाम्।

अत्यद्भुतं चरित्रं विनिबन्धं साधु रामचन्द्रस्य॥ इति।

२) नाटकसमाप्तौ—'इति श्रीचरकूरिकोण्डुभट्टोपाध्यायतनययज्ञेश्वरदीक्षितेन तिरुमलयज्वप्रियसोदरेण विरचिते अलङ्काररराघवे दशरूपप्रकरणं सम्पूर्णम्' इत्युक्तम्। अतः 'अद्भुतरामनाटककर्ता यज्ञेश्वरदीक्षित' इत्यवगम्यते।

## 'अलङ्काररराघवम्' इति नमकरणौचित्यम्

ग्रन्थस्यास्य 'अलङ्काररराघवम्' इति नाम अङ्कितम्। अत्रापि ग्रन्थकारवचनमेव प्रमाणम्। उपोद्घातप्रकरणस्य आरम्भे—

रामाज्ञया स्वप्ननिरूढया मे
विनिर्मितेऽलंकृति राघवेऽस्मिन् ।
न युक्तिदौर्बल्यमुदाहृतीनां
न मान्यमित्यादरयन्तु सन्तः ॥ इत्युक्तम् ।

तथा —शब्दालङ्कारप्रकरणस्यान्ते—

रामाङ्कितं जगति यः शब्दालङ्कारजातमाद्रियते ।
सोऽयं विश्रुतशब्दो भवति दिगन्तेषु विश्रुतः पुरुषः ॥

इत्यप्युक्तत्वात् स्वप्नकृतभगवद्रामाज्ञानुसारेणैव ग्रन्थरत्नमिदम् अलङ्कार-राघवम् इति विरचितमिति ज्ञायते । अनन्यरामभक्तोऽयं ग्रन्थे सर्वत्र स्वभक्तिमुदाहरणेषु समासिवाक्येषु च प्रदर्शयति । दिङ्मात्रमुदाह्रियते ।

ग्रन्थारम्भे मङ्गलपद्येषु पद्यद्वयं यथा—

१) आरक्षकं भक्तजनालयानाम्
अधीश्वरञ्चावनिमण्डलानाम् ।
आराध्यदेवं निखिलासुराणां
धानुष्कमेक हृहि धारयामः ॥

२) सपङ्कापि कवेर्वाणी हरिनामांकिता यदि ।
सादरं गृह्यते सद्भिः शक्तिमुक्तान्विता यथा ॥

अर्थालंकारप्रकरणस्यान्ते—

३) अर्थालङ्कारमयं प्रकरणमेतज्जगत्सु यः पठति ।
रामप्रसादतोऽयं भुवनालङ्कारभावमाप्नोति ॥

४) वाक्पूजयालंकृतिराघवाख्यया
मदीयया दुष्करयान्यपण्डितैः ।
सलक्ष्मणोऽयं परिवारवेष्टितो
प्रीणातु रामः सह सीतया सदा ॥

इत्युक्तवान् । एतेन परमात्मनि सीतारामे अचञ्चला भक्तिरासीदस्येति निश्चितं भवति । एतस्मादेव कारणादयं सर्वाण्युदाहरणानि रामपरत्वेनैव रचयामास ।

नायकगुणवर्णनसमये—रामं स्तौति

रामचन्द्रसुगुणानुवर्णने
संत्रसन्ति निगमाश्चलान्यपि ।
भारती मम कथं प्रवर्तते
तत्र मेऽतिमहदेव साहसम् ॥ इति ।

नायकप्रकरणसमाप्तौ रामप्रशंसम् एवं करोति ।

श्रीरामचन्द्रं स्वकृतेः कवीशः
यो नायकं नायकमातनोति ।
स एव सैवात्र कृतिश्च धन्या
तस्यैव लोके सफलं च जन्म ॥ इति ।

एषः यज्ञनारायणः रामभक्तस्य हनूमतः अनन्यभक्तोऽप्यासीत् । अत एव अस्य ग्रन्थस्य आरम्भिकं मङ्गलपद्य हनुमत्संबन्धि एव विद्यते । तद्यथा—

सञ्जातं स्फुटमञ्जनापरिणमद्गर्भान्तरालान्तरं
किञ्चिद्वस्तु वरेण्यमस्तु सततं वः श्रेयसे भूयसे ।
मार्ताण्डग्रसने प्लुतिं कृतवतो यस्य प्रचण्डात्मनः
तेजोवैभवसम्भवेन भुवने सर्वं विधूतं तमः ॥ इति ।

## अस्य कालः

असौ ग्रन्थकृत् स्वकीये ग्रन्थे दण्डी-रुद्रट-वामन-मम्मट-रुय्यक-राजशेखर-विद्यानाथ-विद्याधरादीनां नामान्युल्लिखति । मम्मटादीनामलङ्कार-लक्षणान्यनूद्य विमृश्य खण्डयति । तत्र तत्र रसार्णवसुधाकरकारस्य शिङ्गभूपालस्य साहित्यचिन्तामणिकारस्य वीरनारायणस्य च मतान्यनूद्य खण्डयति । केषुचिदलङ्कारेषु मम्मटविद्यानाथादीनां लक्षणान्यपि अङ्गीकरोति । प्रतापरुद्रीयरत्नापणव्याख्यातुः कुमारस्वामिनः टीकामपि विशेषतः अनुसरति । अत एव एनेभ्योऽप्यर्वाचीनोऽयमिति प्रतिभाति । वीरनारायणानन्तरं स्थितानामालङ्कारिकाणां नामानि न सूचयत्ययम् । अतः वीरनारायणान्तरमयं भवेदित्यूह्यते । वीरनारायणेन 'साहित्यचिन्तामणिः'[1] नामकः ग्रन्थः रचितोऽस्ति । सोऽप्यप्रकटित एवास्ति अधुनाऽपि । वीरनारायणस्य समयः क्रि.श. पञ्चदशशताब्द्याः अदिभागः[2] इति विद्वद्भिः निश्चितः । अस्य यज्ञेश्वर-

---

[1] Sahityacintamani by Viranarayana.
(catalogus Catalogorum, Part-I p. 715)

[2] साहित्यचूडामणि (it is called as साहित्यचिन्तामणि ) in D.C. xxii. 8708 mys 304) is ascribed to Viranarayana who lived in the begining of the 15th century A.D. (History of Classical Sanskrit Literature by M. Krishnamachari, p. 8(0)

दीक्षितस्य कालविषये विदुषामभिप्रायोऽपि प्रकटितः। तदनुसारात् अयं सप्तदशशताब्द्याः प्रारम्भे[1] भवेदित्यूह्यते ।

## हस्तप्राप्तिस्थानम्

अलङ्काररराघवस्य हस्तप्रत्युपलब्धिविषये—

i) New Catalogus Catalogorum — Vol–I (University of Madras).

ii) Descriptive Catalogue of Sanskrit Manuscripts, Vol–VIII, Oriental Research Institute, Mysore.

---

[1] i) अलङ्काररराघव by Cerukuri Yajneswara Dixita son of Cerukuri Kondubhatta and brother of Tirumala Yajvan and nephew of Lakshmidhara, C. 1600 A.D. (NCC vol-I p. 402)

ii) Yajnesvara Dixita was the son of Kondubhatta and nephew of Lakshmidhara of Cerukuri family. He wrote Alankararaghava, Alankarasuryodaya and a commentary on Kavyaprakasha and lived about 1600 A.D. (History of Classical Sanskrit Literature by M. Krishnamachari, p. 801)

iii) The author is the son of Cerukuri Kondubhatta and a nephew of the famous Lakshmidhara. As a commentator of his son's 'Chitrabandha Ramayana' composed in A.D. 1635, he should have lived in 17th century. (M. Krishnamachari Op. cit. p. 640) Descriptive Catalogue of Sanskrit manuscripts in the Adyar library, vol–v p. 516–517)

iv) चित्रबन्धरामायण Kavya in 6 sargas composed in 1635 A. D. by Venkatesha Kavi son of Yajneswara Dixita and grandson of Cerukuri Kondubhatta.

(New Catalogus Catalogorum, vol–vii–p. 40)

iii) Descriptive Catalogue of Sanskrit man scripts, Vol–V, Adyar Library, Madras.

iv) Descriptive Catalogue of Sanskrit Manu- scripts, Vol-IX, Saraswati Mahal Library, Tanjore.

ग्रन्थाः प्रमाणभूतास्सन्ति ।

New Catalogue Catalogorum Vol–I

[1]पुस्तके अलङ्काररराघवस्य हस्तप्रतिर्नास्तिसूचनाऽस्ति ।

मैसूरुप्राच्यविद्यासंशोधनालयस्य (Oriental Research Institute) विवरणात्मकग्रन्थसूच्याः अष्टमसंपुटे हस्तप्रतिविषयः[2] प्रकटितः । तदनुसारात् अत्र विद्यमाना हस्तप्रतिः प्राचीनतमा ताळपत्रमयी आन्ध्र–लिपिस्था अपूर्णा च । केवलशब्दालङ्कारार्थालङ्कारभागः अस्ति । शब्दालङ्कारप्रकरणे केचन भागाः लुप्ताः । अन्ये केचन भागाः दोषयुताश्च वर्तन्ते । आक्षेपालङ्कारपर्यन्तमेव ग्रन्थस्य समुपलब्धिः । आक्षेपालङ्कारेऽपि समग्रः भागः नास्ति ।

---

1. 'अलङ्काररराघवः' by Cerukuri Yajnesvara Dixita son of Kondu-batta and brother of Thirumala Yajvan, C. 1600 A.D. Q. Rasarnava (wrongly Sabdarnava) Sudhakara and Sahityachintamani. Adyar-Burnell 54a (2Mss) M.T. 3927, 5491 Mysore. p. 296, Oppert 175 RVK 45, TD. 5132–5133. N.C.C. vol–I p. 296)

2. Descriptive Catalogue of Sanskrit Manuscripts, vol–VIII. Oriental Research Institute, Mysore. p. 498–499 and appendices p. 415

दीक्षितस्य कालविषये विदुषामभिप्रायोऽपि प्रकटितः । तदनुसारात् अयं सप्तदशशताब्द्याः प्रारम्भे[1] भवेदित्यूह्यते ।

## हस्तप्राप्तिस्थानम्

अलङ्काररराघवस्य हस्तप्रत्युपलब्धिविषये—

i) New Catalogus Catalogorum — Vol-I (University of Madras).

ii) Descriptive Catalogue of Sanskrit Manuscripts, Vol-VIII, Oriental Research Institute, Mysore.

---

[1] i) अलङ्काररराघव by Cerukuri Yajneswara Dixita son of Cerukuri Kondubhatta and brother of Tirumala Yajvan and nephew of Lakshmidhara, C. 1600 A.D. (NCC vol-I p. 402)

ii) Yajnesvara Dixita was the son of Kondubhatta and nephew of Lakshmidhara of Cerukuri family, He wrote Alankararaghava, Alankarasuryodaya and a commentary on Kavyaprakasha and lived about 1600 A.D. (History of Classical Sanskrit Literature by M. Krishnamachari, p. 801)

iii) The author is the son of Cerukuri Kondubhatta and a nephew of the famous Lakshmidhara. As a commentator of his son's 'Chitrabandha Ramayana' composed in A.D. 1635, he should have lived in 17th century. (M. Krishnamachari Op. cit. p. 640) Descriptive Catalogue of Sanskrit manuscripts in the Adyar library, vol-v p. 516-517)

iv) चित्रबन्धरामायण Kavya in 6 sargas composed in 1635 A. D. by Venkatesha Kavi son of Yajneswara Dixita and grandson of Cerukuri Kondubhatta.

(New Catalogus Catalogorum, vol-vii-p. 40)

iii) Descriptive Catalogue of Sanskrit man scripts, Vol–V, Adyar Library, Madras.

iv) Descriptive Catalogue of Sanskrit Manu-scripts, Vol-IX, Saraswati Mahal Library, Tanjore.

ग्रन्थाः प्रमाणभूताःसन्ति ।

New Catalogue Catalogorum Vol–I

[1]पुस्तके अलङ्काररराघवस्य हस्तप्रतिनासिमूचनाऽस्त ।

मैसूरुप्राच्यविद्यासंशोधनालयस्य (Oriental Research Institute) विवरणात्मकग्रन्थसूच्याः अष्टमसंपुटे हस्तप्रतिविषयः[2] प्रकटितः । तदनुसारात् अत्र विद्यमाना हस्तप्रतिः प्राचीनतमा ताळपत्रमयी आन्ध्र–लिपिस्था अपूर्णा च । केवलशब्दालङ्कारार्थालङ्कारभागः अस्ति । शब्दालङ्कारप्रकरणे केचन भागाः लुप्ताः । अन्ये केचन भागाः दोषयुताश्च वर्तन्ते । आक्षेपालङ्कारपर्यन्तमेव ग्रन्थस्य समुपलब्धिः । आक्षेपालङ्कारेऽपि समग्रः भागः नास्ति ।

---

1. 'अलङ्काररराघवः' by Cerukuri Yajnesvara Dixita son of Kondubatta and brother of Thirumala Yajvan, C. 1600 A.D. Q. Rasarnava (wrongly Sabdarnava) Sudhakara and Sahityachintamani. Adyar-Burnell 54a (2Mss) M.T. 3927, 5491 Mysore. p. 296, Oppert 175 RVK 45, TD. 5132–5133. N.C.C. vol–I p. 296)

2. Descriptive Catalogue of Sanskrit Manuscripts, vol–VIII. Oriental Research Institute, Mysore. p. 498–499 and appendices p. 415

अत्र प्रतौ—

स्वदक्षजानुस्थितवामपदं
पादोदराकल्पितवामपट्कम् ।
अपस्मृतेराहितपादमङ्गे
प्रणौमि देवं प्रणिधानवन्तम् ॥

इति [1]मङ्गलपद्यमस्ति । ततः अर्थालंकारा निरूप्यन्ते । ननु 'काव्यशोभा—हेतुरलंकार' इत्यलंकारसामान्यलक्षणमिति रुद्रटः इति ग्रन्थस्य आरम्भ भवति। वक्ष्यमाणयोः प्राकरणिकयोः विशेषप्रतिपत्त्यर्थं निषेधाभास आक्षेप-.....सर्वस्वकारः । ..... मपि विशेषं वक्तुं वक्ष्यमाणस्य यति प्रति....... इति अपूर्णभागः अन्ते दृश्यते ।

मदरास् अडयार् पुस्तकभाण्डागारे स्थिता एका [2]हस्तप्रतिस्तु संपूर्णा कर्गजपत्रमयी ग्रन्थलिपिस्था च । उपोद्घातप्रकरणतः — गुणप्रकरणं यावत् ग्रन्थभागः उपलभ्यते । परं शब्दालङ्कारप्रकरणे केचन भागाः लुप्ताः दोषग्रन्थाश्च विद्यन्ते । मध्ये अर्थालङ्कारप्रकरणं नास्ति । लुप्तमिति प्रतिभाति ।

ग्रन्थारम्भे—

सञ्जातं स्फुटमञ्जनापरिणमद्गर्भान्तरालान्नवं
किञ्चिद्वस्तुवरेण्यमस्तु सततं वः श्रेयसे भूयसे ।
मार्ताण्डग्रसने प्लुतिं कृतवतो यस्य प्रचण्डात्मनः
तेजोवैभवसम्भवेन भुवने सर्वं विधूतं तमः ॥

---

1 मङ्गलपद्यमिदं ग्रन्थकारस्य स्वकीयं पद्यं न । अन्यत्र स्तोत्रे परिदृश्यते । लिपिकारेण लिखितमिति प्रतिभाति ।

2 'Descriptive Catalogue of Sanskrit manuscripts' in the Adyar library, vol-V, 1951-517, MSS No. 1619.

इति मङ्गलं परिदृश्यते। तस्मान्निरूपिता गुणाः। इति श्रीचरकूरि-कोण्डुभट्टोपाध्यायतनययज्ञेश्वरदीक्षितेन तिरुमलयज्वप्रियसोदरेण पण्डित-सार्वभौमेन विरचिते अलङ्काररराघवे गुणप्रकरणं सम्पूर्णम् इति ग्रन्थ-परिसमाप्तिः।

तञ्जावूरुसरस्वतीमहलुपुस्तकभाण्डागारे द्वे हस्तप्रती वर्तेते। एका [1]हस्तप्रतिः देवनागरीलिप्यात्मिका कर्गजपत्रमयी सम्पूर्णाऽस्ति। अत्रापि सञ्जातं स्फुटमञ्जनापरिणमदिति मङ्गलपद्यं प्रारम्भे दृश्यते। उपोद्घात-प्रकरणतः गुणप्रकरणं यावत् समग्रः ग्रन्थभागः उपलभ्यते। अर्थालङ्कार-भागः सम्पूर्णोऽस्ति। शब्दालङ्कारभागे केचन भागाः दोषपूर्णाः वर्तन्ते। अत्र अर्थालङ्कारप्रकरणेन ग्रन्थपरिसमाप्तिः भवति। गुणप्रकरणादिकं मध्ये वर्तते। ग्रन्थान्त्यः एवमस्ति—' इति श्रीचरकूरिकोण्डुभट्टोपाध्यायतनय-यज्ञेश्वरदीक्षितेन तिरुमलयज्वप्रियसोदरेण विरचिते अलङ्काररराघवे अर्थालङ्कार-प्रकरण सम्पूर्णम्।

अर्थालङ्कारमयं प्रकरणमेतज्जगत्सु यः पठति।
रामप्रसादतोऽयं भुवनालङ्कारभावमाप्नोति॥

वाक्पूजयालङ्कृतिराघवाख्यया
मदीयया दुष्करयान्यपण्डितैः।
सलक्ष्मणोऽयं परिवारवेष्टितः
प्रीणातु रामः सह सीतया सह॥ इति।

---

[1] Descriptive Catalogue—Tanjore, vol-IX, p. 3975

तञ्जावूरुपुस्तकभाण्डागारस्य अन्या हस्तप्रतिः[1] तालपत्रात्मिका आन्ध्रलिपिमयी पूर्णा च वर्तते। ग्रन्थारम्भः ग्रन्थपरिसमाप्तिश्च सर्वोऽपि देवनागरीहस्तप्रतिवदेवास्ति।

## अस्य ग्रन्थस्य सम्पादनक्रमः

अलङ्काररराघवस्य हस्तप्रातसमुपलब्ध्यनन्तरं संपादनकार्यमारब्धं मया। प्रथमतः मैसूरुप्राच्यविद्यासंशोधनालयस्य ताळपत्रं स्वीकृत्य यथाहस्तप्रति प्रतिकृतिं लिखितवानहम्। अर्थालङ्कारप्रकरणम् अत्र असमग्रमस्तीति दृष्ट्वा मनसि चिन्ता समुद्भूता। तस्मिन्नेव समये Catalogus Catalogorum तथा New Catalogous Catalogorum इति ग्रन्थद्वयं मयाऽव-लोकितम्। तत्र मदरास् अडयार् पुस्तकभाण्डागारे तञ्जावूरुसरस्वतीमहल्-पुस्तकभाण्डागारे च हस्तप्रतयः समुपलभ्यन्ते इति दृष्ट्वा मनसि हर्षः सञ्जातः। सद्य एव मदरास्तञ्जावूरुपुस्तकभाण्डागारयोः विवरणात्मकग्रन्थ-सूच्यौ अवलोक्य हस्तप्रतिविषय संग्राहयामास। ततः मदरास्अडयार्-पुस्तकभाण्डागारात् संशोधनालयद्वारा मूलहस्तप्रतिमेवानाय्य प्रतिकृतिम् अकरवम्। ततः तञ्जावूरुसरस्वतीपुस्तकभाण्डागारात् मूलहस्तप्रतेः रचितां प्रतिकृतिं (Transcription copy) संशोधनालयद्वारा आनाययामास। परं सा प्रतिकृतिः (No. B. 5330 DST 32 Total number of pages 863) लिपिव्याकरणादिदोषयुताऽऽसीत्। पुनश्च तस्मादेव पुस्तक-भाण्डागारात् द्वयोः हस्तप्रत्योः मैक्रोफिल्मप्रतीः (Microfilm copies) आनाय्य संपादनकार्यमारब्धवान्। मदरास्हस्तप्रतौ अर्थालङ्कारप्रकरणं विना समग्रः भागः आसीत्। शब्दालङ्कारप्रकरणेऽपि केचन भागाः लुप्ताः आसन्। मैसूरुसंशोधनालयस्य हस्तप्रतौ शब्दालङ्कारप्रकरणम् अर्थालङ्कार-प्रकरणं च आहताम्। तञ्जावूरुहस्तप्रत्योः ग्रन्थः समग्रतयाऽऽसीत्। एतासां

---

[1] Descriptive Catalogue—Tanjore, vol-IX, p. 3975

हस्तप्रतीनां साहाय्यात् अस्य संपादनकार्यकरणवेलायां मनस्येकमालोचनं समुद्भूतम् । अत्र अलङ्कारप्रकरणभागः बहुविस्तृततयाऽस्ति । अतः भागम् इममेव प्रत्येकं कृत्वा भागद्वये संपादनं करणीयमिति । तदा समालोचनेयं कार्यपथे समर्पिता ।

तदनुरोधात् ग्रन्थोऽयं प्रथमद्वितीयभागयोः द्विधा विभक्तः । प्रथम–भागे उपोद्धात-नायक-काव्य-ध्वनि-रस-दोष-गुणादीनां विचाराः, द्वितीय–भागे शब्दालङ्काराणमर्थालंकरणाञ्च विषयाश्च संयोजिताः । ग्रन्थकारः ग्रन्थमध्ये अनेकेषामालंकारिकाणाम् नामान्युद्धृत्य तेषां लक्षणादिकमनुवदति । तत्र बहूनामालंकारिकाणामनेके ग्रन्थाः मुद्रितास्सन्ति । केचन ग्रन्थाः अमुद्रिताः हस्तप्रतिरूपेण विद्यन्ते । संपादनसमये संशयगमनवेलायां मुद्रित–ग्रन्थानां साहाय्य स्वीकृत्य पाठान्तरादिकमपि ऊरीकृतम् । संपादनकार्ये उपयुक्तानां हस्तप्रतीनां मुद्रितपुस्तकानाञ्च संकेतः मयैव अङ्गीकृतः । शब्दालंकारप्रकरणे दोषपूर्णाः केचन भागाः यथामति शोधिताः । केचन भागाः गत्यन्तराभावात् यथाप्रति प्रदत्ताः ।

ग्रन्थे उपरि भागे मूलं प्रदत्तमस्ति । अधोभागे पाठान्तराणि टिप्पण्यादीनि च प्रदत्तानि । मध्ये मध्ये स्वीयां बुद्धिमनुसृत्य टिप्पणीः मयैव आरचिताः । पाठान्तरादीनां टिप्पण्यादीनां सर्वेषां संख्या क्रमशः दत्ताऽस्ति । तथा इतरेषामालंकारिकाणां ( ग्रन्थकारेण अनुद्धृतानाम् ) लक्षणादीनि एकत्रैव लभ्यन्तामिति समालोच्य तानि यथावकाशमधोभागे प्रदत्तानि ।

अयं चापरो विशेषः । नाट्यप्रकरणे दशरूपकाणां निरूपणानन्तरम् उदाहरणत्वेन अद्भुतरामः इति नाटकमेकं सोदाहरणं रचितवानस्ति ग्रन्थ–कृदयम् । तदपि नाटकं प्रत्येकं पुस्तकमेव भवतु इति निश्चित्य नाट्यप्रकरणात् विभक्तं कृतम् एतदपि प्रत्येक पुस्तकरूपेण आगमिष्यति ।

## सम्पादनकार्ये उपयुक्तानां
## हस्तप्रतीनां मुद्रितपुस्तकानां च सङ्केतविवरणम्

### — हस्तप्रतिसङ्केतः —

| क्रम संख्या | हस्तप्रतिनाम | प्राप्तिस्थानम् | लिपिः | सङ्केतः |
|---|---|---|---|---|
| १ | अलङ्काररराघवम् | प्राच्यविद्यासंशोधनालयः, मैसूरु | आन्ध्रलिपिः | आ |
| २ | अलङ्काररराघवम् | अडयार् पुस्तक भाण्डागारम् मदरास् | ग्रन्थलिपिः | म |
| ३ | अलङ्काररराघवम् | सरस्वतीमहल् पुस्तकभाण्डागारम् तञ्जावूरु | आन्ध्रलिपिः | त |
| ४ | अलङ्काररराघवम् | ,, | देवनागरीलिपिः | न |

### — मुद्रितपुस्तकाणां सङ्केतः —

| क्रम-संख्या | पुस्तक नाम | मुद्रितस्थानम् | सङ्केतः |
|---|---|---|---|
| १ | काव्यप्रकाशः (मम्मटः) संकेतमधुमतीटीकायुतः | प्राच्यविद्य संशोधनालयः मैसूरु | य |
| २ | एकावली (विद्याधरः) 'तरला'टीकायुतम् | निर्णयसागरमुद्रणालयः बाम्बे | र |
| ३ | प्रतापरुद्रयशोभूषणम् (विद्यानाथः) रत्नापणव्याख्यायुतम | संस्कृतप्राकृतसीरिस् सर्वकारीयमुद्रणालयः बाम्बे | ल |
| ४ | अलङ्कारसर्वस्वम् (रुय्यकः) जयरथटीकायुतम | निर्णयसागरमुद्रणालयः बाम्बे | व |

# अलङ्काररराघवस्य संशोधनकाले संचोधनार्थं स्वीकृतानां हस्तप्रतीनां समग्रं विवरणम्

## Particulars of various Manuscripts of Alankara Raghavam utilised for Editing work

---

I Descriptive Catalogue of Sanskrit Manuscripts in the Adayar Library Vol. V—Kavya Nataka and Alankara (1951). Page: 516-517 No. 1619 XXXIX-I—14

Alankara Raghava of Yajneswara Diksta

'अलङ्काररराघवः'—यज्ञेश्वरदीक्षितकृतः

Modern paper Transcript pages 379. in good condition good medium, Grantha writing, lines 14 in a page.

Bound in Buckram. complete

Another minor treatise on poetics in general

*Beginning :*

सञ्जातं स्फुटमञ्जनापरिणमद्गर्भान्तरालान्नवं
किञ्चिद्वस्तु वरेण्यमस्तु सततं वः श्रेयसे भूयसे ।
मार्तण्डग्रसने प्लुतिं कृतवतो यस्य प्रचण्डात्मनः
तेजोवैभवसम्भवेन भुवने सर्वं विधूतं तमः ॥

रामाज्ञया स्वप्ननिरूढया मे विनिर्मितेऽलङ्कृतिराघवेऽस्मिन् ।
न युक्तिदौर्बल्यमुदाहृतीनां न मान्यमित्यादरयन्तु सन्तः ॥

*Colophon :*

इति श्रीचरकूरिकोण्डुभट्टोपाध्यायतनययज्ञेश्वरदीक्षितेन तिरुमलयज्व-प्रियसोदरेण विरचिते अलङ्काररराघवे उपोद्धातप्रकरणं सम्पूर्णम् ।

---

अथ सर्वप्रबन्धप्रतिष्ठाजीवभूततया नायको निरूप्यते । ननु नायको गुणवान् पुमानिति शब्दार्णवसुधाकरकारः ।

अदीनो धार्मिकः शूरः कृतज्ञो रूपवान् बुधः ।
तेजस्वी धैर्यगाम्भीर्यदक्षदौवार्यसंश्रयः ।
प्राज्ञश्चापि महाभागः नायकः परिकीर्तितः ।

इति साहित्यचिन्तामणिकारः ।

*Ends* :

ननु गुणानामन्तरङ्गधर्मत्वमेव युक्तम् । न हि बहिरङ्गरसधर्मत्वमन्तरङ्गबहिरङ्गन्यायादिति चेत् शब्दस्यापि रसप्रधानत्वेन रसवतीत्युपयुक्ततया शेषिभूते रसधर्मत्वमेव युक्तम् । ...... न्यायात् । तस्य च अन्तरङ्गबहिरङ्गन्यायबाधकत्वात् । एतेन सङ्घटनाधर्मत्वेन च गुणालंकाराणां व्यक्तमित्यलंकारसर्वस्वकारवचनं निरस्तम् । तस्मात् निरूपिता गुणाः ।

*Colophon* :

इति श्रीचरकूरिकोण्डुभट्टोपाध्यायतनययज्ञेश्वरदीक्षितेन तिरुमलयज्वप्रियसोदरेण पण्डितसार्वभौमेन विरचिते अलङ्काररराघवे गुणप्रकरणं सम्पूर्णम् ।

---

Many Manuscripts (Mss) of the work of known.
The author is the son of Carakuri Kondubhatta and a nephew of the famous Lakshmidhara. As a commentator of his son's 'Chitrabandharamayana', composed in A.D. 1635, he should have lived in 17th century.

[M. Krishnamachary op. cit p. 640]

11 Descriptive Catalogue of the Sanskrit Manuscripts in the Tanjore Maharaja Serfoji's, Saraswati Mahal Library, Tanjore. Vol. IX Kosa, Chandas and Alankara (1930) Page No. 3975-3978 [ORI No. XVII-170]

## अलङ्काररराघवम्

1) 5132 Alankara Raghavam
Burnell's Catalogue No. 5330. page 54. left column.

Substance—Paper; size 13×5 inches. Sheets—212 Lines—11 to a page Script—Devanagari. No. of Granthas—6050. Author—Yaj*nes*varadikshita. Complete.

*Beginning* :

सञ्जातं स्फुटमञ्जनापरिणमद्गर्भान्तरालान्नवं
किञ्चिद्वस्तु वरेण्यमस्तु सततं वः श्रेयसे भूयसे ।
मार्ताण्डग्रसने प्लुतिं कृतवतो यस्य प्रचण्डात्मनः
तेजोवैभवसम्भवेन भुवने सर्वं विधूतं तमः ॥
स्वस्थानानतिलङ्घनेन विहितं व्यालोललम्बोदरं
पूर्णान्तःपुरनूपुरध्वनिकरव्यापारलीलाद्भुतम् ।
दम्पत्योः करतालकेलिमधुरं हासास्पदं पूर्वयोः
वैतण्डाननताण्डवं व्यतनुत चण्डान्तरायव्ययम् ॥
गुरुपादाम्बुजद्वन्द्वं प्रणम्य दृढभक्तितः ।
अलङ्कारं कवीशानां कुर्वेऽलङ्काररराघवम् ॥
मनोवाञ्छितदातारं देवताचक्रवर्तिनम् ।
श्रीरामं सपरीवारमुदाहर्तुमियं कृतिः ॥
रामाज्ञया स्वप्ननिरूढया मे
विनिर्मितेऽलंकृतिराघवेऽस्मिन् ।
न युक्तिदौर्बल्यमुदाहृतीनां
न मान्द्यमित्यादरयन्तु सन्तः ॥

*End* :

॥ साधकेन संशयनिवृत्तिर्यथा ॥

दिगङ्गनाः पूर्वनृपालकीर्तौ
क्रमेण शाट्यां शिथिलीभवन्त्याम् ।
आच्छादयन्त्यद्य यशोदुकूल-
मात्मानुकूलं तव रामचन्द्र ॥

(3)

अत्र यशः एव दुकूलमिति रूपकालङ्कारे आच्छादयन्तीति साधकं प्रमाणम् । तेन यशोदुकूलयोरप्यभेदप्रतीतेः ।

*Colophon :*

इति श्रीचरकूरिकोण्डुभट्टोपाध्यायतनययज्ञेश्वरदीक्षितेन तिरुमलयज्व–प्रियसोदरेण विरचिते अलङ्काररराघवे अर्थालङ्कारप्रकरणं सम्पूर्णम् ।

अर्थालङ्कारमयं प्रकरणमेतज्जगत्सु यः पठति ।
रामप्रसादतोऽयं भुवनालङ्कारभावमाप्नोति ॥

वाक्पूजयालङ्कृतिराघवाख्यया
मदीयया दुष्करयान्यपण्डितैः ।
सलक्ष्मणोऽयं परिवारवेष्टितः
प्रीणातु रामः सह सीतया सदा ॥

Subject : Alankara Raghava

Remarks : The MS is in a fairly good condition. The author of this work is Caracuri Yajneswara Diksita. His father was Kondabhattopadhyaya and he had an elder brother by name Tirumalayajvan. This Yajnesvara Diksita was otherwise known as Yajnanarayana also and under No. 3774 another works of this author has been already described. He commented upon his son's Citrabandha Ramaynna.

This work does not seem to be available in print.

---

' अलङ्काररराघवम् '

2) 5133 ALANKARARAGHAVAM

Burnell's Catalogue No. 10547. page 45. left column.

Substance : Palm leaf.

Leaves–177. Lines–8 to a page. Script Telugu. No. of Granthas-6050. Author : Yajnesvara Dikshita. Complete Beginning, and Colophon and Subject–Same as No. 5132

Remarks ; The MS is in good condition.

III Descriptive Catalogue of Sanskrit Manuscripts—Vol. VIII
Padya, Gadya, Alankara etc.
Oriental Research Institute, Mysore (1982)

अलङ्काररराघवम्—श्रीयज्ञेश्वरदीक्षितकृतम्

1. Sl. No. E. 28379 2. Mss. No. P. 736
3. Title: 'Alankara Ragavam'
4. Author: Yajnesvara Diksita
5. Commentary if any — Nil —
6. Material: Palm leaf 7. Script : Telugu
8. Size: 38 x 3 cms. 9. Folios : 1-62
10. Lines: 7 11. Letters: 84
12. Extent of Mss. :—Inc. end of Akshepalankara.
13. Condition of the Mss : Old
14. Additional particulars: — Nil — (p. Nos. 498-499)

Sl. No. 28397 700 Ms. No. p. 736

*Beginning:* अलङ्काररराघवम्

स्वदक्षजानुस्थितवामपादं
पादोदराकल्पितवामषट्कम् ।
अपस्मृतेराहितपादमङ्गे
प्रणौमि देवं प्रणिधानवन्तम् ॥

अथालङ्काराः निरूप्यन्ते ।

*End:*

आक्षेपो द्विविधो मत इति काव्यप्रकाशकारः । वक्ष्यमाणयोः प्राकरणिकयोः विशेषप्रतिपत्त्यर्थं निषेधाभास आक्षेप इत्यलङ्कारसर्वस्वकारः । ..... मपि विशेषं वक्तुं वक्ष्यमाणस्य यत्र प्रति ..... .....

*Colophon:*

.... .... .... .... ....

(Page No. Appendices 415)

---

(3)*

## ग्रन्थे विषयनिरूपणाक्रमः

सामान्यतः अलङ्कारशास्त्रस्य लक्षणग्रन्थेषु सर्वत्र काव्यलक्षणं काव्यविभागः नाटकभेदः तत्स्वरूपं नायिकाविभागः तत्सहकारिणः देशभाषाभूषणादयः अभिधावृत्तित्रयं ध्वनिरसदोषगुणालङ्कारादयः नाट्यांशाः इति अनेके विषयाः निरूप्यन्ते । इयं तु प्राचीनसरणिः नवीनसरणिश्च । सैवानेनाप्यनुसृता ।

## अलङ्कारराघवस्य प्रथमभागस्य विषयाः निरूपणक्रमश्च

सम्पादनक्रमानुरोधात् मङ्गलाचरणविचारः अलङ्कारशास्त्रारम्भ-प्रयोजनम् उपोद्धातप्रकरणम् नायकप्रकरणम् काव्यप्रकरणम् अभिधादि-वृत्तित्रयनिरूपणम् कैशिक्यादिवृत्तिस्वरूपनिरूपणम् शय्यापाकयोः विचारः ध्वनिगुणीभूतव्यङ्ग्यमहाकाव्यप्रबन्धाख्यायिकाक्षुद्रप्रबन्धनिरूपणम् नाट्य-प्रकरणं रसप्रकरणं दोषनिरूपणं गुणप्रकरणम इति विषयविभागद्वारा विषयाः निरूपिताः सन्ति। विषयनिरूपणावसरे न्यायशास्त्र-मीमांसा-वेदान्तादिविचारानपि सन्दर्भेषु विचारयति । प्राचीनालङ्कारिकाणामभिप्रायान् अनुवदति । उदाहरणानि स्वतन्त्रतया रचितानि सन्ति । रामपरत्वेन तानि वदति कविः । अस्य शैली सुलभा । परं लक्षणनिरूपणसमये तर्कशास्त्रसरणिम् अनुसरति । न्यायमीमांसावेदान्तादिशास्त्रेषु अयं निष्णातः इति ज्ञायते । रामाञ्जनेययोः परमभक्तः असाविति ग्रन्थोदाहरणदर्शनेनावगम्यते । विशेषतः कवितानिर्माणे अस्य प्रतिभास्तीति विज्ञायते। सर्वान् विचारान् स्वप्रतिभया विचार्य विशिष्टरूपेण वदति । काव्यादीनां सुदीर्घं निरूपणमत्र विस्तृततया कृतमस्ति । अयं तु शास्त्रविचक्षणः कविपुङ्गवः विमर्शनदक्षश्च इति कथने न काप्युत्प्रेक्षास्ति ।

'अलङ्काररराघवम्' इति नामकोऽयं ग्रन्थः इदं प्रथमतया सहृदय–लोकं प्रविशतीति मोदावहो विषयः। अयं च ग्रन्थः भागद्वयेन विभक्तस्सन् सम्पादनकर्मणि स्वीकृतोऽभूत्। प्रथमभागे नायकगुणादारभ्य गुणप्रकरण-पर्यन्तमलङ्कारभागं विना विषयाः निरूपितास्सन्ति। द्वितीयभागे अलङ्कार–भागः सङ्कलितः। अत्र उदाहरणरूपेण रचितं अद्भुतराम इति नाटकं प्रत्येकं पुस्तकरूपेण सम्पादयितुं सङ्कल्पः कृतः।

द्वौ भागावपि एकस्मिन्नेव काले मुद्रणालयं प्रति प्रेषितावास्ताम्। अलङ्काररराघवम्—द्वितीयो भागः मुद्रणालये शीघ्रं मुद्रितस्सन् प्रथमभाग–प्रकाशनात् प्रागेव प्रकटितोऽभवत्। दौर्भाग्यात् प्रथमभागः अन्येन मुद्रणालयेन स्वीकृतः आसीत्। परं तत्र कतिपयैः मुद्रणक्लेशैः ग्रन्थोऽयं प्रतिनिवर्तितः। ततः अन्यं मुद्रणालयं प्रति मुद्रणार्थं कृतिरियं प्रेषिता। तत्र मुद्रिता सती इदानीं प्रकाशनमलभत। महता प्रयत्नेन ग्रन्थस्य प्रथम-भागोऽयं सहृदयहस्तं प्राविशदिति तु प्रशंसार्हो विषयः।

## कृतज्ञतासमर्पणम्

अस्य ग्रन्थस्य संशोधने सम्पादने च महान् श्रमः मयानुभूतः। परं 'क्लेशः फलेन हि पुनर्नवतां विधत्ते' (कुमारसम्भवे – ५–८६) इति कविवाण्यनुसारात् स च श्रमः अधुना आनन्दरूपेण परिणतः। एतस्य संपादनवेलायां बहवः विद्वांसः भूरि साहाय्यं कृतवन्तः। तान् प्रति कृतज्ञतासमर्पणं मदीयं कर्तव्यम्।

अस्य प्राच्यविद्यासंशोधनालयस्य प्राक्तननिर्देशकाः कीर्तिशेषाः विद्वांसः डा. जि. मरुळसिद्धय्यमहोदयाः अलङ्काररराघवस्य ग्रन्थलिपिस्थ।

मूलहस्तप्रतिमेव मदरास् अडयार् पुस्तकभाण्डागारात् संशोधनालयं प्रत्यानाय्य मां प्रति प्रादुः। तथा सम्पादनादिकर्मणि उपयुक्तसूचनाः दत्वा महोपकारम् अकुर्वन् । तञ्जावूरुसरस्वतीमहल्पुस्तकभाण्डागारात् हस्तप्रतिप्रतिकृतिं (Transcription copy) आनाययितुं तथा मूलहस्तप्रत्योः मैक्रोफिल्म-प्रतीः ( Microfilm copies ) च आनयनार्थम् एवं सम्पादितकृतिं मुद्रणालयप्रेषणे च संशोधनालयस्य प्राक्तनर्निर्देशकाः विद्वांसः डा. हेच्. पि. मल्लदेवरुमहाभागाः भूरि साहाय्यं कृतवन्तः । अस्मदीयसंशोधनालयस्य इदानीन्तन निर्देशिकाः विदुष्यः डा. हेच्, पि. देवकीमहाभागाः सम्पादन-कर्मणि प्रकाशने च बहु साहाय्यं कृतवत्यः। ग्रन्थादौ सदुक्तीः सदाशयान् च कथयित्वा प्रोत्साहितवत्यः। सम्पादितग्रन्थं मुद्रणार्थं मुद्रणालयप्रेषणविषये हस्तप्रत्यानयनादिविषये च संशोधनालयस्य उपनिर्देशकाः 'पण्डितरत्नम्' 'वेदान्तभूषणम्' इति बिरुदभाजः विद्वांसः श्रीमन्तः आर्. जि. माळगि-महोदयाः महान्तमुपकारं चक्रुः। विश्वविद्यानिलयस्य मुद्रणविभागस्थाः वयस्याः सहृदयाः श्रीनरसिंहदेसायिमहोदयाः बहु साहाय्यं दत्तवन्तः। पाठपरिष्करणपाठस्वीकरणादिसम्पादनकर्मसु वयस्याः सहृदयाः विद्वांसः प्राच्यसंशोधनपण्डितः इति बिरुदभाजः कलानिपुणाः श्रीमन्तः हेच्. शङ्कर-गणपतिफाटकमहोदयाः तथा संस्कृतभाषाविचक्षण इति बिरुदभाजः मित्रवर्याः सहृदयाः विद्वांसः श्रीमन्तः हेच्. वि. नागराजराव् महाभागाः महत्या प्रीत्या उपयुक्तास्सूचनाः दत्वा अविस्मरणीयं साहाय्यं प्राददुः। प्राक्तनसंशोधन-पण्डिताः विद्वांसः श्रीमन्तः वि. वि. नरसिंहाचार्यमहाशयाः ग्रन्थलिपि-परिचयविषये उपकृतवन्तः । मैसूरुविश्वविद्यानिलयस्य स्नातकोत्तरसंस्कृत-विभागस्य प्राक्तनमुख्याः प्राध्यापकाः विद्वांसः श्रीमन्तः एस्, रामचन्द्रराव् महाभागाः कृतिमिमां समग्रतया दृष्ट्वा हर्षिताः सन्तः संशोधनकार्ये उपयुक्ताः सूचनाश्च प्रायच्छन् ।

संशोधनालयस्यास्य सूक्ष्मचित्रग्रहणविभागस्य (Microfilm Section) चित्रग्राहकाः श्रीमन्तः सि. एस्. श्रीनिवासन्महाशयाः तथा मित्रवर्याः एस्. सुब्बरावुमहोदयाश्च हस्तप्रतीनां मैक्रोफिलमप्रतिदर्शनसमये महोपकारं कृतवन्तः। पुस्तकमुद्रणविषये मैसूरुनगरस्य संस्कृतसाहित्यसदनमुद्रणालयस्य स्वामी श्री आर्. श्रीनिवासाचार् महाभागाः तत्रत्याः कर्मकराश्च स्मरणीया एव । महान्तं क्लेशमनुभूय पुस्तकमिदं मुद्रितवन्तः। एतेषां सर्वेषां साहाय्यम् उपकारं विश्वासं च हृत्पूर्वकं संस्मरामि ।

एतान् सर्वान् प्रति कृतज्ञतासहितान् हृदयभरितान् प्रणामान् समर्पयामि ।

एवं सत्येन भागोऽयं प्रथमस्तु विचारितः ।
विश्वासो विद्यते तस्य विबुधैर्गृह्यते मुदा ॥

इति सज्जनविधेयः

प्रतिभापटुः वेदसूक्तविद्यासागरः वेदविद्यानिधिः

विद्वान् डा. टि. वि. सत्यनारायणः, एम्.ए. पिहेच्.डि,

अलङ्कारव्याकरणशास्त्रविद्वान् संस्कृतकोविदः

सहायकसंशोधकः—I

प्राच्यविद्यासंशोधनालयः, मैसूरु

# ಗ್ರಂಥಕಾರನ ದೇಶಕಾಲಾದಿವಿಚಾರ

ಅಲಂಕಾರರಾಘವವನ್ನು ಬರೆದವನು ಯಜ್ಞೇಶ್ವರ ದೀಕ್ಷಿತ. ಇವನ ತಂದೆ ಕೊಂಡುಭಟ್ಟ ಉಪಾಧ್ಯಾಯ. ತಿರುಮಲಯಜ್ವನು ಇವನ ಸಹೋದರ. ಆಂಧ್ರ ಪ್ರದೇಶದಲ್ಲಿರುವ ಚರುಕೂರಿ ಎಂಬುದು ಇವನು ಹುಟ್ಟಿದ ಊರು. ಇವನಿಗೆ ಯಜ್ಞನಾರಾಯಣ ಎಂಬುದಾಗಿ ಮತ್ತೊಂದು ಹೆಸರೂ ಇದೆ.

ಷಡ್ಭಾಷಾಚಂದ್ರಿಕಾ ಗ್ರಂಥವನ್ನು ರಚಿಸಿರುವ ಲಕ್ಷ್ಮೀಧರನು ಯಜ್ಞೇಶ್ವರದೀಕ್ಷಿತನ ಸಂಬಂಧಿ. ಬಹುಶಃ ಸೋದರಮಾವನಿರಬೇಕು. ಈ ಲಕ್ಷ್ಮೀಧರನು ಕೊಂಡುಭಟ್ಟನ ಶಿಷ್ಯನೂ ಆಗಿದ್ದನು. ಯಜ್ಞೇಶ್ವರದೀಕ್ಷಿತನ ಮಗ ವೆಂಕಟೇಶ್ವರ. ಈ ವೆಂಕಟೇಶ್ವರನು ಮಹಾನ್ ಕವಿಯಾಗಿದ್ದು ಚಿತ್ರಬಂಧ-, ರಾಮಾಯಣವೆಂಬ ಶಬ್ದಾಲಂಕಾರಪ್ರಧಾನವಾದ ಕಾವ್ಯವನ್ನು ಬರೆದಿದ್ದಾನೆ. ಈ ಕೃತಿಗೆ ಇವನ ತಂದೆಯಾದ ಯಜ್ಞೇಶ್ವರ ದೀಕ್ಷಿತನು ವ್ಯಾಖ್ಯಾನವನ್ನು ಬರೆದಿದ್ದಾನೆ.

ಯಜ್ಞೇಶ್ವರ ದೀಕ್ಷಿತನಿಂದ ರಚಿತವಾದ ಸಂಸ್ಕೃತ ಕೃತಿಗಳೆಂದರೆ—
೧. ಅಲಂಕಾರರಾಘವ ೨. ಅಲಂಕಾರಸೂರ್ಯೋದಯ ೩. ಅಲಂಕಾರ ರತ್ನಾಕರ ೪. ಕಾವ್ಯಪ್ರಕಾಶಟೀಕಾ ೫. ಸಾಹಿತ್ಯರತ್ನಾಕರ. ಇವು ಅಲಂಕಾರ ಶಾಸ್ತ್ರಗ್ರಂಥಗಳು. ಅಲ್ಲದೆ ಗಂಗೇಶೋಪಾಧ್ಯಾಯನಿಂದ ರಚಿತವಾದ ತತ್ತ್ವಚಿಂತಾ ಮಣಿ ಎಂಬ ತರ್ಕಶಾಸ್ತ್ರಗ್ರಂಥವನ್ನು ಖಂಡಿಸಿ ಶಾಸ್ತ್ರಚೂಡಾಮಣಿ ಎಂಬ ಗ್ರಂಥವನ್ನು ರಚಿಸಿದ್ದಾನೆ. ಇದಕ್ಕೆ ವಿವರಣೋಜ್ಜೀವಿನೀ ಎಂಬ ವ್ಯಾಖ್ಯಾನವನ್ನು ತಾನೇ ರಚಿಸಿದ್ದಾನೆ. ಅಷ್ಟಭಾಷಾರಾಮಾಯಣ ಎಂಬ ಪದ್ಯಕಾವ್ಯವನ್ನು, ವಂಶಸ್ಥರಾಮಾಯಣ, ಸ್ತೋತ್ರರತ್ನಾಕರ ಎಂಬ ಸ್ತೋತ್ರಕಾವ್ಯಗಳನ್ನು, ಚಂಪೂರತ್ನ, ಸಂಗೀತರಾಘವ ಎಂಬ ಚಂಪೂಕಾವ್ಯಗಳನ್ನು ಇವನು ಬರೆದಿದ್ದಾನೆ.

ಅಲಂಕಾರರಾಘವ ಗ್ರಂಥದ ಮಧ್ಯದಲ್ಲಿ ತಾನು ಬರೆದ ನಾಟ್ಯಪ್ರಕರಣದ ಲಕ್ಷಣಸಮನ್ವಯ ಹಾಗೂ ವಿವರಣೆಗಾಗಿ ಅದ್ಭುತರಾಮ ಎಂಬ ಉದಾಹರಣರೂಪ ವಾದ ನಾಟಕವನ್ನು ರಚಿಸಿದ್ದಾನೆ.

ಯಜ್ಞೇಶ್ವರದೀಕ್ಷಿತನು ಶ್ರೀರಾಮನ ಪರಮಭಕ್ತ. ಇವನು ಅಲಂಕಾರ ರಾಘವ ಗ್ರಂಥದಲ್ಲಿ ಉದಾಹರಣ ಪದ್ಯಗಳನ್ನು ಸ್ವತಂತ್ರವಾಗಿ ರಚಿಸಿದ್ದಾನೆ. ಜೊತೆಗೆ ಎಲ್ಲವನ್ನೂ ರಾಮಪರವಾಗೇ ವರ್ಣಿಸಿದ್ದಾನೆ. ಶ್ರೀರಾಮನು ತನ್ನ ಕನಸಿನಲ್ಲಿ ಬಂದು ತನಗೆ ಅನುಗ್ರಹಿಸಿದ ಕಾರಣ ಅವನ ಪರವಾಗಿಯೇ ಎಲ್ಲ ಪದ್ಯಗಳನ್ನು ರಚಿಸಿದ್ದೇನೆಂದು ಹೇಳಿಕೊಂಡಿದ್ದಾನೆ. ಇವನು ರಾಮಭಕ್ತನು ಮಾತ್ರವಲ್ಲ ಹನುಮಂತನ ಅನನ್ಯ ಭಕ್ತನೂ ಹೌದು. ಹೀಗಾಗಿ ಅಲಂಕಾರರಾಘವದ ಮಂಗಳ ಪದ್ಯವನ್ನು ಆಂಜನೇಯನ ಪರವಾಗೇ ರಚಿಸಿದ್ದಾನೆ.

ಯಜ್ಞೇಶ್ವರದೀಕ್ಷಿತನು ತನ್ನ ಅಲಂಕಾರ ರಾಘವದಲ್ಲಿ ದಂಡಿ–ರುದ್ರಟ–ವಾಮನ–ಮಮ್ಮಟ – ರುಯ್ಯಕ – ರಾಜಶೇಖರ – ವಿದ್ಯಾನಾಥ – ವಿದ್ಯಾಧರ ಮೊದಲಾದವರ ಹೆಸರುಗಳನ್ನು ಉಲ್ಲೇಖಿಸುತ್ತಾನೆ. ಮಮ್ಮಟಮೊದಲಾದವರು ಹೇಳಿರುವ ಲಕ್ಷಣಗಳನ್ನು ಅನುವದಿಸಿ ಅವುಗಳ ಮೇಲೆ ದೋಷಗಳನ್ನು ಹೇಳಿ ಖಂಡಿಸಿ ತಾನು ಮತ್ತೆ ಸ್ವತಂತ್ರವಾಗಿ ಲಕ್ಷಣಗಳನ್ನು ಹೇಳುತ್ತಾನೆ. ಕೆಲವುಕಡೆ ರಸಾರ್ಣವ ಸುಧಾಕರಕಾರ ಶಿಂಗಭೂಪಾಲನ ಮತ್ತು ಸಾಹಿತ್ಯಚಿಂತಾಮಣಿಕಾರನಾದ ವೀರನಾರಾಯಣನ ಮತಗಳನ್ನು ಖಂಡಿಸುತ್ತಾನೆ. ಕೆಲವೆಡೆ ಮಮ್ಮಟ-ವಿದ್ಯಾನಾಥಾದಿಗಳ ಲಕ್ಷಣಗಳನ್ನು ಅಂಗೀಕರಿಸುತ್ತಾನೆ. ವಿದ್ಯಾನಾಥನ ಪ್ರತಾಪ ರುದ್ರೀಯ ಗ್ರಂಥಕ್ಕೆ ಕುಮಾರಸ್ವಾಮಿಯು ರತ್ನಾಪಣವೆಂಬ ವ್ಯಾಖ್ಯಾನವನ್ನು ಬರೆದಿದ್ದಾನೆ. ಯಜ್ಞೇಶ್ವರ ದೀಕ್ಷಿತನು ಬಹುಮಟ್ಟಿಗೆ ಈ ವ್ಯಾಖ್ಯಾನವನ್ನು ತನ್ನ ಅಲಂಕಾರರಾಘವಗ್ರಂಥದ ರಚನೆಯಲ್ಲಿ ಅನುಸರಿಸಿದ್ದಾನೆ. ಹೀಗಾಗಿ ಇವನು ಇವರೆಲ್ಲರ ನಂತರದಲ್ಲಿ ಇದ್ದಿರಬೇಕೆಂದು ಊಹಿಸಬಹುದು. ವಿಶೇಷವೆಂದರೆ ಸಾಹಿತ್ಯ ಚಿಂತಾಮಣಿಕಾರ ವೀರನಾರಾಯಣನ ನಂತರದ ಆಲಂಕಾರಿಕರ ಹೆಸರುಗಳನ್ನು ಇವನು ಹೇಳುವುದಿಲ್ಲ. ವೀರನಾರಾಯಣನು ಕ್ರಿ.ಶ. 15ನೆಯ ಶತಮಾನದ ಆದಿ ಭಾಗದಲ್ಲಿ ಇದ್ದನೆಂದು ವಿಮರ್ಶಕರು ತಿಳಿಸಿದ್ದಾರೆ. ಹೀಗಾಗಿ ಯಜ್ಞೇಶ್ವರ ದೀಕ್ಷಿತನು 17 ನೆಯ ಶತಮಾನದ ಆರಂಭದಲ್ಲಿ ಇದ್ದನೆಂದು ವಿಮರ್ಶಕರು ಅಭಿಪ್ರಾಯ ಪಡುತ್ತಾರೆ.

ಅಲಂಕಾರರಾಘವ–ಭಾಗ 1ರಲ್ಲಿ ಅಲಂಕಾರಗಳ ವಿಷಯಗಳನ್ನು ಬಿಟ್ಟು ಉಳಿದ ಕಾವ್ಯಸಂಬಂಧಿ ವಿಷಯಗಳನ್ನು ನಿರೂಪಿಸಲಾಗಿದೆ. ಮಂಗಳವನ್ನು ಮಾಡುವುದರಿಂದ

ಆಗುವ ಪ್ರಯೋಜನ, ಅಲಂಕಾರ ಶಾಸ್ತ್ರದಿಂದಾಗುವ ಪ್ರಯೋಜನ, ನಾಯಕನ ಸ್ವರೂಪ, ನಾಯಕನಲ್ಲಿರಬೇಕಾದ ಗುಣಗಳು, ನಾಯಕ-ನಾಯಿಕೆಯರ ಭೇದಗಳು, ಕಾವ್ಯಲಕ್ಷಣ, ಅಭಿಧಾಲಕ್ಷಣಾ ವ್ಯಂಜನಾ ವೃತ್ತಿಗಳ ವಿಚಾರ, ಕೈಶಿಕೀ ಮುಂತಾದ ವೃತ್ತಿಗಳ ವಿಚಾರ, ವೈದರ್ಭೀ ಗೌಡೀಪಾಂಚಾಲೀ ರೀತಿಗಳು, ಶಯ್ಯಾ-ಪಾಕಗಳ ವಿಚಾರ, ಧ್ವನಿಗುಣೀಭೂತಚಿತ್ರಕಾವ್ಯಗಳ ಲಕ್ಷಣಗಳು, ಧ್ವನಿಕಾವ್ಯಪ್ರಭೇದಗಳು, ಗುಣೀಭೂತವ್ಯಂಗ್ಯಕಾವ್ಯಪ್ರಭೇದಗಳು, ಮಹಾಕಾವ್ಯ, ಪದ್ಯಗದ್ಯಚಂಪೂ ಆಖ್ಯಾಯಿಕಾಲಕ್ಷಣಗಳು, ಕ್ಷುದ್ರಪ್ರಬಂಧಗಳ ನಿರೂಪಣೆ, ನಾಟ್ಯಪ್ರಕರಣ, ರಸಪ್ರಕರಣ, ದೋಷನಿರೂಪಣೆ, ಗುಣಪ್ರಕರಣಗಳು ಇಲ್ಲಿ ಚೆನ್ನಾಗಿ ನಿರೂಪಿತ ವಾಗಿವೆ. ವಿಚಾರಗಳನ್ನು ಸಂಕ್ಷಿಪ್ತವಾಗಿ ಸುಲಭ ಶೈಲಿಯಲ್ಲಿ ನಿರೂಪಿಸುತ್ತಾನೆ. ಇಲ್ಲಿನ ಉದಾಹರಣೆಗಳೆಲ್ಲವೂ ಯಜ್ಞೇಶ್ವರದೀಕ್ಷಿತನಿಂದಲೇ ರಚಿತವಾದವುಗಳು. ಎಲ್ಲದರಲ್ಲೂ ರಾಮಸೀತೆಯರನ್ನೇ ಉದಾಹರಣೆಯಾಗಿ ತೆಗೆದುಕೊಳ್ಳುತ್ತಾನೆ. ಕೆಲವು ಪದ್ಯಗಳು ಬಹು ರಮಣೀಯವಾಗಿವೆ.

ಇವನ ಶೈಲಿ ಸರಳವೂ ಸುಂದರವೂ ಆದುದು. ಇವನು ಅಲಂಕಾರ-ನ್ಯಾಯ-ಮೀಮಾಂಸಾದಿಶಾಸ್ತ್ರಗಳಲ್ಲಿ ಉತ್ತಮ ಪಾಂಡಿತ್ಯವನ್ನು ಸಂಪಾದಿಸಿದ್ದನೆಂದು ತಿಳಿಯುವುದು. ಕಾವ್ಯಾದಿಲಕ್ಷಣಗಳನ್ನು ತಾರ್ಕಿಕ ಶೈಲಿಯಲ್ಲಿ ನಿರೂಪಿಸುತ್ತಾನೆ. ಇವನು ಮಮ್ಮಟಾದಿಪ್ರಾಚೀನರ ಅಭಿಪ್ರಾಯಗಳ ಮೇಲೆ ದೋಷಗಳನ್ನು ಹೇಳಿದರೂ ಸಹ, ತನ್ನದೇ ಆದ ಶೈಲಿಯಲ್ಲಿ ಲಕ್ಷಣಗಳನ್ನು ಪ್ರತಿಪಾದಿಸಿದರೂ ಕೂಡ ಹೊಸ ವಿಚಾರಗಳನ್ನು ಇವನು ಹೇಳಿಲ್ಲ. ಹಿಂದಿನ ಲಕ್ಷಣಕಾರರು ಹೇಳಿರುವ ವಿಷಯಗಳನ್ನೇ ತನ್ನ ಶೈಲಿಯಲ್ಲಿ ಹೇಳುತ್ತಾನೆ ಅಷ್ಟೆ. ಒಟ್ಟಾರೆ ಸ್ವತಂತ್ರವಾಗಿ ಆಲೋಚಿಸುವ ಮನೋಭಾವ ಇವನಿಗೆ ಇದೆಯೆಂದು ಹೇಳಬಹುದು.

ಮೈಸೂರಿನ ಪ್ರಾಚ್ಯವಿದ್ಯಾಸಂಶೋಧನಾಲಯ, ಮದರಾಸಿನ ಅಡಯಾರ್ ಗ್ರಂಥಾಲಯ, ತಂಜಾವೂರು ಸರಸ್ವತೀ ಮಹಲ್ ಪುಸ್ತಕ ಭಾಂಡಾಗಾರಗಳಲ್ಲಿದ್ದ ತಾಳಪತ್ರಗಳನ್ನು ಅವಲೋಕಿಸಿ ಈ ಅಲಂಕಾರರಾಘವಗ್ರಂಥವನ್ನು ಸಂಪಾದಿಸಿ ಪ್ರಕಟಿಸಲಾಗಿದೆ. ಅಲಂಕಾರರಾಘವವನ್ನು ಎರಡು ಭಾಗಗಳನ್ನಾಗಿ ಪ್ರಕಟನೆಗೆ ಅನುಕೂಲಕ್ಕಾಗಿ ಮಾಡಲಾಗಿದ್ದು ಮೇಲೆ ಹೇಳಿದಂತೆ ಭಾಗ ೧ರಲ್ಲಿ ವಿಚಾರಗಳನ್ನು

ಪ್ರತಿಪಾದಿಸಲಾಗಿದೆ. ಅಲಂಕಾರರಾಘವ ಭಾಗ ೨ರಲ್ಲಿ ಶಬ್ದಾಲಂಕಾರ–ಅರ್ಥಾಲಂಕಾರಗಳನ್ನು ವಿಶದವಾಗಿ ವಿವರಿಸಲಾಗಿದೆ. ಇಲ್ಲಿನ ಅದ್ಭುತರಾಮ ಉದಾಹರಣ ನಾಟಕವನ್ನು ಪ್ರತ್ಯೇಕವಾಗಿ ಪ್ರಕಟಿಸಬೇಕೆಂಬ ಉದ್ದೇಶದಿಂದ ಸಂಪಾದನೆ ಮಾಡುವಾಗ ಪ್ರತ್ಯೇಕಿಸಲಾಗಿದೆ. ಅಲಂಕಾರರಾಘವ ಭಾಗ–೧ ಮತ್ತು ಭಾಗ–೨ ಕೃತಿಗಳನ್ನು ಬೇರೆ ಬೇರೆ ಮುದ್ರಣಾಲಯಗಳಿಗೆ ಕೊಟ್ಟದ್ದು, ಭಾಗ–೨ ಬೇಗ ಮುದ್ರಣಗೊಂಡಿತು. ಆದರೆ ಭಾಗ–೧ ಕೆಲವಾರು ಕ್ಲೇಶಗಳನ್ನನುಭವಿಸಿ ವಿಳಂಬದಿಂದ ಮುದ್ರಣಗೊಂಡು ಇದೀಗ ಪ್ರಕಟಗೊಂಡಿದೆ.

ಅಲಂಕಾರರಾಘವ – ಮೊದಲ ಭಾಗವನ್ನು ಅನೇಕ ಅಲಂಕಾರಶಾಸ್ತ್ರ ಗ್ರಂಥಗಳನ್ನು ಅವಲೋಕಿಸಿ ಸಂಪಾದಿಸಲಾಗಿದೆ. ಸಹೃದಯ ಸಜ್ಜನಾಭಿಮಾನಿಗಳು ಪ್ರೀತ್ಯಭಿಮಾನಗಳಿಂದ ಇದನ್ನು ಅವಲೋಕಿಸಿದಲ್ಲಿ ನಮ್ಮ ಪ್ರಯತ್ನ ಸಾರ್ಥಕವಾಗುವುದು.

ಇಂತು
ಸಜ್ಜನ ವಿಧೇಯ
ವಿದ್ವಾನ್ ಡಾ|| ಟಿ. ವಿ. ಸತ್ಯನಾರಾಯಣ,
ಎಂ.ಎ., ಪಿ.ಹೆಚ್.ಡಿ.,
ಹಿರಿಯ ಸಹಾಯಕ ಸಂಶೋಧಕ
ಪ್ರಾಚ್ಯವಿದ್ಯಾಸಂಶೋಧನಾಲಯ
ಮೈಸೂರು.

# विषयानुक्रमणिका

# अलङ्कारराघवम्

प्रथमो भागः

# ALAṄKĀRA RĀGHAVAM

PART—I

॥ श्रीः ॥

[1]यज्ञेश्वरदीक्षितविरचितम्

# अलङ्काररराघवम्



[2]सञ्जातं स्फुटमञ्जनापरिणमद्गर्भान्तरालान्नवं
किञ्चिद्वस्तु वरेण्यमस्तु सततं [3]नः श्रेयसे भूयसे ।
मार्ताण्डग्रसने प्लुतिं कृतवतो यस्य प्रचण्डात्मनः
तेजोवैभवसम्भवेन भुवने सर्वं विधूतं तमः ॥ १ ॥

---

[1]मदरास् अडयार् पुस्तकागारप्रतौ अस्य ग्रन्थकर्तुः 'यज्ञनारायण-दीक्षितः' इत्यपि नामान्तरं लिखितं दृश्यते ।

[2] i) हनुमतः मङ्गळपद्यमिदम् । 'आशीर्नमस्क्रिया वस्तुनिर्देशो वाऽपि तन्मुखात्' इत्यनुसारात् अस्त्विति लोट्लकारसत्त्वात् 'आशीर्वादपूर्वक-मङ्गलमिदम् ।

ii) अत्र हनुमतः पराक्रमातिशयः व्यङ्ग्यरूपेण वर्णितः । 'अञ्जना-परिणमद्गर्भान्तरालात् सञ्जातं किञ्चिद्वस्तु' इत्यनेन हनुमानत्र विवक्षितः । 'मार्ताण्डग्रसने प्लुतिं कृतवतः तेजोवैभवसम्भवेन लोके सर्वं तमः विधूतम्' इत्यनेन तस्य पराक्रमातिशयः व्यङ्ग्यात्मना सूचितः ।

iii) पुञ्जिकस्थली नाम्नी अप्सराः शापात् वानरजन्म लब्ध्वा, कुञ्जराख्यकपिनाथस्य पुत्री भूत्वा अञ्जनेति नाम लेभे । केसरी नामकवानरः

---

[3] वः-त, अ

[1]स्वस्थानानतिलङ्घनेन विहितं व्यालोललम्बोदरं
पूर्णान्तःपुरनूपुरध्वनिकरव्यापारलीलाद्भुतम् ।
दम्पत्योः करताळकेळिमधुरं हासास्पदं पूर्वयोः
वेतण्डाननताण्डवं वितनुतां चण्डान्तरायव्ययम् ॥ २ ॥

---

तां पर्यणैषीत् । वायुः कदाचित् अस्याः रूपलावण्यात् आकृष्टः तया सह रेमे। सा अन्तर्वत्नी भूत्वा पुत्रमेकमसूत। जातमात्र एव स शिशुः उदयमानं रक्तवर्णं सूर्यबिम्बं दृष्ट्वा फलभ्रान्त्या गगनमुत्प्लुत्य अपीडयत् । इन्द्रः स्वेन वज्रायुधेन तमताडयत् । तदा तस्य हनूः वक्राभूत् । अत एव तस्य हनूमान् इति नाम प्रथितम् । मत्पुत्रः एवंभूतः इति वायुः कुपितस्सन् स्वकीयं सञ्चारमेव स्तम्भयामास। तदा इन्द्रमुखा देवाः तं सान्त्वयित्वा, हनूमतः स्वेच्छामरणं, वायुसमानं वेगं बलं च अनुगृह्य ददौ' इति कथात्र अनुसन्धेया ॥ १ ॥ (वा. रा. कि. का–६६)

[1]इदमपि आशीर्वादपूर्वकमङ्गळमेव, वितनुतामिति लोटः सत्वात्। अत्र गणपतेः ताण्डवम् अस्मदीयं महान्तं विघ्नं दूरीकरोतु इति ग्रन्थकृत प्रार्थितवान्। स्वस्थानमनतिक्रम्य लङ्घनं तेन कृतम्। तस्य ताण्डवनृत्यसमये, नूपुरध्वनिः अन्तःपुरे सर्वत्र व्याप्तः। प्राञ्चौ जायापती पार्वतीपरमेश्वरौ तदा स्वकीयकरताडनेन हसित्वा तं प्रशंसितवन्तौ। एतादृशं गजाननताण्डवमस्मदीयं विघ्नं परिहरतु इत्यभिप्रायः। वेतण्डाननताण्डवमेव विघ्नं दूरीकरोति चेत्, किं पुनर्वक्तव्यं गणपतिपराक्रमं प्रति इति भावः ॥ २॥

[1]माङ्गल्यमेवानिशमादधानं
भक्तेषु नीलारुणशुभ्रनेत्रम् ।
वपुर्दधत्कुङ्कुमभूरिलिप्तं
वियोगहीनं मिथुनं भजामः ॥ ३ ॥

[2]आह्लादयन्तीं[3] मधुरं विपञ्चीम्
आनादयन्तीमपि [4]गीतिभेदैः ।
[5]आपादयन्तीं करुणां विरिञ्चम्
आमोदयन्तीं कलयामि देवीम् ॥ ४ ॥

---

[1]अर्धनारीश्वरमङ्गळपद्यमिदं नमस्कारपूर्वकमङ्गळम् । भक्तान् प्रति पार्वतीपरमेश्वरौ सततं माङ्गल्यदायकौ । नीलारुणशुभ्रनेत्रविशिष्टौ, अनल्पकुङ्कुमलिप्तशरीरौ, वियोगरहितौ च भवतः । एतादृशौ दम्पती भजामः इति भावः । अत्र 'वियोगहीनं मिथुनम्, इति कथनात् 'पार्वतीपरमेश्वरौ व्यङ्ग्यात्मना ज्ञायेते ।

[2]सन्तोषदायिनीं वीणां विविधगीतभेदैः मधुरम् आनादयन्तीम्, करुणादायिनीं चतुर्मुखसन्तोषदायिनीं देवीं सरस्वतीं कलयामीत्यर्थः । वाग्देवतानमस्कारोऽयम् ।

---

[3] आवादयन्तीम्—त
[4] गीतभेदैः—त
[5] आवादयन्तीम्—त

[1]आरक्षकं भक्तजनालयानाम्
अधीश्वरञ्चावनि[2]मण्डलानाम् ।
आराध्यदेवं [3]निखिलासुराणां
धानुष्कमेकं हृदि[4]धारयामि ॥ ५ ॥

[5]गुरुपादाम्बुजद्वन्द्वं प्रणम्य दृढभक्तितः ।
अलङ्कारं कवीशानां कुर्वेऽलङ्काररराघवम् ॥ ॥ ६ ॥

---

[1]आरक्षकमिति—भक्तजनानाम् आलयाः, तेषां भक्तजनालयानाम्-आरक्षकं—संरक्षकमिति । अथवा भक्तजना एव आलयाः, तेषां आरक्षकमिति । भूमण्डलाधिपतिं, समस्तदेवानां पूजनीयदेवं, श्रेष्ठं धनुर्धरं हृदये ध्यायामि इति । अत्र धानुष्कम् इति पदेन धनुर्धरः श्रीरामः एव विवक्षितः । एकम् इत्यस्य मुख्यमित्यर्थः । 'एके मुख्यान्यकेवला' । इत्यमरः । 'श्रीरामं हृदि भावयामि' इत्यनुक्त्वा 'धानुष्कं धारयामि' इति वचनात् श्रीरामः इत्यर्थः व्यङ्ग्यः । 'अलङ्काररराघवमिति' ग्रन्थनामनिर्देशात् श्रीराममङ्गलमत्र उचितदेवतामङ्गलं भवति । 'धन्वी धनुष्मान् धानुष्को निषङ्ग्यस्त्री धनुर्धरः' इत्यमरः ।

[5]गुरुपादाम्बुजद्वन्द्वमिति—देवतानमस्कारानन्तरं, गुरुपादवन्दनं कर्तव्यं ततः स्वकीयकृतिरचनाविषयः वक्तव्य इति मत्वा वदति गुरुपादाम्बुजद्वन्द्वमिति

---

[2] मण्डलस्य—त

[3] निखिलामराणाम्—त

[4] धारयामः—अ

[1]रामाज्ञया स्वप्ननिरूढया मे
विनिर्मितेऽलङ्कृतिराघवेऽस्मिन् ।
न युक्तिदौर्बल्यमुदाहृतीनां
न मान्द्यमित्यादरयन्तु सन्तः ॥ ७ ॥

---

—ज्ञानप्रदातुः गुरोः पादकमलद्वयं दृढभक्त्या नमस्कृत्य, कवीन्द्राणाम् अलङ्कारप्रायम् अलङ्काररराघवमिति ग्रन्थमहं करोमीति भावः। अत्र अस्य ग्रन्थस्य नाम निर्दिष्टमस्ति ।

गुरुपादाम्बुजद्वन्द्वमिति पद्यानन्तरं—
"मनोवाञ्छितदातारं देवताचक्रवर्तिनम् ।

श्रीरामं सपरीवारमुदाहर्तुमियं कृतिः ॥" इति

पद्यं, 'त' प्रतौ दृश्यते । एतदन्यत्र न दृश्यते ।

'मनोऽभीष्टप्रदातारं, देवतासार्वभौमं, परिवारयुतं श्रीरामचन्द्रम् उदाहरणद्वारा वर्णयितुमेव इयं कृतिः निबद्धेति कविः अस्य ग्रन्थस्य नामनिर्देशौचित्यं प्रकटयति ।

[1]रामाज्ञयेति—स्वकीयग्रन्थस्य 'अलङ्काररराघवम्' इति नामकरणप्रसक्तिमत्र सूचयति। 'मामुद्दिश्य कृतिं रचयेति'—स्वप्ने कृतरामाज्ञानुसारात् इयं कृतिः रचिता। अत एव अत्र उदाहरणेषु युक्तिदौर्बल्यं, मान्द्यं च न क्वापि दृश्यते। तस्मात् सहृदयाः सज्जनाः अत्र ग्रन्थे आदरं कुर्वन्तु इति सहृदयान् प्रार्थयति ग्रन्थकृत् ।

[1]सम्भवत्स्वपि दोषेषु [2]रामनामाङ्कनादिह ।
ग्रन्थे सुपुरुषैस्सम्यग्युज्यते [3]कर्तुमादरः ॥ ८ ॥

[4]तदुक्तम्—

[5]सपङ्कापि कवेर्वाणी हरिनामाङ्किता यदि ।
सादरं गृह्यते सद्भिः शुक्तिर्मुक्तान्विता यथा ॥

इति ॥

[6]साहित्य सीमाध्वनि चेद्बुभुत्सुः
मीलन्महापापभिदोद्यमी चेत् ।

---

[1]सम्भवत्स्वपि दोषेष्विति—मदीये ग्रन्थे बहवो दोषा यद्यपि सम्भवन्त्येव अथापि रामनामाङ्कनात् अस्य ग्रन्थस्य दोषा दूरीभवन्त्येव, सज्जना अपि अत्र आदरं कुर्वन्त्येव इति ग्रन्थनाममहिमानं कथयति ।

[5]सपङ्कापीति—दोषयुतापि कवेर्वाणी, हरिनामाङ्कनमहिम्ना, मुक्तान्विता शुक्तिर्यथा जनैः सादरं गृह्यते, तद्वत् सहृदयैः सादरं गृह्यत एव । भगवन्नामबलं तादृगिति, नामकरणौचित्यं पुनः स्पष्टयति ।

[6]साहित्यसीमाध्वनीति — साहित्यसीमामार्गे बोद्धुमिच्छुः चेत्. महापातकच्छेदने कार्योन्मुखश्चेत् मङ्गलविशेषप्राप्तिविषये अत्यन्ताभिलाषुकश्चेत्, तदा अस्मिन् अलङ्काररराघवे ग्रन्थे उत्सुको भव ।

---

[2] रामनामाङ्किता इह-त
[3] कर्तुमादरान्-अ
[4] 'त' प्रतौ नास्ति ।

श्रेयोविशेषाप्तिषु लोलुभश्चेत्
उत्को भवालङ्कृतिराघवेऽस्मिन् ॥

(मङ्गलाचरणसार्थक्यविचारः)

ननु त्वत्कृतं मङ्गलाचरणं [1]सफलमसफलं वा? [2]नाद्यः। तदनाचरणप्रसङ्गात्। [3]आद्ये न तावत् विघ्नध्वंसः फलम्। 'इदं समाप्यताम्' इति समाप्तिकामनयैव मङ्गलानुष्ठानात्। ननु [4]प्रारब्धनिर्वाहे विघ्नो मा भूदिति कामनया [5]मङ्गलानुष्ठानात् विघ्नध्वंसः फलमिति चेदुच्यते।

कोऽयं विघ्नशब्दार्थः? समाप्तिन्यूनता वा? प्रतिबन्धकदुरितं वा? नाद्यः। अन्यूनसमाप्तेरेव फलत्वापत्तेः। नेतरः। [6]तस्य तत्र व्यभिचारादकारणत्वात्। ननु मङ्गलस्य विघ्नध्वंसविशेषकारणत्वमिति चेत न। विशेषानिर्वचनात्। न तावन्मङ्गलजन्यत्वं विशेषः। आत्माश्रयात्। नास्ति समाप्तिजनकत्वम्। अलाघवात् अस्याविफलत्वौचित्यात्। न च गङ्गास्नानाद्यजन्यत्वं स इति शङ्क्यम्। [7]तदिति राजन्यत्वस्य [8]जन्यत्वग्रहाधीनत्वेन प्राग्दोषानतिवृत्तेः।

---

[1] सफलमफलं वा—त

[2] नान्त्यः—त

[3] आद्येऽपि न—त

[4] प्रारब्धनिर्वाहो विघ्नो—त

[5] मदनुष्ठानात्—त

[6] तस्य तस्य तत्र—त

[7] ततो राजन्यत्वस्य-त

[8] तज्जन्यत्वग्रहाधीनत्वेन-त

नापि जातिरेव विशेषः। ध्वंसे तदभावात्। अत एव निर्विघ्नं समाप्यतामिति कामनया मङ्गलानुष्ठानात् 'सविशेषणे हीति' न्यायेन विघ्नध्वंस एव फलमित्यपि निरस्तम्। ननु मङ्गलाचरणजन्यविधि[1]सिद्धिरेव फलमिति चेन्न। समाप्तिकामनया तदनुष्ठानाभावप्रसङ्गात्। अस्तु तर्हि समाप्तिरेव फलमिति चेन्नैवम्। उभयथा व्यभिचारात्। ननु समाप्तिप्रतिबन्धकदुरित [2]प्रतिबन्धकत्वेन उत्तेजकतया मङ्गलाचरणं युक्तमिति चेन्न। प्रतिबन्धकदुरितजन्यप्रतिबन्धनिवृत्त्यर्थमेव [3]तत्प्रयोगाचरणप्रसङ्गात्। समाप्तिकामनया तदभावप्रसङ्गात्। लोकेऽपि मण्यादिजन्यप्रतिबन्धनिवृत्त्यर्थमेव उत्तेजकमण्यादेः प्रयुक्तत्वेन वह्न्यादिकार्यार्थमप्रयोगात्। निवृत्ते तत्प्रतिबन्धे [4]क्लृप्तसामग्र्या वह्न्यादिकार्योत्पत्तेः। किञ्च मङ्गलाचरणस्य उत्तेजकत्वे ग्रन्थारम्भे नैयत्येन अनाचरणापत्तेः। [5]प्रतिबन्धकदशायामेव उत्तेजकप्रयोगात्। नन्वत्र प्रतिबन्धकसम्भावनानैयत्येन तदाचरणमस्त्विति चेत्तन्न। लोके प्रतिबन्धकनिश्चयेनैव उत्तेजकप्रयोगदर्शनात् तत्सम्भावनया तदाचरणानुपपत्तेः। किञ्च मङ्गलस्य उत्तेजकत्वकल्पनं तथा उत्तेजकाभावविशिष्टप्रतिबन्धकाभावस्य कारणत्वकल्पनञ्चेति गौरवप्रसङ्गः। तस्मान्मङ्गलाचरणमिदं न युक्तमिति चेन् अत्रोच्यते। [6]प्रारिप्सितपरिसमाप्तिरेव मङ्गलाचरणस्य फलम्। यदुक्तमुभयतो व्यभिचारान्न [7]साफल्यमिति तत्र न तावदन्वयव्यभिचारः।

---

1 सिद्धिरेतस्य फलमिति—त
2 प्रतिबन्धकत्वोत्तेजकतया—त
3 तत्प्रयोगापत्त्या समाप्तिकामनया—त
4 क्लृप्तसामग्र्या एव—त
5 प्रतिबन्धकमेवोत्तेजकप्रयोगात्—त
6 प्रारिप्सितपरिसमाप्तेरेव—त
7 साधनफलमिति—त

ज्ञानवदनुष्ठेय सगुणमङ्गलस्यैव समाप्तिहेतुत्वात् । यदज्ञकृतं मङ्गलं न तदज्ञानवदनुष्ठेयम् । यत्र कृतेऽपि मङ्गले समाप्त्यभावः न तत्र साद्गुण्यम् । तस्य फलानुमेयत्वात् । अतो [1]नान्वयव्यभिचारः । नास्तिकानुष्ठित समाप्तावपि जन्मान्तरीयमङ्गलाचरणानुमानात् । नन्वेवं तर्हि सिद्धे [2]तत्र[3] जन्मान्तरीयमङ्गले व्यभिचाराभावेन हेतुत्वग्रहसिद्धिः । सिद्धे च हेतुत्वग्रहे तत्र जन्मान्तरीयमङ्गलादेरनुष्ठानमित्यन्योन्याश्रय इति चेन्न । इष्टसाधनताज्ञानादेः प्रवृत्तिहेतुत्वाभावप्रसङ्गात । विनापीष्टसाधनताज्ञानं सद्योजातस्य स्तन्य-पानादौ प्रवृत्तिदर्शनात् । [4]न च [5]तत्रापि जन्मान्तरीयव्याप्तिस्मरण-मस्त्येवेति न व्यभिचार इति वाच्यम् । अन्योन्याश्रयत्वप्रसङ्गात् । सिद्धे तत्र जन्मान्तरीयव्याप्तिस्मरणे व्यभिचाराभावेन हेतुत्वग्रहः । सिद्धे हेतुत्वग्रहे तत्र जन्मान्तरीयव्याप्तिस्मरणकल्पनमिति । [6]तथा चात्र परस्य यः परिहारः स [7]एवास्माकमपीति न कोऽपि दोषः । वस्तुतः त्वन्मते नान्योन्याश्रयदोषः । वक्ष्य-माणन्यायेनागमगम्यफलेनान्वयव्यतिरेकापेक्षा । यतः न च तत्र [8]प्रमाणाभावः ।

---

[1] नापि व्यतिरेकव्यभिचारः नास्तिकानुष्ठितसमाप्तावपि–इति 'त' पुस्तके अस्ति । अन्यत्र नास्ति ।

[2] अत्र जन्मान्तरीयमङ्गले–'त'

[3] जन्मान्तरीयमङ्गलव्यभिचाराभावेन–'द'

[4] न च तत्रापि इत्यारभ्य व्याप्तिस्मरणकल्पनमितिपर्यन्तं—'त' पुस्तके एवमस्ति —'न च तत्र जन्मान्तरीयसमाप्तिस्मरणकल्पनमिति'

[5] तत्र जन्मान्तरीय—त

[6] तथा च तत्र परस्य—त

[7] एवास्माकमत्रापीति—त

[8] मानाभावः—त

प्रारिप्सितसमाप्तिकामो मङ्गलमाचरेदित्य[1]नुमितौ आगमस्यैव प्रमाणत्वात्। न च तदनुमापकाभावः। मङ्गलाचारयुक्तानामित्यादिस्मृतेरेव तदनुमापकत्वात्। न च मङ्गलानिरुक्तिः [2]प्रारिप्सितपरिसमाप्त्युद्देशप्रवृत्तप्रधानकर्ममङ्गलमिति निर्वचनात्। ननु विशिष्यापरिचयान्मङ्गले [3]प्रवृत्तिश्च स्यादिति चेन्न। [4]बुद्धिस्थमङ्गले स्वाध्यायाध्ययनवत्प्रवृत्त्युपपत्तेः। [5]अन्यथा स्तुतिमाचरेदिति ईदृशागमकल्पनायामपि तद्दोषतादवस्थ्यम्। शिवरामादिस्तुतेरनुपस्थितत्वात्। तदिदं मङ्गलं ग्रन्थान्तरेऽपि तदनुष्ठानात्। नाप्युदीच्याङ्गम्। प्रागपि तदनुष्ठानात्। न चोभयविधं मङ्गलमिति शङ्कनीयम्। प्रधानमेव नाङ्गम्। [6]अङ्गत्वेन हि न तावत् सन्निपात्यङ्गम्। लेखनीपत्रादिवत् करणशरीरानिर्वर्तकत्वाभावादारादुपकारकत्वेऽपि न प्राच्याङ्गम्। ग्रन्थान्तरेऽपि तदनुष्ठानात्। नाप्युदीच्याङ्गम्। प्रागपि तदनुष्ठानात्। न चोभयविधं मङ्गलमिति शङ्कनीयम्। [7]मध्याचरितमङ्गलतदुभयब[8]हिर्भावप्रसङ्गात्। अतो लाघवात् प्राधान्यमेव कल्पयितुं युक्तमिति युक्तं मङ्गलाचरणमिति सङ्क्षेपः। प्रपञ्चस्त्वस्मत्कृतशास्त्रचूडामणिविवरणोज्जीविन्योः द्रष्टव्यः।

---

[1] नुमितागमस्यैव तत्र मानत्वात्—द

[2] प्रारिप्सितसमाप्त्युद्देशेन प्रवृत्तप्रधानकं मङ्गलमिति—द

[3] प्रवृत्तिर्न स्यादिति—त

[4] बुद्धिकृतमङ्गले—त

[5] अन्यथा देवतास्तुतिमाचरेदिति—द

[6] अङ्गत्वे हि न—त

[7] मध्याचरितस्य मङ्गलस्य तदुभय—त

[8] बहिर्भावप्रसङ्गात्—त

[1]आपादयन्तीं परवादभङ्ग-
मभङ्गुरां मङ्गलवादभङ्गीम् ।
हर्षानुषङ्गेण निशम्य रामो
माङ्गल्यवान्मङ्गलमातनोतु ॥

ननु अलङ्कारशास्त्रमनारम्भणीयम् । प्रयोजनाभावात् । [2]अथ मतम् । गुणदोषादिज्ञानेन तस्य प्रयोजनवत्त्वमिति । तन्न युक्तम् । गुणदोषादिज्ञानस्य सुखप्राप्तिदुःखपरिहारतत्साधनान्यतरत्वाभावात् । नन्वलङ्कार-[3]शास्त्रे गुणदोषादिज्ञानं, तस्मिन् सति [4]सगुणनिर्दोषकाव्यारम्भसिद्धिः । तथा सति काव्यप्रयोजनशिवेतरक्षत्यादिनैव तस्यापि प्रयोजनवत्त्वमिति चेत् । हन्त अन्योन्याश्रयः । सिद्धेऽलङ्कारशास्त्रारम्भे गुणदोषादिज्ञानेन तादृशकाव्यारम्भसिद्धिः । सिद्धे च काव्यारम्भे [5]तत्प्रयोजनेनैव प्रयोजनवत्त्वेनालङ्कारशास्त्रारम्भसिद्धिरिति । ननु तथापि [6]रसनिरूपणपरनिरतिशयानन्दानुभव

---

[1]आपादयन्तीमिति—

परपक्षस्य वादं नाशयन्तीं, भङ्गुररहितां मङ्गलवादशैलीं
श्रीरामः हर्षातिरेकेण श्रुत्वा मङ्गलं विदधातु ॥

---

[2] 'त' पुस्तके नास्ति

[3] शास्त्रेण गुणदोषादिज्ञानं—त

[4] गुणनिर्दोष—त

[5] विनैव प्रयोजनवत्त्वेन—त

[6] रसरूपनिरतिशयानन्दसम्भव एव—त

एवालङ्कारशास्त्रारम्भप्रयोजनम्। [1]तत्रास्यापि निरूपणाद् छत्रिन्यायेनालङ्कार-शास्त्र[2]प्रथाया: अप्युपपत्तेरिति चेन्न। शास्त्रजन्यरसानन्दज्ञानस्य परसमवेत-सुखादिज्ञानवदपुरुषार्थत्वात्। नन्वभिनयादिजन्यरसानुभवस्य स्वात्मनि पुरुषार्थत्वमनुभूयत इति चेत्तस्य भरतशास्त्रप्रतिपाद्याभिनयविशेषसाध्यतया शास्त्रान्तरफलत्वेनान्यथासिद्धत्वात्, [4]अलङ्कारशास्त्रासाध्यत्वात्, रसकाव्य-श्रवणजन्यरसानन्दानुभवस्यापि यशोऽर्थादिसत्काव्यमात्रफलत्वात्। ननु रसप्रधानशब्दार्थरूपनाटकादिरूपकविशेषस्वरूपनिरूपणपरालङ्कारशास्त्रस्यतद्धट-काभि[4]नयसाध्यरसानुभवोऽपि फलमिति चेदुच्यते। किमयं रसानुभवः स्वात्माभिन्नः। किं वा [5]तद्भिन्नः। नाद्यः। तस्य वेदान्तशास्त्र-फलत्वेनान्यथासिद्धत्वात्। ननु सद्ब्रह्मानुभवत्वेनैव वेदान्तशास्त्रफलम्। [6]न रसानुभवत्वेनेति चेन्न। रसब्रह्मणोर्भेदाभावेनावच्छेदकाभावस्याप्यभावात्। नेतरः।

अलङ्कारशास्त्रारम्भविधुरपामरजनस्याप्यभिनयादिना रसाविर्भावदर्शनात्। तस्य तदफलत्वात्। तस्मान्निष्प्रयोजनत्वेनालङ्कारशास्त्रमनारम्भणीयमिति प्राप्तेऽभिधीयते। अलङ्कारशास्त्रमारम्भणीयम्। प्रयोजनसम्भवात्। तथा हि-[7]अलङ्कारशास्त्रेण गुणदोषालङ्कारस्वरूपे निरूप्यमाणे वेदेऽपि [8]सालङ्कारनिर्दोषार्थे

---

[1] तत्र तस्यापि—त

[2] प्रथायामप्युपपत्तेः—त

[3] अलङ्कारशास्त्रसाध्यत्वान—त

[4] अभिनयसाध्यरसानुभवो ऽविफलमिति—त

[5] तद्भिन्नपाद्यः—द

[6] 'न' इति नास्ति—म

[7] अलङ्कारशास्त्रगुणदोषालङ्कारशास्त्रे स्वरूपनि—म

[8] सालङ्कारगुणनिर्दोषार्थज्ञानं—त

ज्ञानं फलति। तेन वेदार्थानुष्ठाने स्वर्गादिसिद्धिः प्रयोजनम्। न च वैदिकालङ्कारज्ञानस्यानुष्ठानोपयोगाभाव[1]श्शक्यशङ्कः।

'वायुर्वै क्षेपिष्ठा देवते' त्यादौ [2]क्षेपिष्ठत्वादेः स्वभावोक्तेः. कर्मप्राशस्त्य-व्यञ्जनद्वारा प्रवृत्ति[3]विशेषप्रयोजकत्वेनोपयोगसम्भवात्। इयांस्तु विशेषः। क्षेपिष्ठत्वादेः प्राशस्त्यलक्ष्यकत्वमिति मीमांसकाः। तद्व्यञ्जकत्वमित्यालङ्कारिकाः इति। 'एवमिह द्युमत्तमं वद जगतामिव [4]दुन्दुभिं ग्राहणे [5]तदिदर्थं वरेऽथ योषा जारमिव [6]प्रियमथैते मानव इवोच्चिष्ठन्ती'त्यादिष्वलङ्कारस्याप्युपयोगः ऊहनीयः। न च वेदे गुणानामभावः। 'अग्निना रयिमश्नवत्पोषमेव दिवे दिवे' इत्यादौ श्लेषप्रसादादिगुणदर्शनात्। ननु तथापि वेदे निर्दोषत्व-ज्ञानं न सम्भवति। '[7]मा मातरममुयापत्तावेक' इत्यादौ ग्राम्योक्तिदर्शनात्। [8]वज्रा तुभिस्तवेचिषम' इत्यादौ [9]सन्धिदर्शनाच्चेति चेन्न। ग्राम्योक्त्यादेः

---

[1] शक्यश्शङ्क्यः—त

[2] i) क्षेपिष्ठत्वादिः स्वभावोक्तेः—त
ii) क्षेपिष्ठत्वादिस्वभावोक्तेः—द

[3] विशेषकत्वेनोपयोगसंभवात्—त

[4] दुन्दुभिः श्रावणेव—त

[5] तदिदर्थं वरेण्य योषा—म

[6] i) ह्रियम्—म
ii) प्रियमित्यादिष्वलङ्कारस्याप्युपयोगः—त

[7] मायातत्त्वममुयापत्तवेक इत्यदौ—त

[8] i) वज्रकतुभिस्तवे—द
ii) वज्रय विषम इत्यादौ—त

[9] कुसन्धिदर्शनाच्च—त

अनित्यदोषत्वेन तत्सम्भवात्। तदुक्तमेकावलीकारेण— '[1]च्युतसंस्कृतप्रभृतीनां [2]दोषाणां नित्यत्वं श्रुतिकटुप्रभृतीनाञ्चानित्यत्वमिति। अत एव 'वागर्थाविव संपृक्तौ वागर्थप्रतिपत्तये' [3]'शष्पाग्रविकीर्णदशार्धबाणाः' इति [4]महाकाव्येष्वपि [5]ग्राम्योक्तिरविरोधात्। अत एव [6]'यः करोति प्रिय[7]कारिणोऽधिकं [8]ततोऽधिकस्यासु समं प्रयच्छति' '[9]असुप्रदातुस्तु किमन्य देयं तूष्णीबभूवैव विचित्य राघव' इति वंशस्थरामायणे तु [10]कुसन्धिरपि प्रयुक्त इति द्रष्टव्यम्। ननु शब्दालङ्कारनिरूपणस्य वेदे कुत्रोपयोगः। तेषामनुष्ठानोपयोगासम्भवात् इति चेन्न। '[11]वसोस्सूनुं सहसा जातवेदसम्' जातवेदसमिति सहशालङ्कारज्ञानस्य प्रामाण्यनिरूपणवद्वेदस्यादरणीयत्वज्ञानद्वारोपयोगसम्भवात्। न च वेदे शब्दचित्राणामदर्शनमिति शङ्क्यम्। न यस्य हन्यते सखा न जीयते

---

1 च्युतसंस्कृतिप्रभृतीनां—त

2 दोषनित्यत्वम्—म

3 शष्पमग्रे विकीर्णं दशार्धबाणाः इति—त

4 महावाक्येष्वपि—द

5 ग्राम्योक्तिरविरोधः—त

6 च प्रियं करोति प्रियकारिणोऽधिकं—त

7 प्रियकारिणोऽधिकं ततोऽधिकं ततोधिकस्य— इति-'त' पुस्तके। ततोऽधिकमिति अधिकः पाठः दृश्यते।

8 ततोऽधिकस्यासमं प्रयच्छति—द

9 आसुप्रदातुस्तु किमन्यद्देयं—त

10 कुसन्धेरपि प्रयुक्तमिति—म

11 वसुं सानुं सहसा जातम् अवेदसं विप्रजजातवेदमितीदृशशब्दालङ्कारज्ञानस्य निरूपणवत् वेदस्य—त

कदाचनेति [1]निरोष्ठ्यादेर्वैचित्र्यदर्शनात्। नन्वेवं [2]तद्यर्थवादाद्यधिकरणेष्वेव स्वभावोक्त्याद्यलङ्कारजातस्योपयोगनिरूपणादलङ्कारशास्त्रारम्भणं व्यर्थमेवेति चेन्मैवम्। अलङ्कारत्वेन सर्वालङ्कारनिरूपणार्थमलङ्कारशास्त्रप्रवृत्तेः। अत एवालङ्कारशास्त्रेण सह त्रयोदशलक्षणी पूर्वमीमांसेत्यालङ्कारिकमतरहस्यम्। सूत्रकारस्तु भगवान् जैमिनिः पुरुषान्तरप्रयत्नलभ्यत्वेन अलङ्कारजातं न सूत्रितवान्। न च कर्तृभेदमात्रेण एकशास्त्रत्वाभावः। बहुकविकृतकाव्यादे[3]रेककाव्यत्ववत् कर्तृभेदेऽप्येक[4]शास्त्रत्वोपपत्तेः। ननु तर्हि आलङ्कारिकाः किमिति वेदवाक्यानि नोदाजह्रुरिति चेदुच्यते। पण्डितपामराणां सर्वेषां सुखज्ञानार्थं [5]काव्यश्लोकोदाहरणं न वेदवाक्यानामनुदाहरणत्वान्नोदाहरणमादरणीयमिति न्यायात्। अत एव अध्ययन[6]विधिरेव अलङ्कारशास्त्रकर्तव्यताबोधकं मूलप्रमाणमवगन्तव्यम्। तथा हि— स्वाध्यायोऽध्येतव्य' इत्यध्ययन[7]विधिरर्थावबोधार्थमध्ययनं विदधानोऽल[8]ङ्कारशास्त्रारम्भं विना सालङ्कारसगुणनिर्दोषवेदार्थज्ञानासम्भवात् [9]तदर्थमलङ्कारशास्त्रारम्भमप्याक्षिपतीति भवत्यध्ययनविधिर्मूलप्रमाणम्। न च अध्ययनविधि[10]रर्थावबोधनफलमिति वाच्यम्। विरागसामर्थ्यलभ्यार्थावबोधस्य

---

[1] i) नीरोष्ठ्यादिवैचित्र्यदर्शनात्—द
ii) नीरोष्ठ्यादेः वैचित्र्यदर्शनात्—त

[2] तस्यार्थवादाद्यधिकरणेषु—त

[3] एकवाच्यत्ववत्—प

[4] शास्त्रोपपत्तेः—म

[5] वाक्यश्लोकोदाहरणं—म

[6] विधेरेव—त

[7] विधिरर्थवाद्यबोधार्थम्—द

[8] अलङ्कारशास्त्रारम्भणं विना—त

[9] तदर्थालङ्कारशास्त्रारम्भम्—म

[10] अर्थावबोधो न फलमिति—द

नियोज्य [1]विशेषणत्वाभावेऽप्यधिकारिविशेषणत्वसम्भवेन अर्थावबोधक[2]मस्त्येव। तत्राधिकारात्। न चैवं [3]होमाध्ययनापत्तिः। [4]सामभागपरिच्छेदार्थं तदुपपत्तेः। न चैवं वैरूप्यापत्तिः [5]न। गत्यन्तराभावे [6]तस्यानङ्गीकारात्। न च अध्यापनविधिप्रयुक्तिरध्ययन[7]विधिश्शङ्कनीया। 'विवरणोज्जीविन्या'-तृतीयवर्णकेऽस्माभिर्बहु[8]विधा निराकृतत्वात्। [9]नन्वक्षरावाप्तिरेवाध्यायफल-मस्त्विति चेन्न। तस्याप्यर्थावबोधद्वारैव फलत्वात् तदनतिक्रमणात्। न चैवं ब्राह्मणादे [10]राजसूयवाक्याद्यनध्ययनापत्तिः। क्षत्रियादेरर्थोपदेशार्थं ब्राह्मणस्य [11]राजसूयवाक्याद्यध्ययनोपपत्तेः। राज्ञापि [12]कर्म ज्ञात्वा तत्पाल-नार्थं बृहस्पतिपदवाक्याद्यध्ययनमुपपद्यते। वैश्यस्यापि बहुपरिज्ञातृत्वकीर्ति सिद्ध्यर्थं बृहस्पतिपदवाक्याध्ययन[13]मुपपद्यते। सर्वथा तावदर्थावबोधः सर्वत्र

---

[1] i) विशेषणत्वभावेऽपि—त

ii) विशेषणत्वाभावेऽप्यङ्गीकार्यत्वादप्यधिकारिविशेषणत्वसंभवेन—द

[2] मस्त्यैव—म

[3] होमाद्यनध्ययनापत्तिः—त

[4] सामभावपरिच्छेदार्थं—म

[5] 'न' इति 'तद' प्रत्योः नास्ति।

[6] तस्याप्यङ्गीकार्यत्वात्—त

[7] विधेश्शङ्कनीया—द

[8] बहुधा—द

[9] न चाक्षरावाप्तेरेव—त

[10] राजन्याय—द

[11] राजन्याय—द

[12] कर्म ज्ञात्वा तत्पालनार्थं बृहस्पतिपद—त

[13] उपयुज्यते—त

अनुगतं फलम्। [1]यथा शूद्राध्ययनापत्तिः, तथा विवरणोज्जीविन्यां [2]प्रत्यपादीति द्रष्टव्यमिति सङ्क्षेपः। तस्मात् सिद्धं [3]स्वर्गादिसिद्धिरलङ्कार-शास्त्रारम्भप्रयोजनमिति। तथा मोक्षोऽप्यलङ्कारशास्त्रारम्भप्रयोजनम्।

तथा हि — क्रियमाणेऽलङ्कारशास्त्रारम्भे तत्रत्यवृत्तिनिरूपणेन वेदान्तपदानां लक्षणादिवृत्तिज्ञानं फलति। [4]गुणदोपनिरूपणेन सगुणनिर्दोष-वेदान्तज्ञानं सिद्धयति। अलङ्कारनिरूपणे विरोधाद्यलङ्कारज्ञानं सम्भवति। सगुणनिर्गुणत्वश्रुतिभिराह—[5]ततो विरोधप्रतीतेः का.........स्त्वित्वाभ्यां परिच्छिन्नत्वाभ्यां.........लङ्कारान्तराण्यप्यूहनीयानि। तस्माद्विशेषतो वेदान्तार्थज्ञानमलङ्कारशास्त्रेण सिध्यति। तथा च—तदर्थनिदिध्यासनाद्यनु-भवादि......परिहारः। तथा सति द्वितीयत्वाद्वितीयत्वयोर्विरोध-व्यवहारपरमार्थत्वाभ्यां तत्परिहारात्। तथा अणोरणुत्वस्य महतो महत्त्वस्य विरोधे दुर्बोधत्वापरिच्छिन्नत्वाभ्यां तत्परिहारात्। एवमलङ्कारान्तराण्यप्यू-हनीयानि।

तस्माद्विशेषतो वेदान्तार्थज्ञानमलङ्कारशास्त्रेण सिध्यति। तथा च तदर्थनिदिध्यासनाद्यनुभवादि[6]सामग्रीनिरपाया रसाभिव्यक्तिरूपा मुक्तिः फलति।

---

[1] यथा न शूद्राध्ययनापत्तिः—त

[2] प्रत्युदाहरणादिति द्रष्टव्यमिति—त

[3] स्वर्गादिसिद्धम् अलङ्कार—म

[4] गुणदोषनिरूपणे सगुणो निर्दोष—म

[5] 'ततो विरोधप्रतीतेः' इत्यारभ्य....परिहारः इत्यन्तो भागः–'त' पुस्तके नास्ति।

[6] i) सामग्रीनिरपाया मुक्तिः—म

ii) सामग्र्यनिरपाया रसाभिव्यक्तिरूपा—द

न च मोक्षो वेदान्तशास्त्रारम्भफलमेव। नैतत्फलमिति वाच्यम्। [1]अस्यापि तदन्तर्भावात्। [2]न चैतस्य अलङ्कारशास्त्रस्य उभयमीमांसाशास्त्रान्तर्भावो न युक्त इति वाच्यम्। एकस्यापि पाणिनीयादिवदनेकशास्त्रोपकारकत्वसम्भवात्। अत एव [3]शास्त्रारम्भानन्तरं शान्त्यादिविशिष्टस्वर्गकामाद्यधिकारभेदेन [4]मीमांसाद्वयेऽपि प्रवृत्त्युपपत्तेः। न चैवमलङ्कारशास्त्रस्य [5]श्रवणविधिमूलत्वापत्तिरिति वाच्यम्। [6]तदुभयसाधारणस्य वेदाध्ययनविधायकाध्ययनविधिमूलत्वसम्भवे तन्मूलत्वानौचित्यात्। अत एवालङ्कारशास्त्रे शूद्रादीनामधिकार एव। ततः [7]उत्कृष्टप्रयोजनवत्त्वादलङ्कारशास्त्रमारम्भणीयमिति सिद्धम्।

आरम्भवादा[8]न्मुदितोऽत्ररामः
संरंभशाली [9]सकलार्थयानः।
सीतापरीरम्भविजृम्भितोऽस्म-
दारम्भमेतं सफलं करोतु॥

इति श्रीचरुकूरिकोण्डुभट्टोपाध्यायतनययज्ञेश्वरदीक्षितेन तिरुमलयज्वप्रियसहोदरेण विरचितेऽलङ्कारराघवे उपोद्घातप्रकरणम् सम्पूर्णम्॥

---

[1] अस्यापि न वेदान्तर्भावात्—म

[2] न चैकस्य अलङ्कारशास्त्रस्य—त

[3] अलङ्कारशास्त्रारम्भानन्तरं—त

[4] मीमांसाद्वयोऽपि—त

[5] श्रवणविधिमूलत्वापत्तिरिति—म

[6] तदुभयसाधारणसर्ववेदाध्ययन—त

[7] लोकोत्कृष्टप्रयोजनवत्वात्—त

[8] मुदितो प्रकाशं—त

[9] सकलार्थदाने—त

## नायकनिरूपणम्

अलङ्कारो मुख्यो हरिणनयनानां तु पुरुषो
कलैवालङ्कारो जगति पुरुषाणामनुपमः ।
कलालङ्काराणां प्रतिकलमलङ्कारवचसा-
मलङ्कारो रामो जयति भुवनेऽनुत्तमतमः ॥

अथ सर्वप्रबन्धप्रतिष्ठाबीजभूततया नायको निरूप्यते। ननु—

'नायको गुणवान् पुमानिति' रसार्णवसुधाकरकारः।
'आश्रितो धार्मिको शूरः कृतज्ञो रूपवान् युवा ।
तेजस्वी धैर्यगाम्भीर्यदक्षदौवार्यसंशयः ॥
प्राज्ञश्चापि महाभागो नायकः परिकीर्तितः ॥

इति साहित्यचिन्तामणिकारः ।

[1]'यशः प्रतापसुभगो धर्मकामार्थतत्परः ।
धुरन्धरो गुणाढ्यश्च नायकः परिकीर्तितः ॥

इति विद्यानाथः ।

---

[1]'नेता विनीतो मधुरस्त्यागी दक्षः प्रियंवदः ।
रक्तलोकः शुचिर्वाग्मी रूढवंशः स्थिरो युवा ॥
बुद्ध्युत्साहस्मृतिप्रज्ञाकलामानसमन्वितः ।
शूरो दृढश्च तेजस्वी शास्त्रचक्षुश्च धार्मिकः ॥
(दशरूपकं—द्वितीयप्रकाशः १-२ श्लो)

तत्राद्ये वक्तव्यम् । किं सर्वगुणवान् नायकः, कतिपयगुणवान् वा । गुणवत्त्वमात्राधारो वा? नाद्यः । मध्यमाधमनायकयोरव्याप्तेः । न द्वितीयः । उत्तमनायके अव्याप्तेः । न तृतीयः । विदूषकचेटिकादावतिव्याप्तिप्रसङ्गात् । तस्यापि यत्किञ्चिद्गुणाधिकरणत्वात् । न च नायकगुणाधिकरणत्वं नायकत्वमिति वाच्यम् । आत्माश्रयप्रसङ्गात् । [1]अतो न [2]शिङ्गभूपालीयं लक्षणं युक्तम् ।

द्वितीयतृतीययोरपि वक्तव्यम् । किं नायकलक्षणे एते ? किं वा तत्स्वरूपकथनमात्रपरे । आद्येऽपि किं लोकनायकलक्षणं, किं वा कृतिनायकलक्षणम् । नाद्यः । [3]अधार्मिकम्लेच्छादेरपि लोकनायकत्वदर्शनात् । द्वितीये धीरशान्तनायके [4]अव्याप्तिः । तस्मिन् शौर्यादिधर्मासम्भवात् । किञ्च प्रहसनभाणादिनायके [5]पाषण्डविटधूर्तादौ अव्याप्तम् । तत्र धर्मपरत्वाद्यसम्भवात् । ननु उत्तमनायकस्यैवेदं लक्षणद्वयमस्तु । ततो न धीरशान्तादौ

---

*[2] तत्र नायको गुणवान् पुमान् ।
तद्गुणास्तु महाभाग्यमौदार्यं स्थैर्यदक्षते ।
औज्वल्यं धार्मिकत्वं च कुलीनत्वं च वाग्मिता ॥
कृतज्ञत्वं नयज्ञत्वं शुचिता मानशालिता ।
तेजस्विता कलावत्त्वं प्रजारञ्जकतादयः ॥
एते साधारणाः प्रोक्ता नायकस्य गुणा बुधैः ।

(रसार्णवसुधाकरः-प्रथमो विलासः-६१-६३)

---

[1] ततो न—त
[3] अधार्मिकम्लेच्छादेरखिललोक—त
[4] अव्याप्तेः—त
[5] पाषण्डविटादौ—द

अव्याप्तिः प्रसरति । तस्य मध्यमाधमनायकत्वात् । तदुक्तं शिङ्गभूपालेन -'मध्यः कतिपयहीनो बहुगुणहीनोऽधमो [1]नामेति चेत्, नेदमुत्तमनायकलक्षणं युक्तम् । निर्गुणस्य परब्रह्मणो वेदान्तशास्त्र[2]नायकत्वानुपपत्तेः ।

ननु सगुणब्रह्म[3]वादिनोऽनुसारेणेदं लक्षणद्वयं युक्तमिति चेन्मैवम् । [4]तथा हि—इदानीं सगुणब्रह्मवादिनं न भेदसाधक(प्रमाणा)न्यतरासिद्धेः । दुर्निवारत्वात् । तस्मान्नायकलक्षणद्वयमिति वक्तुं न युक्तम् । नन्वस्तु तर्हि द्वितीयः कल्पः । नायकस्वरूपकथनपरमेवेदम् । एतादृशेन नायकेन भवितव्यमिति । तत्सामान्यलक्षणं तु प्रबन्धप्रतिपाद्यपुरुषत्वं नायकत्वमिति चेत्तदपि न चतुरश्रम् । भाणप्रहसनादिनायक[5]स्वरूपस्यानीदृशत्वान्नायकविशेषस्वरूपकथनपरमेतदिति चेन्मैवम् । वक्ष्यमाणप्रबन्धमात्रनायकस्वरूपस्यैव अपेक्षितत्वात् । अपेक्षितस्यैव स्वरूपकथनात् औचित्यात् सामान्यस्यैव प्रथमतो निरूपयितुमुचितत्वात् । यदुक्तं तत्सामान्यलक्षणम— 'प्रबन्धप्रतिपाद्यपुरुषत्वमिति' तदपि न युक्तम् । विदूषकादेरपि [6]नाटकादिनायकत्वापत्तेः । ननु तात्पर्येण प्रबन्धप्रतिपाद्यपुरुषत्वं नायकत्वमिति नोक्तदोष इति चेन्न । तत्रैवावान्तरतात्पर्यसंभवात् । ननु महातात्पर्येण प्रतिपाद्यपुरुषत्वं नायकत्वमिति चेदुच्यते । कविभिः [7]स्वकीर्त्याधानेन

---

[1] नामेतीति चेत्—द

[2] नायकत्वानुपपत्तिः—म

[3] वादिमतानुसारेण—त

[4] तथापि निर्गुणब्रह्मवादिनं प्रति इतरभेदसाधने अन्यतरासिद्धेः दुर्निवारत्वात् ।—त

[5] स्वरूपस्यासदृशत्वात् । ननु नायक—त

[6] 'नाटकादि' इति पदं त पुस्तके नास्ति । नायकत्वापत्तेः-इत्येवास्ति ।

[7] स्वकीर्त्यादावेव महातात्पर्येण—त

महातात्पर्येण प्रबन्धा [1]आरभ्यन्ते। [2]न तु नायकचरित्र इत्यसंभव-प्रसङ्गः। किञ्च प्रबन्धप्रतिपाद्यत्वं नाम तत्प्रतिपादनयोग्यत्वम्। तथा च प्रतिपादनयोग्यतावच्छेदकसत्त्वे तदेव लक्षणं युक्तम्। तज्ज्ञानाधीनज्ञान-त्वादेतस्य तदसत्त्वे तदपरिचयात् लक्षणमेव दुर्निश्चयं स्यात्। तस्मात् नायकलक्षणं दुर्निर्वचमिति चेत् अत्रोच्यते—

—'तत्तत्प्रबन्धानुगुणकविवर्ण्यमानगुणाधिकरणप्रधानपुरुषत्वं नायकत्व-मिति [3]नायकलक्षणम्। इदं कल्पिताकल्पितयोरुभयोरपि संभवति। न च विदूषकादेः [4]प्रधानपुरुषत्वमिति नातिव्याप्तिदोषोऽपि लगति। प्रहसननायकादेरपि तदनुगुणगुणाधिकरणत्वं संभवतीति नाव्याप्तिदोषप्रसक्तिः।

प्रधानपुरुषत्वमात्रं प्रबन्धाऽनङ्कितबहिष्कृतपुरुषे अतिव्याप्तम्। तदर्थं प्राचीनप्रतीकम्। न च सोऽपि नायक एवेति नोक्तदोष इति वाच्यम्। 'पर्वतो वह्निमान्' इत्युदासीनवाक्यस्य न्यायानवयवत्ववत् प्रबन्धानङ्कितपुरुषस्या-नायकत्वात्। [5]तत्र लौकिकानां नायकव्यवहारस्तु भाक्तः। मुख्यत्वे वा [6]प्रबन्धनायकस्येदं लक्षणमिति न कोऽपि दोषः। नन्वेवमप्यनादिप्रबन्धरूप-वेदान्तनायके [7]परब्रह्मण्यव्याप्तिमिदम्। तस्यापौरुषेयवेदवादिमते

---

[1] रच्यन्ते—द

[2] न मे नायकचरित्र—म

[3] लक्षणम्—त

[4] पुरुषत्वमिति—त

[5] i) तत्प्रकारकाणां नायकव्यवहारस्तु भाक्तः—त
ii) तत्प्रकाशिकानां नायकव्यवहारस्तु भाक्तः—द

[6] प्रबन्धनायकस्यैवेदं—त

[7] परब्रह्मण्यव्याप्तम् इदं स्यात्। पौरुषेय—त–द

## नायकप्रकरणम्

कविवर्ण्यमानगुणाधिकरणत्वाभावात् । न च परब्रह्म नायक एवेति वाच्यम् । किं बहुना ? [1]वेदान्ता अपि ब्रह्मप्रतिपादकतया परमुत्कृष्यन्त इत्यालङ्कारिक[2]विद्यानाथोक्तिरिति चेन्मैवम् । [3]अर्थं बुद्ध्वा शब्दरचनायाः अभावेऽपि देवतावरलब्धसारस्वतकवेः कवित्ववत् परमेश्वराधीन[4]निगममन्त्रेण तस्य [5]कवित्वासम्भवात् । तस्य तद्वर्ण्यमानगुणाधिकरणत्वात् गुणास्त्व-कल्पिताः [6]कल्पिता भवन्तु । [7]तादृशगुणाधिकरणत्वं परब्रह्मणस्सम्भवत्येव । अन्यथा नायकत्वमपि निर्धर्मके न स्यात् । अत एव निर्गुणब्रह्मवादिनं प्रति नोक्तान्यतरासिद्धिः । कल्पितगुणैरपि ब्रह्मणो गुणवत्त्वसिद्धेरिति सर्वं निरवद्यम् ।

अशेषपृथ्वीवलस्य पार्थिवो
[8]यथा च हारस्य यथा च सन्मणिः ।
तथा प्रबन्धप्रवरस्य सत्कवेः
विभाति रामः परमेकनायकः ॥

---

[1] प्रतापरुद्रीये–काव्यप्रकरणे–उक्तमिदं वाक्यम् ।
[2] विद्यानाथोक्तेरिति—द
[3] अर्थं बुद्ध्वा रचनायाः—द
[4] निगममात्रेण—त
[5] कवित्वसुलभत्वात् । तस्य—त
[6] कल्पिता वा भवन्तु—त
[7] तदधिकरणत्वं परब्रह्मणः—त
[8] यथोच्चहारस्य—त

## अथ नायकगुणाः

महाकुलीनतौज्ज्वल्यादयो नायकगुणाः, तेषां स्वरूपमुदाहरणं च तत्र [1]महत्कुले सम्भवो [2]महाकुलीनत्वम्

यथा—

रघुदशरथश्रेष्ठैर्भूपैर्महद्भिरलङ्कृते
हरिरिह कुले रामो भूत्वा रवेरकलङ्किनः ।
कविवरवचोवीचीभङ्गीकृतस्तुतिपात्रतां
स्वयमवतरस्यान्यस्यापि प्रयाति सुदुर्लभाम् ।।

आकारसम्पत्ति[3]रौज्वल्यम् । यथा—

लोएसु विअअमाणे [4]तारिसविहवंमी रामसौंदए ।
णलऊवरोण णआरगहिदो अणिगंव वि विअणिदो अंगंगो ।।

---

[2]i) महाकुलीनता नाम कुले महति सम्भवः
(प्रतापरुद्रीयं–काव्यप्रकरणम्)

ii) कुले महति सम्भूतिः कुलीनत्वमुदाहृतम् ॥ (र.सु. प्र. वि.)

[3]i) रूपसम्पन्नदेहत्वमौज्वल्यं परिकीर्त्यते ॥
(प्रतापरुद्रीयं-काव्यप्रकरणं)

ii) औज्वल्यं नयनानन्दकारित्वं कथ्यते बुधैः ॥ (र. सु. प्र. वि)

---

[1] महति कुले—त

[4] तालिसविहवह्मि—द

(छाया—लोकेषु विजयमाने तादृशविभवेऽपि रामसौन्दर्ये ।
नलकूबरो नकारग्रथितो [1]जनिनैव विगणितोऽनङ्गः ॥)

यथा वा—

राज्यं विना चरितकाननविप्रवासं
भुक्तं च कन्दफलमूलमपेतभूषम् ।
रामं समीक्ष्य विपिने [2]मुनयोऽप्यमुह्यन्
रामस्य रूपमहिमा किमु वर्णनीयः ॥

[3]सार्वभौमता भाग्यसम्पत्तिः । यथा—

आरोहत्युरुरत्नपीठमुदयं श्रीरामचन्द्रे कला-
पूर्णे स्फूर्तिमधारयन्ननिमिषत्राताक्षितारा नवाम् ।
शान्तं दिक्षु तमस्समस्तमभितो नानामहीपालिनां
रम्याण्यञ्जलिवारिजानि मुकुलीभावं मुहुर्लेभिरे ॥

सकललोकाधिपत्यं महाभाग्यमिति वयम्

यथा—

रामे राजनि [4]मेघनादविहितादाज्ञानतं स्वाननं
[5]प्रक्षिप्यामरराड्गलान्तरसिता सङ्कोचभावां जहौ ।
शेषो भोगवतीमतीवमुदितस्सत्याभिधां पालयन्
राजानो विरुदानि साधु दधिरे भूयोऽपि भूयोगिनः ॥

---

[3]i) विश्वम्भराधिपत्यं यत्तन्महाभाग्यमुच्यते ॥(प्रतापरुद्रीये-काव्यप्रकरणम्)
ii) सर्वातिशायिराज्यत्वं महाभाग्यमुदाहृतम् ॥ (रसार्णवसुधाकरः—प्र. वि)

---

[1] जनितैव—द
[2] मुनयो ह्यमुह्यन्—म
[4] मेघनादविहिता राज्ञा नतं—म
[5] प्रोक्षिप्यामरराड्गलान्तरसिरा सङ्कोचबाधां जहौ—म

[1]दानशीलत्वमौदार्यम्। यथा—

अभीष्टदानप्रवणाभिरामे
रामेऽर्थिनां राघवराजधान्याम्।
[2]मन्ये तृपार्तास्तरवस्सुराणां
बभूवुरङ्गीकृतपश्वभावाः ॥

यथा वा—

रघूत्तमस्याखिलभूमिदेवता-
कुलप्रतिष्ठापनमत्र [3]नाद्भुतम्।
तदेव चित्रं तु शिवप्रतिष्ठया
[4]तदीयभिक्षाटनकर्म वारितम् ॥

'[5]सर्वजन प्रकाशकत्वं [6]तेजस्वित्वम्'। यथा—

---

[2] i) यद्विश्राणनताच्छील्यमौदार्यं तन्निगद्यते।
(प्र. रु. काव्यप्रकरणम्)

ii) यद्विश्राणनशीलत्वं तदौदार्यं बुधा विदुः ॥ (र.सु. प्र. वि)

[6] i) जगत्प्रकाशकत्वं यत्तेजस्वित्वं तदुच्यते।
(प्रतापरुद्रीये-काव्यप्रकरणम्)

ii) तेजस्वित्वमवज्ञादेः असहिष्णुत्वमुच्यते।
(रसार्णवसुधाकरः. प्र. वि.)

---

1 अन्ये तृषार्ताः—द

3 साद्भुतम्—त

4 तदीयभिक्षापि न कर्म वारितम्—त

5 सर्वजगत्प्रकाशकत्व—त

सत्यज्ञानमयेन सर्वभुवनं येन स्वयं ज्योतिषा
भातीति प्रवदन्ति सन्ततममूर्वेदान्तवाचोऽखिलाः ।
सोऽयं कन्दरवासि[1]योगिहृदये ध्यातःप्रसन्नः पुरो
बाह्याभ्यन्तरमाशु हन्ति च तमो रामोऽभिरामाकृतिः ॥

कार्यचातुर्यं [2]वैदग्ध्यम् । यथा—

" विक्षिप्यातीवदूरं [3]विपुलमसरसं दुन्दुभेरस्थिबन्धं
पादाङ्गुष्ठाग्रघातादसरसकपिना योऽपि भूयो नियुक्तः ।
उत्तालान् सप्ततालान् सकृदभि विभिदे साद्रिपातालतालं
बाणेनैकेन रामो निरवधिभुवने कार्यं चातुर्यमस्य ॥

धर्मैकप्रवणत्वं [4]धार्मिकत्वम् । यथा—

राज्यं विहाय करगामि मुदे सपत्न्या
यातो वनं [5]जरठतातवचो नियुक्तः ।

---

[2] कृत्यवस्तुषु चातुर्यं वैदग्ध्यं परिकीर्त्यते । (प्र. रु. का. प्र)

[4] i) धर्मैकायचित्तत्वं धार्मिकत्वमुदीर्यते ॥ (प्र. रु. का. प्र)

ii) धर्मप्रवणचित्तत्वं धार्मिकत्वमितीर्यते ॥ (र. सु. प्र. वि)

---

[1] योगिहृदयध्यातः—द

[3] विफलमसरसम्—द

[5] भरततातवचोनियुक्तः—'त'

योऽबोधयद्रणहतेन्द्र[1]सुतं च धर्मं
जानामि राममिह साकृतिधर्ममेव ॥

देवतात्मता [2]महानहिमत्वम्। यथा—

तत्ताद्दक्कृतवीर्यसूनुविमतो यत्तेजसा निर्जितो
येनासन् खरदूषणप्रभृतयः [3]सर्वेऽपि निर्वापिताः।
वाली ख्यातपराक्रमोऽपि तृणवद्यस्येषुणा पातितः
तस्मिन् दाशरथौ कथं नु मनुजाशङ्कापि लङ्काजिति ॥

यथा वा—

प्राणा वायुस्समजनि तनौ यस्य गाम्भीर्यमब्धिः
क्षान्तिः [4]क्षोणिः ......... लोचने पुष्पवन्तौ।
रोमाण्यासन् क्षितिरुहलता मस्तकं चान्तरिक्षं
पादद्वन्द्वं बलिगृहमसौ किन्नु वर्ण्येत रामः ॥

सर्वविद्याधिक्यं [5]पाण्डित्यम्। यथा—

यद्रूपं दशरूपकाणि यदलङ्कारोऽप्यलङ्कारवाक्
यस्याभून् कवितावितानसुषमा वेदा विनोदामुखे।

---

[2] तन्महामहिमत्वं स्याद्या पुनर्देवतात्मता ॥ (प्र. रु. का. प्र)
[5] सर्वविद्याधिकत्वं यत्पाण्डित्यं तदुदाहृतम् (प्र रु. का. प्र)

---

[1] नुतं च—त
[3] सर्वे विनिर्वारिताः—द
[4] क्षोणिः कु..............दहनो लोचने—द

शास्त्राण्यप्यखिलानि वादिविषये [1]शस्त्राणि धीसङ्गतिः
सङ्गीतं वितनोति सूरिषु कला रामस्य रामोऽद्भुतम् ॥

[2]कीर्तिप्रतापसुभगत्वं, यथा—

[3]राहवकित्ति हिमजुदि सीदभयंटा किसाणदीणणासा।
तंस पदावमअदहण भेसअमहिमाण सुहसुवाजादा ॥

(छाया—राघवकीर्तिहिमद्युतिशीतभयार्तौ कृशानुदिननाथौ।
तस्य प्रतापमयदहनभेषजमहिम्ना सुख[4]मुपयातौ ॥)

धर्मकामार्थपरत्वम्। यथा—

श्रीरामे भक्तिभाजां विहरति वृषभो गोष्ठिगेहेषु धर्मः
सन्तानस्सद्मशाखी[5]निवहति वसति द्वारपालः कुबेरः।

---

[2] अथ नायकगुणनिरूपणानन्तरं नायकस्वरूपं निरूप्यते—
'यशःप्रतापसुभगो धर्मकामार्थतत्परः।
धुरन्धरा गुणढ्यश्च नायकः परिकीर्तितः ॥

इति प्रतापरुद्रीये काव्यप्रकरणे यदुक्तं, तस्य एकैकस्य उदाहरणमत्र प्रदत्तम्।

---

[1] शास्त्राणि—म
[3] राहव कीर्तिहिमज्जुक्कदि सिवभद्दीकसाणविणाहा।
तास पदानमयदहणमेसआमहिमसुदमुपाज़ावा ॥—'द'
[4] उपायातौ—द
[5] निवसति—द

कामः कामं निकामं घटयति निकटे साधुरत्यासमेतः
ब्रह्मानन्दस्वरूपं करकलितफलं जायते मां च तेजः ॥

अत्र रामस्य कैमुतिकन्यायेन धर्मकामार्थतत्परत्वं गम्यते।

धुरन्धरत्वम्। यथा—

उद्दण्डचण्डभुजमण्डलखण्डितेन्द्र-
राजाधिराजमभिगम्य दशोत्तमाङ्गम्।
लोकत्रयं स्थिरतमं परिमुक्तबाधं
कोदण्डकोणविभवेन बभार रामः ॥

गुणाढ्यत्वम्। यथा—

रहुउलतिलअगुणाइ णिमलरूपाणि अंअणीदाणि।
णिहिलहरिदंगणाणं कंणाभारणेसु रन्तखण्डन्ति ॥

(छाया—रघुकुलतिलकगुणाः निर्मलरूपाः [1]आर्यनिरताः।
निखिलहरिदङ्गनानां कर्णाभरणेषु रत्नखण्डन्ति ॥)

सर्वज्ञत्वम् यथा—

षडक्षरीमन्त्रजपन्मुखांश्च
विज्ञाय नामस्मरणव्रतानि।
जगत्सु भक्तैर्विहितानि तेभ्यो
रामो मुदा काङ्क्षितमाशु दत्ते ॥

---

[1] आर्यनीताः—द

गाम्भीर्यं यथा—

श्रीरामकार्यप्रवणास्समस्तान्

[1]ललङ्घिरेऽब्धीन् [2]कपयोऽपि केल्या ।

रामस्य गाम्भीर्यसमुद्रमेकं

न लङ्घितुं कोऽपि जनस्समर्थः ॥

विभुत्वम् यथा—

अन्तस्त्वमेव परिभासि बहिस्त्वमेव

स्तम्भे त्वमेव गिरिकाष्ठतृणे त्वमेव ।

राम त्वमेव गगने पयसि त्वमेव

न त्वां विना किमपि राघव लक्षयामि ॥

रामचन्द्रसुगुणानुवर्णने

सन्त्रसन्ति निगमाश्चलान्यपि ।

भारती मम कथं प्रवर्तते

तत्र मेऽतिमहदेव साहसम् ॥

———

[1] i) ललङ्घिनोऽब्धीन्—म ii) ललम्बिरेऽब्धीन्—त

[2] कपयो स्वकेल्या—द

## अथ नायकविशेषा निरूप्यन्ते

धीरोदात्तो धीरोद्धतो धीरललितो धीरशान्त
इति चत्वारो [1]नायकाः सर्वरससाधारणाः ।

तत्र महासत्त्वगाभीर्यकृपावत्त्वे सत्यविकत्थनत्वं[2] धीरोदात्तत्वम् । महासत्त्वो धीरोदात्त इत्युक्ते धीरोद्धते अतिव्याप्तिः । तन्निवृत्त्यर्थमविकत्थन इति । तावत्युक्ते असमर्थेऽतिव्याप्तिः ।

---

[1] i) भेदैश्चतुर्धा ललितशान्तोदात्तोद्धतैरयम् ॥

(दशरूपकम् प्रकाशः २-३)

ii) उदात्त उद्धृतश्चैव ललितः शान्त इत्यपि ।
धीरपूर्वा इमे पूर्वैश्चत्वारो नायकाः स्मृताः ॥

(प्रतापरुद्रीये-काव्यप्रकरणम्-२७)

iii) नेता चतुर्विधोऽसौ-धीरोदात्तश्च धीरललितश्च धीरप्रशान्तनामा. ततश्च धीरोद्धतः स्यातः—(रसार्णवसुधाकरः प्र. वि- ७२-७३)

[2] i) महासत्त्वोऽतिगम्भीरः क्षमावानविकत्थनः ।
स्थिरो निगूढाहंकारो धीरोदात्तो दृढव्रतः ॥

(दशरूपकम् प्रकाशः—२-४)

ii) महासत्त्वोऽतिगम्भीरः कृपावानविकत्थनः ।
प्रतापरुद्रवद्धीरो धीरोदात्तः स संमतः ॥ (प्र.रु. का. प्र - २७)

iii) दयावानतिगम्भीरो विनीतः सत्त्वसारवान् ।
दृढव्रतस्तितिक्षावानात्मश्लाघापराङ्मुखः ।
निगूढाहंकृतिर्धीरैः धीरोदात्त उदाहृतः ॥ (र. सु. प्र वि. ७३-७४)

तदर्थं महासत्त्व इति। तावत्युक्ते कदाचिदविकत्थनत्वं धीरोद्धतेऽपि, तेन तद्दोषतादवस्थ्यम्। तदर्थं कृपावानिति। तावत्युक्ते धीरललिते अतिव्याप्तिः। तदर्थमतिगाम्भीर्यसत्त्वे सतीति। ननु कदाचित् कृपावत्त्वं लक्षणान्तर्गतं सर्वदा वा। नाद्यः धीरोद्धतेऽपि सम्भवात्। नान्त्यः। असम्भवापत्तेः। श्रीरामादेरपि वाल्यादिवधकाले [1]कृपाराहित्यस्य सत्त्वादिति चेन्न। प्रायशो [2]वधार्हदशाऽकालीनकृपावत्त्वस्यैव लक्षणान्तर्गतत्वात्।

अवस्सूक्तमुक्तं लक्षणम्। यथा—

*आलोक्याध्वनि ताटकामभिगतामाकम्पयन्तीं दिशो
रामस्तामनुकम्पमानहृदयो गाधेयसञ्चोदितः।
सन्द्दष्ट्यर्पणचोदितेन कलितं सौमित्रिणा कार्मुकं
सोऽधिज्यं विरचय्य मन्दवलितग्रीवो लुलोके शरम्॥

---

*ताटका स्त्री इति कारणेन तां दृष्ट्वा एकत्र दया, अन्यत्र, तां जघनिथेति गुर्वादेशः। तदनुगुणतः सौमित्रिणा कार्मुकसज्जीकरणम्। कार्मुकदर्शनमात्रेण रामस्य शरे दृष्टिपातः इति तत्कालीनसन्निवेश-चित्रणमेतत्।

---

[1] कृपाराहित्यसम्भवादिति—त

[2] वधार्हवदकालीन—द

दर्पसामर्थ्यभूयिष्ठत्वेऽपि सति चण्डवृत्तिविकत्थनो [1]धीरोद्धतः ।

विकत्थनो धीरोद्धत इत्युक्ते तादृश्यसमर्थे अतिव्याप्तिः। तदर्थं दर्पसामर्थ्यभूयिष्ठत्वे सतीत्युक्तम्। तावत्युक्ते धीरोदात्ते अतिव्याप्तिः। तन्निवृत्त्यर्थं विकत्थन इत्युक्तम्। न च विकत्थनत्वमसम्भवदित्याह-चण्डवृत्तिरिति। दर्पसामर्थ्यभूयिष्ठत्वे सति मायाविन्त्वम्, तत्त्वे सति सुलभक्रोधत्वं वा धीरोद्धतत्वम्।

यथा—

स्त्रीचोरं परिमार्गितुं रघुपतेर्दासोऽहमत्रागतः
छित्वा सज्जतमानि सप्त विदधे शूलानि सालान्यम्।
अध्यारोपयितुं तमाप्तसहितं स त्वं समाप्योऽहितं
भुङ्क्ष्वेति प्रजगाद मारुतसुतो लङ्काधिपस्याग्रतः ॥

अत्र हनूमतः धीरोद्धतत्वम्।

---

[1] (i) दर्पमात्सर्यभूयिष्ठो मायाछद्मपरायणः।
धीरोद्धतस्त्वहंकारी चलश्चण्डो विकत्थनः ॥
(दशरूपकम्—प्रकाशः-२-५)

ii) दर्पमात्सर्यभूयिष्ठः चण्डवृत्तिर्विकत्थनः।
मायावी सुलभक्रोधः स धीरोद्धत उच्यते ॥
(प्रतापरुद्रीये-काव्यप्रकरणम्-३०)

iii) मात्सर्यवानहङ्कारी मायावी रोषणश्चलः।
विकत्थनो भार्गवादिः धीरोद्धत उदाहृतः ॥
(रसार्णवसुधाकरः-प्र. वि. ७०)

निश्चिन्तत्वे सति सुखैकभूः कलासक्तो वा [1]धीरललितः। उभयत्र धीरोदात्तादावतिव्याप्तिपरिहाराय निश्चिन्तत्वे सतीत्युक्तम् ॥

यथा—

विश्वामित्रमुनेरनुग्रहबलाच्छ्रेयः परं मेऽभवत्
रामोऽस्मात्वुररीकरोति सुगुणो राज्याभिषेकोत्सवम्।
निश्चिन्तस्समभूवमागतजराकालेऽहमित्यालप-
द्राजा पङ्क्तिरथो विसृज्य सचिवानन्तःपुरं प्राप सः॥

अत्र दशरथो धीरललितः।

धैर्यशान्तिसम्पन्नत्वे सति [2]प्रसन्नात्मत्वे सति द्विजोत्तमत्वं [3]धीरशान्तत्वम्।

---

i) निश्चिन्तो धीरललितः कलासक्तः सुखी मृदुः।
(दशरूपकम् - प्रकाशः-२-३) (प्र. रु. का. प्र.-३१)

ii) निश्चिन्तो धीरललितः तरुणो वनितावशः।
(रसार्णवसुधाकरे--प्र. वि—७५)

iii) धीरललितः- इत्यस्य अधिकललितः इति 'द' प्रतौ

[3] i) सामान्यगुणयुक्तस्तु धीरशान्तो द्विजादिकः॥
(दशरूपकम्—प्रकाशः—२-४)

---

[2] प्रपन्नात्मकत्वे सति—त

अत्र अप्रसन्नात्मनि [1]द्विजेऽतिव्याप्तिनिवृत्त्यर्थं प्रसन्नात्मत्वे सतीति। तावत्युक्ते तादृशे धैर्यशान्तिरहिते द्विजे अतिव्याप्तिः। तन्निवृत्त्यर्थं [2]प्राथमिकविशेषणमिति बोध्यम्।

यथा—

[3]रामप्रदानं कुशिकात्मजाय
तदाज्ञयकार्षीत् भगवान् वसिष्ठः।
गुणाधिको राजसमीपवर्ती
परोपकारं पुरुषः करोति॥

अत्र वसिष्ठो धीर[4]शान्तः॥

---

ii) धीरः शान्तः प्रसन्नात्मा धीरशान्तो द्विजादिकः।
(प्रतापरुद्रीये—काव्य-प्र ३२)

iii) समप्रकृतिकः क्लेशसहिष्णुश्च विवेचकः।
ललितादिगुणोपेतो विप्रो वा सचिवो वणिक्॥
धीरशान्तः चारुदत्तमाधवादिरुदीरितः।
(रसार्णवसुधाकरे-प्र. वि-७६-७७)

iv) धीरशान्तत्वम्—इत्यस्य 'अधिकशान्तत्वम्'
इति—'द' प्रतौ

---

1 द्विजेऽव्याप्तिनियृत्त्यर्थं—द
2 प्राथमिकं विशेषणमिति—द
3 रामप्रयाणं—म
4 धीरशान्तः' इत्यस्य 'अधिकशान्तः' इति 'द' प्रतौ।

अत्र श्रृङ्गारनायका निरूप्यन्ते ।

[1]तत्रानुकूल दक्षिणशठधृष्टभेदेन [2]चतुर्विधाः श्रृङ्गाररसनायकाः ।

तत्र [3]अनुकूलो नाम—एकनायिकासक्तः ।

यथा—

स एकपत्नीव्रतसन्ततादरः
त्वदन्यकान्तां हृदि नापि मन्यते ।
त्वदादरेणेव रणे जयश्रिया
रघूत्तमस्सङ्गममद्य काङ्क्षते ॥

अत्र रामचन्द्रस्य सीतायां विशेषेण अनुरागः प्रतीयते ।

---

[1] i) स दक्षिणः शठो धृष्टः पूर्वां प्रत्यन्यया हृतः
(दशरूपकम्-प्रकाशः २-६)

) अथ शृङ्गारविषयश्चत्वारो नायका इमे ।
अनुकूलो दक्षिणश्च धृष्टः शठ इति स्मृताः ॥
प्रतापरुद्रीये का. प्र. ३४)

iii) चतुर्धा सोऽपि कथितो वृत्त्या काव्यविचक्षणैः ।
अनुकूलः शठो धृष्टो दक्षिणश्चेति भेदतः ॥
(रसार्णवसुधाकरे-प्र-वि-८०-८१)

[3] i) अनूकूलस्त्वेकनायिकः (द.रू. प्र. २-७)
(विशेषः—अनुकूलः धृष्टनायकभेद इति अस्य मतम्)

---

[2] चतुर्विधशृङ्गाररसनायकाः—द

बहुनायिकासु तुल्यवृत्ति[1]र्दक्षिणः ।

त्वां रावणेन हरता ननु देवि सीते
रामस्य कीर्तिवनिता च हृता जयश्रीः ।
मानी तवाद्य दयितो युधि तं निहत्य
तिस्रोऽपि साधयितुमिच्छति निर्विलम्बम् ॥

अत्र तिस्रोऽपि निर्विलम्बं साधयितुमिच्छतीत्यनेन रामस्य दक्षिणनायकत्वं गम्यते ॥

कृतापराधो निर्भीको [2]धृष्टनायकः ।

---

ii) एकायत्तोऽनुकूलः स्यात्—(प्र. रु-का-प्र-३५)

iii) अनुकूलस्त्वेकजानिः (र.सु.प्र.वि-८१)

[1] i) दक्षिणोऽस्यां सहृदयः—(द. रू. प्र. २-७)

ii) तुल्योऽनेकत्र दक्षिणः (प्र. रु. का. प्र.-३६)

iii) नायिकास्वप्यनेकासु तुल्यो दक्षिण उच्यते ।
(र. सु. प्र. वि-८१)

[2] i) व्यक्ताङ्गवैकृतो धृष्टो—(द. रू. प्र-२-७)

i) व्यक्तापराधो गतभीः स धृष्ट इति कथ्यते ॥
(प्र. रु. का. प्र-३८)

iii) धृष्टो व्यक्तान्ययुवतिभोगलक्ष्मा विनिर्भयः ।
(र. सु. प्र. वि-८१)

*यथा—

गूढविप्रियकारी [1]शठः ।

यथा—

[2]संतापं वितनोति चेतसि शठः कालाम्बुवाहाकृतिः
तस्या एष मनस्तु शीतलयुते चिंत्र कथं गाहते ।
गेहं बद्धकवाटमत्र कलये रामावतारे वने
वासात्साधितमूलिकोऽयमितिनिर्धूतोऽन्यया [3]माधवः ॥

अत्र [4]राम एव कृष्णातारे शठनायक इति गम्यते ।

[5]नायिका निरूप्यते । सा त्रिविधा ।

---

* मातृकायाम् उदाहरणपद्यं नैव दृश्यते ।

1 i) गूढविप्रियकृच्छठः–(द. रू. प्र. २-७) (प्र. रु. का. प्र-२९)

ii) शठो गूढापराधकृत् (र. सु. प्र. वि-८१)

5 i) अथ नायिका निरूप्यन्ते—
नेतृसाधारणगुणैरुपेता नायिका मता ।
स्वकीया परकीया च सामान्या चेति सा त्रिधा ॥
सम्पत्काले विपत्काले या न मुञ्चति वल्लभम् ।
शीलार्जवगुणोपेता सा स्वीया कथिता बुधैः ॥
(र. सु. प्र. वि. ९४-९५)

---

2 तापं मे वितनोति—द

3 मा शुचः—म

4 काम एव

स्वीया परकीया सामान्या चेति। तासां लक्षणानि रसार्णवसुधाकरे शिङ्गभूपालेन प्रपञ्चितानि द्रष्टव्यानि।

तत्र अस्माभि[1]रष्टविधा शृङ्गारनायिका निरूप्यन्ते।

---

अन्यापि द्विविधा कन्या परोढा चेति भेदतः ॥

तत्र कन्या त्वनूढा स्यात् सलज्जा पितृपालिता।
सखीकेलिषु विस्रब्धा प्रायो मुग्धा गुणान्विता ॥

परोढा तु परेणोढाप्यन्यसम्भोगलालसा।
लक्ष्या क्षुद्रप्रबन्धे सा सप्तशत्यादिके बुधैः ॥

(र. सु. प्र. वि. १०६-१०९)

साधारणस्त्री गणिका कलाप्रागल्भ्यधार्ष्ट्ययुक्

(र. सु. प्र. वि. ११०)

ii) स्वान्या साधारणस्त्रीति तद्गुणा नायिका त्रिधा

(द. रू. प्र. २-१५)

[1] i) आसामष्टावस्थाः स्युः स्वाधीनपतिकादिकाः।

(द. रू. प्र-२-२३)

ii) अथासामष्टावस्थाः—

प्रथमं प्रोषितपतिका वासकसज्जा ततश्च विरहोत्का।
अथ खण्डिता मता स्यात् कलहान्तरिताभिसारिका चैव ॥

कथिता च विप्रलब्धा स्वाधीनपतिस्तथा चान्या।
शृङ्गारकृतावस्थाभेदात् ताश्चष्टधा भिन्नाः ॥

(र. सु. प्र. वि. १२१-१२२)

तत्र नित्यं प्रियोपलालिता [1]स्वाधीनपतिका ।

यथा—

कुञ्जेषु गुञ्जदलिपुञ्जचणेषु [a]वासैः
पुष्पैः फलैर्वनभवैर्मधुरैर्मरन्दैः ।
व्यस्मारयन्निमिसुतामधिचित्रकूट-
मारामभूमिरुचिरं निजधाम रामः ॥

---

iii) स्वाधीनपतिका चैव तथा वासकसज्जिका ।
विरहोत्कण्ठिता चैव विप्रलब्धा च खण्डिता ॥

कलहान्तरिता चैव तथा प्रोषितभर्तृका ।
तथाभिसारिका चेति क्रमाल्लक्षणमुच्यते ॥

(प्र. रु. का. प्र. ४१-४२)

[1] i) स्वायत्तासन्नदयिता हृष्टा स्वाधीनवल्लभा ।
(र. सु. प्र. वि- १५०)

ii) आसन्नायत्तरमणा हृष्टा स्वाधीनभर्तृका
(द. रु. प्र. २-२४)

iii) प्रियोपालालिता नित्यं स्वाधीनपतिका मम ।
(प्र. रु. का-प्र-४३)

---

[a] वाग्रे—त

प्रियागमनदशायां [1]केलिगृहमात्मानञ्च
अलङ्कुर्वाणा [2]वासकसज्जिका ।

यथा—

आधायाङ्गरुचा प्रदीपकलिकाः स्वान्तः पुरेऽ(नूहिताः)
देहल्यामपि रङ्गवल्लिरचनां पादाग्रभाभिः स्फुटाम् ।
आयाते वनक्लृप्तकेलिमृगये रामे निशाया मुखे
सीता द्वारमधिष्ठिताजनि दृशा व्याकुर्वती तोरणम् ॥

कान्ते चिरयत्युन्मना [3]विरहोत्कण्ठिका ।

---

[2] i) भरताद्यैरभिदधे स्त्रीणां वारस्तु वासकः ।
स्वावासकगते कान्ते समेष्यति गृहान्तिकम् ॥
सज्जीकरोति चात्मानं या सा वासकसज्जिका ।
(र. सु. प्र. वि. १२५–१२६)

ii) प्रियागमनवेलायां मण्डयन्ती मुहुर्मुहुः ।
केलीगृहं तथात्मानं सा स्याद्वासकसज्जिका ॥
(प्र. रु. का॰ प्र-४४)

iii) मुदा वासकसज्जा स्वं मण्डयत्येष्यति प्रिये ।
(द. रू. प्र. २-२४)

[3] i) अनागसि प्रियतमे चिरयत्युत्सुका तु या ।
विरहोत्कण्ठिता भाववेदिभिः सा समीरिता ॥
(र. सु. प्र वि-१२८)

---

[1] केलिगृहात्मानावलङ्कुर्वाणा—म

यथा—

लोकानन्दन वायुनन्दन पिता ते दक्षिणो मारुतो
जाने संप्रति तं तु सान्त्वय स मां नेतः परं बाधताम् ।
चन्द्रो द्रुह्यतु किं करोम्यचकितो* ... ... ... ....
.............. मनुते श्रीरामचन्द्रोऽपि माम् ॥

अत्र रामे विलम्बमाने सीता विरहोत्कण्ठिता ।

सङ्केतस्थलं परिकल्प्य प्रियवञ्चिता मदनातुरा [1]विप्रलब्धा ।

यथा—

किं साकेतरमे कृशासि, सखि मत्प्राणप्रियो राघवो
नीत्वाहं निपिने चतुर्दशसमाः प्राप्स्याम्युपान्तं तव ।
इत्युक्त्वा निरगाद्वनं युगशतैर्नैकैर्गतं नागतो
मन्ये भूसुतया समं गतवता तेनाभवं वञ्चिता ॥

---

ii) चिरयत्यधिकं कान्ते विरहोत्कण्ठितोन्मनाः ।(प्र. रु. का. प्र. ४६)

iii) चिरयत्यव्यलीके तु विरहोत्कण्ठितोन्मनाः । (द. रू. प्र. २-२५)

*मातृकायां चकितो इत्यनन्तरं मनुते इत्यतः प्राक् ग्रन्थभागः त्रुटितः ।

[1] i) कृत्वा सङ्केतमप्राप्ते दयिते व्यथिता तु या ।
विप्रलब्धेति सा प्रोक्ता बुधैरस्यास्तु विक्रिया ॥
निर्वेदचिन्ताखेदाश्रुमूर्च्छानिःश्वासितादयः ॥
(र. सु. प्र. वि. १४८)

अत्र अयोध्यालक्ष्मीः रामविरहेण क्षणं युगं मन्यमाना विप्रलब्धा।

अन्यत्रनीतनिशे प्रिये समागते अन्यसंभोगलाञ्छनैः कुपिता [1]खण्डिता ।

रामे राज्यकरे त्वया समधिकास्सम्पादिता वल्लभाः
क्वाहं तत्र भवांस्तु जागरधरस्तस्या स्त्रिया मां गृहे ।
नीत्वा प्रातरुपागतो मम गृहं निद्राहतप्रेक्षणो
मद्दासीमवलम्ब्य संप्रति पुनस्तत्स्याद्गुजैर्वाञ्छितम् ॥

---

ii) क्वचित् सङ्केतमावेद्य दयितेनाथ वञ्चिता ।
स्मरार्ता विप्रलब्धेति कलाविद्भिः प्रकीर्त्यते ॥
(प्र. रु. का. प्र. ४७)

iii) विप्रलब्धोक्तसमयमप्राप्तेऽतिविमानिता । (द. रू. प्र. २-२६)

1 i) उल्लङ्घ्य समयं यस्याः प्रेयानन्योपभोगवान् ।
भोगलक्ष्माङ्कितः प्रातरागच्छेत् सा हि खण्डिता ॥
(र. सु. प्र. वि. १३०)

ii) नीत्वान्यत्र निशां प्रातरागते प्राणवल्लभे ।
अन्यासम्भोगचिह्नैस्तु कुपिता खण्डिता मता ॥
(प्र. रु. का. प्र. ४९)

iii) ज्ञातेऽन्यासङ्गविकृते खण्डितेर्ष्या कषायिता ।
(द. .रू प्र. २-२५)

कान्तं कोपात् परिभूय पश्चात्तापं गता [1]कलहान्तरिता ।

यथा—

घटयसि किमिह त्वं प्राप्तसौख्ये कवाटं
ननु हृदयकवाटं नैव शक्नोषि लब्धुम् ।
इति रघुपतिदूतीवाचमाकर्ण्य सीता
स्मितधवलितगण्डा तत्तदानीं विवव्रे ॥

अत्र सीता रामेण सह [2]प्रणयकलहेनान्तरिता ।

देशान्तरगते कान्ते क्लिश्यन्ती [3]प्रोषितभर्तृका ।

---

[1] i) या सखीनां पुरः पादपतितं वल्लभं रुषा ।
निरस्य पश्चात् तपति कलहान्तरिता तु सा ॥
(र. मु. प्र. वि. १२२)

ii) कोपात् प्रियं पराभूय पश्चात्तापसमन्विता
कलहान्तरिता नाम सूरिभिः परिकीर्तिता ॥
(प्र. रु. का. प्र. ५१)

iii) कलहान्तरितामर्षात् विधूतेऽनुशयार्तियुक् ।
(द. रू. प्र. २-२६)

[3] i) दूरदेशं गते कान्ते भवेत् प्रोषितभर्तृका (र. मु. प्र. वि. १२३)
ii) देशान्तरगते कान्ते खिन्ना प्रोषितभर्तृका (प्र. रु. का. प्र. ५२)
iii) दूरदेशान्तरस्थे तु कार्यतः प्रोषितप्रिया ॥ (द. रू. प्र. २-२७)

---

[2] प्रणयकलहान्तरिता—द

यथा—

[1]गौरीव शर्वं मृगरत्नपाणिं कदा नु रामं कलये भवन्तम् ।
इतीरयन्ती निजपर्णशालाद्वारोपकण्ठं क्षितिजा जगाम ॥

अत्र रामे मायामृगहरणाय देशान्तरं गते क्लेशार्ता सीता प्रोषितभर्तृका ।

स्मरार्ता कान्तमभिसरन्ती [2]अभिसारिकेत्युच्यते ।

आर्ये राज्यरमे प्रियाभिसरणे ते कीदृशं साहसं
[3]हित्वा नीलनिचोलमस्तिनिनदन्मञ्जीरकाञ्चीगुणा ।
त्वं यस्मादभिसृत्य राममतुलाकारं मुदा कारणं
नेत्रे तस्य जनेन चुम्बितवती प्रत्यक्षमालोकिता ॥

---

[1] इदं पद्यं 'त' पुस्तके न दृश्यते ।

[2] i) मदनानलसन्तप्ता याभिसारयति प्रियम् ।
ज्योत्स्नातमस्विनीयानयोग्याम्बरविभूषणा ॥
स्वयं वाभिसरेद् या तु सा भवेदभिसारिका ।
(र. सु. प्र. वि. १३४-१३५)

ii) कान्ताभिसरणोद्युक्ता स्मरार्ता साभिसारिका
(प्र. रु. का. प्र. ५४)

iii) कामार्ताभिसरेत् कान्तं सारयेद्वाभिसारिका ।
(द. रू. प्र. २-२७)

---

[3] भित्वा—म

सा च नायिका सङ्क्षेपेण [1]त्रिविधा। मुग्धा, मध्या, प्रौढा चेति।

तत्र उदयद्यौवना लज्जाविजितमन्मथा [2]मुग्धा

यथा—

रामे कुर्वति शर्वचापदलनं प्राप्ताभिरत्युत्सवं
प्रौढाभिस्सहचारिणीभिरुदिते क्लप्ते[3]विनोदव्रजे।
पूर्णे स्वस्य [4]मनोरथस्य रचिते [5]नामाभियाने महे
सीता राममुदाहरत्स्वदयितं संसज्जया लज्जया ॥

---

[1] i) सा च स्वीया त्रिधा मुग्धा मध्या प्रौढेति कथ्यते।
(र. सु. प्र. वि. १६)

ii) मुग्धा मध्या प्रगल्भेति स्वीया शीलार्जवादियुक्।
(द. रू. प्र. २–१५)

iii) सङ्क्षेपेण नायिका त्रिधा। मुग्धा मध्या प्रौढेति।
(प्र. रु. का. प्र. ५५)

[2] मुग्धा नववयःकामा रतौ वामा मृदुः क्रुधि।
(र. सु. प्र. वि–९६, द. रू. प्र. २-१६)

---

[3] विनोदव्रते–द

[4] मनोरमस्य—म

[5] रामाभिधाने महे—द

लज्जामन्मथयोरन्तरस्थिता जातयौवना [1]मध्या ।

यथा—

उंकारं वरमातनोति वचने त्वस्माकमालोकने
व्यासङ्गे मिलिते पुनः क्षितिसुता रामं गवाक्षान्तरैः ॥
सीतां कस्य सभान्तरे समुपितं सा वंचना चातुरी
[2]संप्राप्ता ... ... ... ... ... ... ... ...

अत्र सीताया मध्यमनायिकात्वं प्रतीयते ।

स्मरमन्दीकृतलज्जा सम्पूर्णयौवना [3]प्रौढा ।

---

[1] i) समानलज्जामदना प्रौद्यत्तारुण्यशालिनी
मध्या कामयते कान्तं मोहान्तसुरतक्षमा ।
(र. सु. प्र. वि. ९८)

ii) लज्जामन्मथमध्यस्था मध्यमोदितयौवना ॥
(प्र.रु.का. प्र. ५६)

iii) मध्योद्यद्यौवनानङ्गा मोहान्तसुरतक्षमा ॥
(द. रू. प्र. २-१६)

[3] i) सम्पूर्णयौवनोन्मत्ता प्रगल्भा रूढमन्मथा ।
दयिताङ्गे विलीनेव यतते रतिकेलिषु ॥
रतप्रारम्भमात्रेऽपि गच्छत्यानन्दमूर्च्छनाम् ।
(र. सु. प्र. वि. १०१-१०२)

---

[2] अत्र चतुर्थपादः पूर्णत्वेन न दृश्यते । 'द' प्राप्तौ विद्यमानं पाठान्तरम् अशुद्धमिति त्यक्तम् ॥

यथा—

हस्तावलम्बमवलम्ब्य महीसुतायाः
वक्षोजभारनतमध्यमधिव्रजन्त्याम् ।
तत्रत्यसान्द्रपुलकाङ्कुरविद्धपाणी
रामः स्मरेषु दलितः शयनान्तमागात् ॥

अत्र सीतायाः प्रौढनायिकात्वं गम्यते ॥

नायिकाभावान्तराणि प्राचीनग्रन्थेषूक्तानि द्रष्टव्यानि ।

श्रीरामचन्द्रं स्वकृतेः कवीशो
यो नायकं नायकमातनोति ।
स एव सैवात्र कृतिश्च (धन्या)
तस्यैव लोके सफलं च जन्म ॥

इति श्रीचरुकूरि कोण्डुभट्टोपाध्यायतनयेन
यज्ञेश्वरदीक्षितेन तिरुमलयज्वप्रियसोदरेण विरचिते
अलङ्काररराघवे नायकप्रकरणं

सम्पूर्णम्

---

ii) स्मरमन्दीकृतव्रीडा प्रौढा सम्पूर्णयौवना

(प्र. रु. का. प्र. ५६)

# काव्यप्रकरणम्

अथ काव्यस्वरूपं निरूप्यते—

ननु—"शब्दार्थयुगलं काव्यं निर्दोषं गुणसंयुतम् ।
अलङ्कृतमलङ्कारैरनलङ्कृति वा क्वचित् ॥

इति साहित्यचिन्तामणिकारः ।

"तददोषौ शब्दार्थौ सगुणावनलङ्कृती पुनः क्वापि"

इति काव्यप्रकाशिकाकारः ।

"अर्थवर्णात्मकं कविकर्म काव्यमिति' एकावलीकारः ।

"उज्वलपदं श्लाघनीयबन्धार्थं [1]रसानुबन्धसरसं
कविकर्म काव्यमिति' मदनादयः ।

'अदोषौ सगुणौ सालङ्कारौ शब्दार्थौ काव्यम्'

इति विद्यानाथः ।

तत्राद्यं तावन्न युक्तम् । प्रथमलक्षणस्य अनलङ्कृतिकाव्ये अव्याप्तेः । द्वितीयलक्षणस्य सालङ्कृतिकाव्ये अव्याप्तेः । ननु तत्र प्रथमार्धमेव काव्यलक्षणम् । शेषं तु तत्स्वरूपकथनपरमिति चेन्न । सर्वदोषराहित्यस्य रघुवंशमाघादावप्यभावेन असम्भवापत्तेः । यत्किञ्चिद्दोषराहित्यस्य गुणानां च वेदेऽपि सम्भवादतिव्याप्तिप्रसङ्गात् ।

अत एव [2]काव्यप्रकाशिकाकारलक्षणमपि न युक्तम् । नापि तृतीयलक्षणं युक्तम् । पौरुषेयवेदवादिमते वेद एवातिव्याप्तेः । ईश्वरस्यादिकवित्वेन तस्य

---

[1] रसानुबन्धसुरसं—द

[2] काव्यप्रकाशकारलक्षणं न युक्तम्—द

तत्कर्मरूपत्वात्। नापि चतुर्थं युक्तम्। श्लाघनीयबन्धार्थं कविकर्म काव्यम् इत्येतावत्येव लक्षणे सम्भवति व्यर्थविशेषणत्वात्। नापि विद्यानाथलक्षणं युक्तम्। अनलङ्कृतिकाव्ये अव्याप्तेः। 'काव्यापकर्षहेतुः दोषः' इति तन्मते दोषनिर्वचनात्। दोषज्ञाने काव्यज्ञानं, काव्यज्ञाने दोषज्ञानम् इत्यन्योन्याश्रयाच्च। किञ्च [1]कविकर्तृकमात्रस्यैवेदं लक्षणं, किं वा काव्यव्यवहारविषयस्य। नाद्यः। [2]कविकर्तृकशास्त्रादावव्याप्तेः। तत्र सगुणसालङ्कारत्वाभावात्। ननु कविदशापन्नकृता कृतिः कविकृतिः। तस्या एवेदं लक्षणम्। शास्त्रादिकं तु विद्वद्दशापन्नकृतिः। अतो नाव्याप्तिरिति चेन्मैवम्। भ्रान्तोऽभूः। कविविदुषोः पर्यायत्वात्। 'संख्यावान् पण्डितः कवि' रिति अमरकोशकारवचनादकवेरपण्डितत्वात्। ननु तथापि नाव्याप्तिः। [3]शास्त्रादावपि स्वभावोक्त्याद्यलङ्कारसम्भवात्। यत्किञ्चिद्गुणसम्भवात् दोषाभावाच्चेति चेन्न। [4]तत्र स्वभावोक्तेः सहृदयहृदयचमत्कारित्वाभावेन अलङ्कारत्वाभावात्। अन्यथा अतिप्रसङ्गात्। नेतरः। उक्तदोषात्। ननु वेदोऽपि काव्यमेवेति नोक्तदोष इति चेदुच्यते। वेदस्य तार्किकादिमते परमेश्वरप्रणीतत्वेन काव्यत्वसम्भवेऽपि न तत्र [5]तेषामिव इतरेषां काव्यत्वव्यवहारः। येन तान् प्रति नातिव्याप्तिस्स्यात्।

[6]मीमांसकादिमते तु वेदस्य नित्यत्वेन सुतरां न काव्यव्यवहारः इति

---

[1] कविकृतमात्रस्यैवेदं—त

[2] कविकृतशास्त्रादावव्याप्तेः—द

[3] शास्त्रादावबुद्धिस्वभावोक्त्याद्यलङ्कारसंभवात् किञ्चिद्गुणसम्भवात्—द

[4] तत्र स्वभावोक्तिः सहृदय—द

[5] तेषामेव—त

[6] मीमांसकमते तु—म

नातिव्याप्तितो मुक्तिः। किञ्च [1]नाटकादावव्याप्तिः। तत्र रघुवंशादिकाव्यादाविव [2]रूढ्या नाटकादिभेदव्यवहारस्याकस्मिकतापत्तेः। नन्वत्र अर्थशब्देन [3]अष्टादशवर्णात्मकं विवक्षितमिति नोक्तातिव्याप्तिरिति चेन्न। सामस्त्येनाष्टादशवर्णनात्मकत्वस्य माघमेघसन्देशादावप्यसम्भवात्। नगरादियत्किञ्चिद्वर्णनस्य वेदनाटकादावपि सम्भवात्। वेदेऽपि देवासुरसङ्ग्रामादिवर्णनात्। 'देवासुराः संयत्ता आसन्' इति, 'देवानां पूर्‌योध्ये' त्यादौ [4]नगरादिवर्णनस्याविर्भावात्। ननु [5]तद्वर्णनप्राधान्यं लक्षणार्थ इति नोक्तदोष इति चेन्न। रघुवंशरामायणादावव्याप्तिप्रसङ्गात्। तस्य वर्णनाप्राधान्येनाप्रवृत्तेः। तत्त्वे वा 'रघूणामन्वयं वक्ष्ये' इति [6]कालिदासप्रतिज्ञाविरोधप्रसङ्गात्। न च तद्वर्णनाप्राचुर्यं लक्षणत्वेन विवक्षितमिति वाच्यम्। वेदानर्घराघवादावपि तत्प्राचुर्यसम्भवात।

ननु रघुवंशादेरपि तद्वर्णनाप्राधान्येनैव प्रवृत्तिः। कविप्रतिज्ञा तु निजकाव्यस्य पुण्यश्लोकचरितनिबन्धन[7]रूपत्वरोचनार्थमिति चेदुच्यते। रघुवंशादेः तद्वर्णनाप्राधान्येनैव प्रवृत्तिरिति कुतो ज्ञायते। ननु काव्यत्वेन

---

[1] नाटकादावतिव्याप्तिः—त

[2] रूढ्या काव्यव्यवहाराभावात, सत्वे वा काव्यनाटकादिभेदव्यवहारस्य आकस्मिकतापत्तेः—त

[3] अष्टादशवर्णनात्मकम्' इत्यारभ्य यत्किञ्चिद्वर्णनस्य वेद-इति पर्यन्तं 'त' पुस्तके न दृश्यते।

[4] नगरादिवर्णनस्यापि दर्शनात्—त

[5] तद्वर्णनात् प्राधान्यं—द

[6] कालिदासप्रतिज्ञाविरोधाप्रसङ्गात्—त

[7] रूपत्वसूचनार्थमिति—त

ज्ञायत इति चेत्तर्हि स्पष्ट एव अन्योन्याश्रयः। काव्यत्वे सिद्धे तद्वर्णना-[1]प्राधान्यसिद्धिः। तत्सिद्धौ काव्यत्वसिद्धिरिति। एतेन [2]'कृन्ति विसेसो कंव' इति कर्पूरमञ्जरीकारलक्षणमपि निरस्तं बोध्यम्। तस्याननुगमात [3]अव्याप्तेरनपायात्। शास्त्रादावतिव्याप्तेश्च। [4]तस्मान्नेदं काव्यलक्षण-मिति चेन्न।

अत्रोच्यते—'वेदवेदोपजीविनाट्यप्रधानप्रबन्धप्रतियोगिकान्योन्या-भावाधिकरणत्वे सति नित्यदोषरहितसगुणशब्दार्थौ काव्यम्' इति लक्षणनिष्कर्षः। अत्र सत्यन्तविशेषणेन वेदव्याकरणस्मृतीतिहासपुराण-नाटकादावतिव्याप्तिः परिहृता भवति। रूढ्या काव्यव्यवहारविषयस्यैव लक्ष्यत्वान्नोक्तविकल्पः प्रसरति। गुणदोषालङ्कारलक्षणानि काव्यगर्भाण्ये-वास्माभिर्विवक्ष्यन्त इति नान्योन्याश्रयदोषः। दोषनित्यत्वञ्चाभियुक्तवचनात् ज्ञातव्यम्। न च काव्येऽनित्यदोषाङ्गीकारे तदल्पमपि नोपेक्ष्यम्। 'काव्ये दुष्टं कथञ्चनेति दण्डीवचनं विरुद्धं स्यादिति वाच्यम्। तस्यापि नित्यदोषाभिप्रायत्वात्। अन्यथाऽसम्भवापत्तेः। शब्दार्थाविति द्वित्वं ग्राहकत्व वदविवक्षितं बोध्यम्। अतो निरवद्यं काव्यलक्षणम्।

तत्र काव्यरूपसरस्वत्याः शब्दार्थौ मूर्तिः व्यङ्ग्यं जीवितम्। अलङ्कारः

---

[1] प्राधान्यसिद्धेः—त

[2] जुन्ति विसेसो—म

[3] अव्याप्तेरनुपायात्- म

[4] तस्मान्नवं काव्यलक्षणम्—द

[5] निर्वक्ष्यन्त इति —म

अलङ्कार एव । श्लेषादयो गुणाः [1]सौन्दर्यादिगुणाः। रीतिरुत्कर्षावहस्वभावः। वृत्तिर्वर्तनम्। पदानुगुणविश्रान्तिः शय्या। [2]रसास्वादप्रभेदः पाकः पाककल्प इति काव्यसामग्री, लौकिकसामग्रीवद् बोध्या।

ननु शब्दार्थौ काव्यस्य मूर्तिरित्युक्तम्। कोऽयं शब्दो नाम। नन्वर्थसम्बन्धी शब्द इति चेन्न। घटाद्यर्थसम्बन्ध्यर्थान्तरे [3]अतिव्याप्तिः। नन्वर्थेन सह नित्यसम्बन्धः शब्द इति चेन्न। तार्किकमते समवायेन सम्बन्धिनि रूपादावतिव्याप्तेः। उभयोरेकतरस्य वा। अनित्यत्वेन तत्सम्बन्धस्याप्यनित्यत्वात् असम्भवापत्तेः।

अत मतम्। 'अर्थेन [4]सहजौत्पत्तिकसम्बन्धश्शब्दः। [5]औत्पत्तिकः स तु शब्दस्यार्थेन सम्बन्ध' इति सूत्रकारवचनात् इति। मैवम्। गुणगुणिनोस्सहोत्पत्तिमते गुणादावतिव्याप्तेः। [6]तयोस्सहानुत्पत्तिवादेऽपि डित्थादिसांकेतिकशब्देषु अव्याप्तिः, कालान्तरे नामकरणात् तस्यार्थेन सह अनुत्पत्तेः। [7]ननु तस्यार्थप्रतिपादकश्शब्द इति चेदुच्यते। किमिदं प्रातिपदिकत्वम् अर्थप्रतिपत्तिजनकत्व[8]मात्रञ्चेत् हन्त! नयनसंज्ञादावतिव्याप्तेः। नैयत्येनार्थप्रतिपत्तिजनकत्वं चेत् चक्षुरादा[9]वतिव्याप्तेः। ननु वृत्तिमत्त्वे सत्यर्थ-

---

1 श्लेषादयो गुणाः—त

2 स्वादप्रभेदः पाकः—म

3 अतिव्याप्तेः—त

4 सहौत्पत्तिकसम्बन्धः—द

5 औत्पत्तिकस्तु शब्दस्य अर्थेन सम्बन्धः—त

6 'तयोस्सहानुत्पत्तिवादेऽपि—इत्यारभ्य तस्यार्थेन सह अनुत्पत्तेः, इति पर्यन्तो भागः 'म' प्रतौ नास्ति।

7 ननु तर्हि अर्थप्रतिपादकश्शब्दः—त

8 मात्रं चेत् हस्तनयनसंज्ञादौ—त

9 अतिव्याप्तिः—द

प्रतिपत्तिजनकत्वं तत्त्वमिति चेन्न। वाक्यावृत्तिशादिमते तत्रैवाव्याप्तेः। ननु वृत्तितात्पर्यान्यतरवत्वे सतीति विशेषणात् नोक्तदोष इति चेन्न। उपसर्गेष्वव्याप्तेः। ननु उपसर्गो न पृथक्शब्द इति चेन्न। 'प्रतिपर्यनव' इत्यादौ पृथक्शब्दत्वदर्शनात। ननु [1]तदुभयद्योतकत्वान्यतरत्वे सति इति विशेष्यमिति चेन्न। हुमादिपदेष्वव्याप्तेः। तेषां सामभागपरिच्छेदकत्वेन नैरर्थक्यात्। अत एव श्रवणत्वे सत्यर्थबोधकश्शब्द इत्यपि निरस्तम्। विनैवोच्चारणं मनस्यनुसन्धीयमानमौनिशब्दे अव्याप्तेश्च। ननु तादृशत्वे सति अर्थबोधकजातीयत्वं श्रवणग्रहणयोग्यत्वं वा तल्लक्षणमिति चेन्न। शब्दत्वजात्या साजात्यविवक्षायामात्माश्रयापत्तेः। जात्यन्तरेण साजात्यविवक्षायाम् अतिप्रसङ्गात्। तादृशजात्यनङ्गीकारवादिनं प्रति इतरभेदसाधनेऽन्यतरासिद्धिश्च।

[2]अर्थबोधजनकत्वं नाम तथा चार्थबोधजनकताश्रवणग्रहणयो[3]ग्यतावच्छेदकत्वम्। तदेव लक्षणमस्तु। तदसत्वे लक्षणस्यैव[4]दुर्ग्रहत्वात्। अज्ञानासिद्धिप्रसङ्गः। ननु तर्हि सुप्तिङन्यतरान्तश्शब्द इति चेन्मैवम्। वाक्यप्रबन्धयोरव्याप्तेः। पदानामेव सुबाद्यन्ततया वाक्यादौ तदभावात्। ननु सङ्घातव्यतिरिक्तसङ्घाताभावात पदसङ्घातरूपवाक्यस्यापि तदन्तत्वम् अस्त्येवेति चेन्न। तथापि सुबादिप्रत्ययानां सुबाद्यन्तत्वाभावेन तत्राव्याप्तेः। एतेन 'सविभक्तिकत्वे सति अर्थबोधकश्शब्द' इत्यपि निरस्तम्। प्रागुक्तदूषणानतिवृत्तेः। ननु रूपप्रपञ्चव्यतिरिक्तप्रपञ्चः शब्द इति चेन्न।

---

[1] तदुभयद्योतकान्यतरत्वे—त
[2] अर्थबोधजनकत्व मबोधकत्वं नाम—त
[3] योग्यतावच्छेदकसत्वे तदेव—म
[4] दुर्ग्रहणत्वात्—त

[1]शब्दप्रपञ्चव्यतिरिक्तप्रपञ्चो रूपप्रपञ्च इत्यन्योन्याश्रयात्। ननु शब्दव्यतिरिक्तत्वे सति [2]गुणाद्यन्यतमत्वं रूपप्रपञ्चत्वमिति चेन्न। आत्माश्रयप्रसङ्गात्। ननु ध्वनिव्यतिरिक्तत्वे सति [3]आकाशविशेषगुणश्शब्द इति चेन्न। शब्दद्रव्यवादिमते असम्भवापत्तेः। ननु उच्चार्यमाणत्वे सति अर्थप्रतीतिजनकश्शब्द इति चेन्न। मौनिश्लोकादावव्याप्तेः। न च पुरुषान्तरोच्चारणं तत्रापि सम्भवतीति वाच्यम्। तथाप्युत्पन्नमात्रनष्टे तत्रैवाव्याप्तेः।

ननु उच्चार्यमाणत्वे सत्यर्थप्रतीतिजनकजातीयत्वं तत्त्वमिति चेन्न। शब्दत्वजात्या साजात्यविवक्षायाम् आत्माश्रयापत्तेः। [4]गत्वाद्यवान्तरजात्या साजात्यविवक्षायां तदनङ्गीकारवादिनं प्रति असम्भवापत्तेः। सजातीयशब्देन साधर्म्यविवक्षायामतिप्रसङ्गात्।

नन्वस्तु तर्हि वर्णपदवाक्यप्रबन्धान्यतरश्शब्द इति चेदुच्यते। अन्यतरशब्देन [5]सर्वविवक्षायामसम्भवः। एकैकविवक्षायामव्याप्तिः। किञ्च पदघटकशब्दो वा, पदार्थप्रतीत्युपयोगि[6]संस्कारजनकत्वं सप्रतियोगिशब्दो वा, तत्प्रतीत्युपयोगिस्फोटाभिव्यञ्जकशब्दो वा, समासावयवातिरिक्तपदावयवशब्दो वा। ध्वनिव्यतिरिक्तत्वे सति श्रोत्रग्राह्यशब्दो वा वर्ण इति वर्णलक्षणं

---

1 शब्दप्रपञ्चव्यतिरिक्तप्रपञ्चो इत्यारभ्य रूपप्रपञ्चत्वमिति चेन्न इत्यन्तोभागः—'त' पुस्तके न परिदृश्यते।

2 आकाशगुणश्शब्दः—म

3 द्रव्यगुणाद्यन्यतमत्वं—द

4 गवाद्यवान्तरजात्या —द

5 सविवक्षायाम्—द

6 'संस्कारजनकत्वम्' इत्यारभ्य 'तत्प्रतीत्युपयोगि' इति पर्यन्तो भागः 'त' पुस्तके न दृश्यते।

वाच्चम्। तथा चात्माश्रयः। उक्तवर्णलक्षणेषु शब्दपदाप्रवेशे क्रमादावतिव्याप्ति को वारयेत्? द्वितीयलक्षणे च स्वनाशक्षणे वर्णस्यैव [1]संस्कारजनकत्वे नासम्भवापत्तिश्च। जनकतावच्छेदकस्य दुर्निर्वचत्वाच्च। तस्मात् शब्दलक्षणं दुर्निर्वचमिति चेत्–अत्रोच्चते।

'साक्षात् श्रोत्रेन्द्रियजन्यज्ञानकर्मकारकवस्तुफलकसन्तानपतितवस्तुत्वं शब्दत्वमिति शब्दसामान्यलक्षणम्'।

अत्र शब्दद्वारा श्रोत्रेन्द्रियजन्यज्ञानकर्मकारकवस्तुफलकसन्तानपतितार्थेऽतिव्याप्तिनिरासाय साक्षादित्युक्तम्। [3]प्रथमादिशब्देष्वतिव्याप्तिनिरासार्थं तादृशवस्तुफलकसन्तानपतितवस्तुत्वमित्युक्तम्। न च ध्वन्यात्मकशब्देष्वतिव्याप्तमिदं लक्षणमिति वाच्चम्। ध्वनेरपि वर्णात्मकशब्दत्वेन लक्ष्यकोटावेवान्तर्भावात्। तत्र [4]वर्णविशेषानभिव्यक्तिस्तु व्यञ्जकाभावप्रयुक्ता। अत एवाह माघकारः–

[5]'मधुरया मधुबोधितमाधवीमधुसमृद्धिसमेधितमेधया।
मधुकराङ्गनया मुहुरुन्मदध्वनिभृता निभृताक्षरमुज्जगे॥

इति। न च मौनिश्लोकादावव्याप्तिः। तस्यापि कदाचित् पुरुषान्तर[6]श्रोत्रपतितत्वेन लक्षणसम्भवात। न चोत्पन्ननष्टमात्रे मौनिश्लोकादावव्याप्तिरिति

---

1 संस्कारजन्यत्वे नासम्भवापत्तिश्च—त

2 दुर्निर्वचत्वात्—म

3 प्रथमादिशब्देष्वव्याप्तिनिरासार्थं—द

4 तत्र विशेषानभिव्यक्तिस्तु—म

5 शिशुपालवधम्—सर्ग-६—श्लो-२०

6 श्रोत्रपतितत्वेन तत्र लक्षणसम्भवात्—द

शङ्क्यम्। तस्य मौनिमनसाऽनुसन्धीयमानस्यान्तरध्वनिवत् तदीयश्लोत्रेणैव बहिरुच्चारणाभावेऽपि गृह्यमाणत्वात्।

स च शब्दो द्विविधः। सार्थको निरर्थकश्चेति। यत्सम्बन्धिकावच्छेदकं प्रतिपाद्यत्वं सः सार्थकश्शब्दः। प्रतिपाद्यत्वं नाम—लिङ्गत्वानवच्छिन्नजनकताश्रयज्ञात[1]करणजन्यप्रतीत्या यस्याज्ञानं निवर्त्यते तत्त्वमिति सङ्क्षेपः। तत्र सार्थका भवादिशब्दाः। निरर्थका हुमादिशब्दाः। तत्र [2]सार्थकश्चतुर्विधः। वाचको लक्षको गौणो व्यञ्जकश्चेति। तथा अर्थोऽपि वाच्यलक्ष्यगौणव्यङ्ग्यभेदाच्चतुर्विधः। तात्पर्यार्थस्तु व्यङ्ग्य एवान्तर्भूतः न पृथग्भूतः।

ननु 'पदानामर्थाभिधायिनां [3]विशिष्टार्थप्रत्यायनी शक्तिरेव तात्पर्यमिति' मीमांसकाः। तथा सति'—देवदत्त गामानय दण्डेन, इत्यादौ देवदत्तकर्तृकगोकर्मकदण्डकरणकानयनरूपविशिष्टार्थस्तात्पर्यावगतत्वात् तात्पर्यार्थ इत्युच्यते। स तु न व्यङ्ग्य इति कथमुच्यते। तात्पर्यार्थो [4]व्यङ्ग्यार्थ इति चेदुच्यते। अन्विताभिधानवादिमते [5]पदानां विशिष्टार्थप्रत्यायनशक्तिरभिधैव न तात्पर्यरूपा। तत्र सङ्केतप्रसरात्। अभिहितान्वयवादिमतेऽपि पदानां पदार्थलक्ष्यमाणसंसर्गरूपवाक्यार्थे लक्षणरूपैव। तदुक्तं वार्तिककारपादैः—

---

[1] करणजन्यप्रत्ययस्याज्ञानं—त

[2] सार्थकश्शब्दः चतुर्विधः—त

[3] विशिष्टार्थप्रत्यायनशक्तिरेव—द

[4] व्यङ्ग्यार्थ इतीति चेदुच्यते—द

[5] 'पदानाम्' इति पदं 'त' पुस्तके न दृश्यते

न विमुञ्चति सामर्थ्यं वाक्यार्थेऽपि पदानि यः ।
वाक्यार्थो लक्ष्यमाणो हि सर्वत्रैवेति च स्थितिः ॥

इति। पक्षद्वयेऽपि संसर्गो न तात्पर्यार्थः। तस्याः तात्पर्यरूपत्वाभावात्। किं तु काव्ये शब्दानां [1]संसर्गमात्रे कविसंरम्भाविश्रान्तेः। तद्व्यतिरेकेण प्रतीयमानः सामाजिकास्वाद्यमानानन्दिरूपरसादिरेव तात्पर्यार्थः। तत्प्रत्यायक-पदार्थशक्तिरेव तात्पर्यं कविसमयसिद्धम्। सा च नाभिधारूपा। स्वार्थेषु सङ्केतानवतारात्। नापि लक्षणा। मुख्यार्थबाधाद्यभावात्। तस्मात्तात्पर्यं वक्ष्यमाणलक्षणव्यञ्जनावृत्तेः नामान्तरं भावाभिप्रायाद्यपरपर्यायम्। ततस्तात्प-र्यार्थो व्यङ्ग्यार्थ एव। अत एव काव्यादौ संसर्गरूपार्थो वाक्यमहिम्ना-प्रतीयते। न तात्पर्येण।

वाक्यं नाम—आकाङ्क्षादिमत्त्वे सति [2]पदानां पदार्थानां वा समन्वयबोधनशक्तिः। [3]न तु तादृशपदसमूहः। तरूणामिव पदानां युगपदेकदेशकालसम्बन्धाभावात् तेन तद्बलायातस्संसर्गरूपार्थो न तात्पर्या धीनः। तत्तु तात्पर्यमुद्देशरूपः पुरुषधर्मरूपः इत्युदयनादयो मन्यन्ते। तात्पर्यं [4]वाक्यधर्म इति मीमांसकाः। पदार्थधर्म इत्यालङ्कारिकाः। अस्तु वा। [5]वैयासकीमतानुसारेण अर्थान्तराभावे संसर्गोऽपि तात्पर्यार्थः। [6]तत्सद्भावे तु स एव तात्पर्यार्थो न संसर्गरूपः। तथा सति काव्ये संसर्गमात्रे [7]विश्रान्ते तदतिरिक्तो रसादिरेव न तात्पर्यार्थः। न चैवं प्राचीनालङ्कारग्रन्थेषु संसर्ग

---

[1] संसर्गमात्रकविसंरभाविश्रान्तेः—द
[2] पदानां वा समन्वयबोधनशक्तिः—म
[3] न तादृशपदसमासाः—म
[4] वाक्यार्थधर्म इति—'त'
[5] नैयायिकमतानुसारेण-द
[6] 'तत्सद्भावे तु' इत्यारभ्य 'न तात्पर्यार्थः, इति पर्यन्तो भागः 'म' पुस्तके न दृश्यते
[7] विश्रान्ते—म

रूपार्थस्य तात्पर्यार्थत्वेन कथं प्रतिपादनमिति वाच्यम्। मतान्तराभिप्रायेण तदुपपत्तेः। अत एवोक्तं काव्यप्रकाशिकाकारेण-'[1]तात्पर्यार्थोऽपि केषुचित्' इति।

ननु काव्ये संसर्गरूपार्थे कविसंरंभाविश्रान्तौ-'[2]अव्यङ्ग्यं त्ववरं स्मृतम्' इति काव्यप्रकाशिकाकारवचनं कथमिति चेन्न। अनुदरा कन्येतिवदस्फुटव्यङ्ग्यत्वस्यैव तेन विवक्षितत्वात्। [3]तदुक्तमलङ्कारसुधानिधिकारेण—

'अनुल्बणत्वात् व्यङ्ग्यानामव्यङ्ग्यं चित्रमीरितम्।
व्यङ्ग्यस्यान्ततविच्छेदः काव्ये कुत्रापि नेष्यते'

इति। अतः तात्पर्यार्थो व्यङ्ग्यार्थ इति सिद्धम्।

तदुक्तमेकावलीकारेण-[4]'तस्मात् व्यञ्जनापरपर्यायं तात्पर्यं कविभिरङ्गीकृतं नान्यदिति। [5]ध्वन्याचार्यैरप्युक्तम्—'यत्त्वभिप्रायविशेषरूपं व्यङ्ग्यं शब्दार्थाभ्यां प्रकाशते। तद्भवति विवक्षितं तात्पर्येण प्रकाश्यमानम्' इति कृतं विस्तरेण। प्रकृतमनुसरामः।

[6]शब्दस्य वृत्तयोऽभिधा लक्षणा गौणी व्यञ्जना भेदाच्चतस्रः। तत्र प्राचीनालङ्कारिकास्तु—गौणी लक्षणायामेवान्तर्भवति. सम्बन्धानुपपत्तिमूलत्वात इत्याहुः। तन्न युक्तियुक्तम्। गौण्या लक्षणातो भिन्नत्वात्। ननु

---

[1] काव्यप्रकाशः-प्र. उल्लासः—६ श्लोकः

[2] काव्यप्रकाशः प्रथमोल्लासः-५ श्लोकः

[3] [4] [5] रत्नापणसमन्विते प्रतापरुद्रीये-काव्यप्रकरणे—वाचकलक्षकव्यञ्जकत्वेन त्रिविधं शब्दजातम्—इति प्रकरणव्याख्यासन्दर्भे-व्याख्यायामुद्धृतमेतत् पद्यम्। एकावलीकारवचनं, तथा ध्वनिकारवचनमपि तत्रैव उद्धृतमस्ति।

[6] (i) शब्दस्य वृत्तस्य वृत्तयोऽभिधा—म

(ii) शब्दस्य वृत्तयोऽप्यभिधा—त

कथं लक्षणागौण्योर्भेदः। वाच्यान्वयानुपपत्त्या परत्र परशब्दप्रयोगस्य [1]तुल्यत्वादिति चेदुच्यते। तव कोऽभिप्रायः। किं लक्षणाभेदाभावा दुभयोरभेद इति, किं वा बीजैक्यादिति। तत्र न तावदाद्यः। लक्षणाभेदस्य वक्ष्यमाणत्वात्। नेतरः। अप्रयुक्तशब्दस्य [2]अर्थप्रयोजकत्वाभावात्। प्रयोगरूपबीजैक्यात् अभिधालक्षणयोरप्यभेदप्रसङ्गात्। किञ्च एवं वदन् यो वादी प्रष्टव्यः किमालङ्कारिकः, किं वेतरः। नाद्यः। अनुपपत्तिरूपबीजैक्यात् व्यञ्जनायाः अपि लक्षणान्तर्भावप्रसङ्गात्।

ननु व्यञ्जनाया स्फुटानुपपत्तेरभावात् न तस्या लक्षणान्तर्भाव इति चेन्न। गौण्यामपि स्फुटसम्बन्धाभावेन बीजैक्याभावादभेदानुपपत्तेः। [3]ननु गौण्यां गुणयोग[4]स्सादृश्यं सम्बन्धः कल्प्यत इति चेन्न। व्यञ्जनायामपि वाच्यस्य रमणीयस्वरूपानुपपत्तेस्सत्त्वाल्लक्षणान्तर्भावापत्तेः। ननु[5] रमणीयत्वे लोकेऽनुपपत्तिशब्दप्रयोगाभावान्न तदुपपत्तिरिति चेन्मैवम्। [6]सिंहमाणवकयोः गुणप्रयोगस्सादृश्यं वा सम्बन्ध इति लोके तत्र सम्बन्धशब्दप्रयोगाभावात् उक्तदोषतादवस्थ्यात्।

वस्तुतस्तु न सादृश्यं सम्बन्धः दूरस्थेयमान्तरे रमयमान्तरसंबन्ध [7]इति धीप्रयोगापत्तेः। न द्वितीयः। [8]प्राचीनद्विपक्षोक्तदूषणानतिवृत्तेः। [9]अत एव द्विविधा

---

1 तुल्यत्वादिति चेत् तव कोऽभिप्रायः—म

2 अर्थप्रत्ययजनकत्वाभावात्—त

3 ननु गौण्याम् इत्यारभ्य 'ननु' रमणीयत्वे इति पर्यन्तो भागः त पुस्तके नास्ति।

4 सादृश्यं वा सम्बन्ध—द

5 सर्वरमणीयत्वे लोके—द

6 सिंहमाणवकयोः गुणनियोगस्सादृश्यं—त

7 इति प्रयोगापत्तेः—त

8 प्राचीनद्वितीयपक्षोक्तदूषणानतिवृत्तेः—त

9 अत एव द्वितीया लक्षणा सादृश्यनिबन्धना—त

सादृश्यनिबन्धनासम्बन्धनिबन्धना चेति पुरातनालङ्कारिकाणां वचनमपि निरस्तं बोध्यम्। किञ्च बहुवैषम्यसद्भावान्न गौणीलक्षणयोरभेदः। तथा हि—लक्षणायां सम्बन्धिसम्बन्धयोरस्मृतयोरपि सम्बन्धिमात्रान्वितार्थे वाक्यतात्पर्यमवधार्य सम्भूयकारित्वेन [1]पदस्यापि सम्बन्धिमात्रे तात्पर्यकल्पनाया अयुक्तत्वात् [2]सामानाधिकरण्यानुपपत्तेः। सादृश्यमात्रेऽपि तत्कल्पनायोगात्। तस्मात् सामानाधिकरणप्रयोगबलादेव सादृश्य[3]विशिष्टान्वितार्थे वाक्यतात्पर्यमवधार्यत इति तात्पर्यज्ञानसमय एव पदस्योपयोगः। लक्षणायां त्वपेक्षाबलात् [4]सम्बन्धिमात्रान्वितार्थे वाक्यतात्पर्यात् [5]सम्बन्धिमात्रपदतात्पर्यम् इति पश्चादेव पदस्योपयोगः। [6]ननु यत्र गौणे [7]सामानाधिकरणप्रयोगो नास्ति अ......... ग्निरधीत इत्यादौ तत्र सादृश्यमात्र एव तात्पर्यं स्यादिति चेन्मैवम्। सामानाधिकरणप्रयोगविषये तथैव तात्पर्यावधारणात् तात्पर्यावधारणौचित्यात्। ततो बहुवैषम्यसद्भावात् गौणीलक्षणातो भिन्नेत्यस्माभिः शास्त्रचूडामणौ स्पष्टमुक्तं द्रष्टव्यम्।

अत एव व्यञ्जनाया अपि न लक्षणायामन्तर्भावस्सम्भवति। वक्ष्यमाणप्रकारेण तयोर्लक्षणभेदसत्त्वात्। [8]न चानुपपत्तिरूपबीजैक्यमात्रेण

---

[1] पदसम्बन्धिमात्रतात्पर्यमवधार्यते। गौण्यां तु गौणवदप्रयोगादेव सादृश्योपेतवाक्यतात्पर्यमवधार्यते। स आन्तरोपात्ततया पौनरुक्त्यापत्तेः। सदृशमात्रतात्पर्यकल्पनायाः अयुक्तत्वात—त

[2] सामानाधिकरण्यादुपपत्तेः—द

[3] विशिष्टपदार्थे वाक्यतात्पर्यम्—त

[4] सम्बन्धिमात्रार्थे वाक्यतात्पर्यात्—द

[5] सम्बन्धमात्रे पदतात्पर्यम्—त

[6] ननु गौणे—द

[7] सामानाधिकरणप्रयोगे.......ता.......इत्यादौ—म

[8] नवानुपपत्तिरूप—त

तयोरभेदश्शङ्कनीयः। अतिप्रसङ्गप्रसङ्गस्य प्रागेवोक्तत्वात्। [1]तस्मात्सिद्धश्चतस्रो वृत्तय' इति।

तथा च रसावस्थानसूचका रचनाश्रिता वृत्तयोऽपि चतुर्विधाः। कैशिक्यारभटीसात्वतीभारतीचेति। रचनाया रसाभिव्यञ्जकत्वं सुप्रसिद्धम्। [2]रसाननुगुणरचनायाः दोषत्वोक्तेः। [3]वैदर्भीप्रभृतयस्तु रीतिविशेषा एव। न वृत्तिष्वन्तर्भवन्ति।

## अभिधालक्षणम्

तत्र अभिधा निरूप्यते—

ननु 'सङ्केतितार्थगोचरश्शब्दव्यापारो अभिधेति' [4]विद्यानाथः। 'यस्तस्य मुख्यो व्यापारस्तस्यासावभिधा स्मृते'ति साहित्यचिन्तामणिकारः [5]इदमेव एकावळीकारस्याप्यभिहितम्। न तत्र विद्यानाथोक्तं लक्षणं युक्तम्। 'छत्रिणो गच्छन्ती'त्यजहल्लक्षणायामतिव्याप्तेः। तस्यास्सङ्केतितवाच्यगोचरशब्दव्यापारत्वात्। ननु सङ्केतितमात्रगोचरत्वं लक्षणे विवक्षितमिति चेदुच्यते। किं भवान् व्यक्तिसङ्केतवादी किं वा जातिसङ्केतवादी? उत जात्यवच्छिन्नव्यक्तिसङ्केतवादी। अथवा जात्याकृत्यवच्छिन्नव्यक्तिसङ्केतवादी। नाद्यः। [6]गवादिशब्दाभिधायाः असङ्केतितजातिगोचरत्वे नासम्भवापत्तेः। न

---

[1] तस्मात्सिद्धं चतस्रो वृत्तय इति—त

[2] रसाननुगुणवर्णरचनाया दोषत्वमुक्तम्—ल (प्रतापरुद्रीये काव्यप्रकरणे अभिधालक्षणकथनावसरे उक्तम्

[3] वैदर्भीप्रभृतिस्तु रीतिविशेष एव, न वृत्तिष्वन्तर्भवति—द

[4] प्रतापरुद्रीये-काव्यप्रकरणे अभिधालक्षणकथनावसरे

[5] मुख्यं तमर्थमाहुः साक्षाद्यत्रास्य सङ्केतः।
व्यापारोऽपि च मुख्योऽभिधीयतेऽस्याभिधारूपः॥
(एकावली–द्वितीयोन्मेषः–२)

[6] गवादिशब्दाभिधायाः सङ्केतित जातिगोचरत्वेनासम्भवापत्तेः–द

द्वितीयः । [1]गवादिशब्दात् तादृशन्यक्तेरपि प्रतीतेः तद्दोषतादवस्थ्यात् । न तृतीयः । गवादिशब्दात् तथाविधाकृतेरपि प्रतीतेरुक्तदोषानतिवृत्तेः । न चतुर्थः । लाघवादेकावच्छिन्न [2]व्यक्तिसङ्केतग्रहोपपत्तौ असङ्केतिततदन्यगोचरत्वापत्तावसम्भवप्रसङ्गात् । किञ्च कोऽयं सङ्केतः ? किमस्य शब्दस्यायमर्थ इति वा ? अस्यार्थस्यायं शब्द इति वा ? वक्तुस्समयबन्धः, किं व्युत्पित्सोश्शक्तिग्रहरूपः उत व्याप्तिः । अहोस्विदभिधेयत्वम् । अथवौत्पत्तिकसम्बन्धः । नाद्यः । समयोच्चारितघटशब्देन [3]घटमवेहीति समयसम्बन्धान्तरमुच्चारितघटशब्देन [4]घटप्रत्ययात् घटशब्दस्य घटाभिधाप्रसङ्गः । न चेष्टापत्तिः । चिह्नतया नयनव्यापारादिवदर्थप्रत्यायकस्य अभिधायकत्वे नयनादिव्यापारस्यापि अभिधापत्तौ शब्दत्वापत्तेः । न द्वितीयः । शक्तिरभिधेति पर्यायात् [5]आत्माश्रयप्रसङ्गात् । न तृतीयः । [6]भिन्नदेशस्थयोश्शब्दार्थयोः दैशिक[7]व्याप्तेरप्यभावात् । न च तयोः कालिकीव्याप्तिः परस्परव्यभिचारेण तयोर्भिन्न[8]कालत्वात् । न चतुर्थः । [9]आत्माश्रयात । एव पञ्चमोऽपि न सम्बन्धो वाच्यवाचकभावरूप इति वक्तव्यम् । तथा च [10]आत्माश्रयदोषानतिवृत्तिः ।

---

[1] गवादिशब्दात् तादृशव्यक्तेरपीत्यारभ्य-न तृतीयः इति पर्यन्तो भागः 'म' प्रतौ न दृश्यते ।

[2] व्यक्त्यसङ्केतग्रहोपपत्तौ—म

[3] पटमवेहीति—त [4] पटप्रत्ययात्—द

पटाभिधाप्रसङ्गः—त

[5] आत्माश्रयापत्तेः—त

[6] भिन्नदेशयोः-शब्दार्थयोः—द

[7] व्याप्तेरभावात्—द

[8] कालसत्वात्—त

[9] आत्माश्रयादेष इत्यारभ्य तथा च इति पर्यन्तो भागः 'म' प्रतौ न दृश्यते।

[10] आत्माश्रयानतिवृत्तिः—म

किञ्च कोऽयं सङ्केतयिता ? न तावज्जीवः। डित्थादिशब्देष्विव गवादिशब्देषु जीवानामिदं[1]प्रथमसङ्केताभावात् कोशकारादीनामपि शब्दार्थसङ्ग्रहमात्रप्रवृत्तत्वेन तत्र सङ्केतासम्भवात् नापीश्वरः अनीश्वरादिमते शब्दानामभिधाभावप्रसङ्गादितरभेदसाधने अन्यतरासिद्धिप्रसङ्गाच्च ।

यत्तु द्वितीयलक्षणं तत्र किमिदं व्यापारस्य मुख्यत्वम्। शब्दाव्यावृत्तित्वं वा। सादृश्यसम्बन्धाद्यनपेक्षत्वं वा। अभिधेयार्थप्रतीतिजनकत्वं वा। औत्पत्तिकत्वं वा। [2]गौणाद्यतिरिक्तत्वं वा। अन्यद्वा। नाद्यः। शब्दलक्षकत्वादिमते लक्षणादावतिव्याप्तेः। द्वितीये सम्बन्धशब्दो वाच्यसम्बन्धपरः। तथा च 'वाच्यमभिधेयमि'ति पर्यायादात्माश्रयप्रसङ्गः। अत एव न तृतीयः। लक्षणादावतिव्याप्तेश्च। न चतुर्थः। प्रवीणकुशलादिशब्दगतनिरूढलक्षणायामतिव्याप्तेः। न पञ्चमः। लक्षणागौण्यादिलक्षणस्य अभिधागर्भत्वेन अन्योन्याश्रयप्रसङ्गात्। न षष्ठः। तदनिर्वचनात्। एतेन लक्षणाद्युपजीव्यः शब्दव्यापारोऽभिधेति लक्षणमपि निरस्तम्। अभिधात्वस्यैव उपजीव्यतावच्छेदकत्वे आत्माश्रयानतिवृत्तिः। तदतिरिक्तावच्छेदकसम्भवे लाघवात् तदेव लक्षणमस्तु। किमनेन। वस्तुतः तदपि [3]दुर्निर्वचमेव। तस्मादभिधालक्षणं [4]दुर्निर्वचमेवेति चेदत्रोच्यते—

'व्युत्पित्सोः व्युत्पत्त्यनुप्रविष्टः[5]शब्दव्यापारो अभिधा। व्युत्पत्तिश्शब्दार्थयोस्स[6]म्बन्धग्रहणरूपा। स च सम्बन्धः सम्बन्धत्वेनैव उपस्थितो'

---

[1] सङ्केताभावात् इत्यारभ्य अन्यतरासिद्धि इति पर्यन्तो भागः 'म' प्रतौ नास्ति ।

[2] गौणव्यतिरिक्तत्वं वा—द

[3] दुर्निर्वचमिति—त

[4] दुर्निर्वचमिति चेत्—द

[5] शब्दव्यापारलक्षणा अभिधा—त

[6] सम्बन्धग्रहरूप —द

न वाच्यवाचकभावादिरूपेणेति नात्माश्रयदोषशङ्कावकाशः। न च गौणीलक्षणाव्यञ्जनानां व्युत्पत्तेः व्युत्पत्त्यनुप्रविष्टता येन तत्र अतिव्याप्तिशङ्का स्यात्। शब्दार्थव्युत्पत्त्यनन्तरभावित्वात् गौण्यादिप्रवृत्तेः। ननु निरूढलक्षणायामतिव्याप्तिः। कुशलादिशब्दानां निपुण एव व्युत्पत्तेरिति चेन्न। [1]व्युत्पत्तिशब्देन सम्बन्धप्रमाया एव विवक्षितत्वात्। कुशलादिशब्दे [2]व्युत्पत्तिसःवज्ञातमुख्यस्य लाक्षणिके [3]मुख्यग्रहरूपैवेति नोक्तदोषः।

यद्वा निरूढलक्षणाव्यतिरिक्तत्वे सति शब्दग्रहणसमयसमुद्बन्धः शब्दव्यापारोऽभिधा। समुद्बन्धत्वं सामग्रीरूपतापत्तिः। न चासम्भवः। शब्दश्रवणानन्तरं व्युत्पन्नं पुरुषं प्रति स्वेतरकारणविलम्बेन कार्यरूपार्थप्रत्ययविलम्बाभावात् न गौण्यादा[4]वतिव्याप्तिः। तस्याः शब्दश्रवण[5]समयानुबन्धत्वात्

सा चाभिधा कार्यान्विते, न तु स्वार्थमात्रे युज्यते। ननु कार्यान्विते शक्तियुक्ता। तथा हि। नान्विताभिधानं युक्तम्। प्रतियोग्यानन्त्येन तदन्विते शक्तिग्रहासम्भवात्। न चानन्त्येऽपि आकाङ्क्षादेर्नियामकत्वं [6]शङ्क्यम्। तथापि गामानय, बधान, पायय, मुञ्चेत्यानन्त्यादेरस्यैव गोपदस्यानन्तशक्त्यापत्तिः। अस्माकं तु अर्थैक्यादेकैवेति लाघवम्। किञ्च, किं पदान्तराभिहितेन अन्विताभिधानं, किं वा अनभिहितेन। [7]आद्ये किं पदान्तरमनन्विताभिधायि उतान्विताभिधायि।

---

[1] व्युत्पत्तिशब्देन इति पदं 'त' पुस्तके नास्ति।

[2] व्युत्पत्तिस्त्वज्ञातमुख्यलाक्षणिके—द

[3] मुख्यग्रहरूपे वेति—त

[4] अतिव्याप्तेः—त

[5] समयानुद्बन्धत्वसामग्रीरूपत्वात्—द

[6] शक्यम्—त

[7] आद्ये किं पदान्तरमनन्विताभिधायि। नाद्यः—द

नाद्यः । सर्वत्रैव तथात्वापत्तेः । द्वितीयेऽपि किं प्रथमपादेनाभिहितस्वार्थमभिधत्ते, पदान्तरेण वा । नाद्यः । परस्पराश्रयात् । अन्त्येऽपि न तावत् तृतीयपदं प्रथमद्वितीयाभिहितान्वितमभिधत्ते । [1]......न्योन्याश्रयात् । नाप्यतिरिक्तपदेन अनवस्थानापत्तेः । एकस्मात् सर्वान्वयधीप्रसङ्गाच्च तस्मादन्विताभिधानं न युक्तम् इति चेदत्रोच्यते । आकाङ्क्षाद्युपलक्षितप्रतियोगिषु [2]शक्तिग्रहाभावात् नानन्त्यदोषः । [3]न चोपलक्षितानामपि आनय, बधान, मुञ्चेत्यानन्त्यात् अनन्तशक्त्यापत्तिः । यथा चक्षुषा [4]एकैस्यैव रूपं [5]तद्वृत्तसमवेतगोचरया दर्शनशक्त्या [6]प्रतियोगिभेदेऽपि तत्तद्दर्शनकार्यभेदहेतुत्वम् । एवं एकस्यैव गोपदस्य आकाङ्क्षाद्युपलक्षितप्रतियोगिगोचरया [7]एकशक्त्या तद्भेदेऽपि [8]तत्तद्बोधकार्थभेदोपपत्तिः । यदुक्तं—'पदान्तराभिहितेनान्विताभिधानम् उतानभिहितेनेत्यादि । तन्न युक्तम् । स्मृति[9]सन्निहितार्थैरन्विताभिधायित्वाङ्गीकारात् । पदार्थानां स्वरूपमात्रस्मरणे हि न पदं पदान्तरमपेक्षते ।

---

1 (i) चक्रकान्योन्याश्रयात् इति 'म' प्रतौ वर्तते ।
एतन्न समीचीनमिति प्रतिभाति ।
(ii) अभिधत्ते च, प्रक........न्योन्याश्रयात् इति 'द' प्रतौ वर्तते । एतदपि सुष्ठु न ज्ञायते । अतः उपरि रिक्थमेव कृतमस्ति ।

2 शक्तिग्रहासंभवात् नानन्त्यदोषः—द

3 न चोपेक्षितानामपि—त

4 एकमेव रूपं तद्वत्—त

5 तद्वत्समवेतगोचरया—म

6 प्रतियोग्यभेदेऽपि—म

7 एतच्छक्त्या—त

8 तत्तद्बोधनकार्यभेदोपपत्तिः—द

9 सन्निहितार्थैकान्विताभिधायित्वाङ्गीकारात्—त

तेन नान्योन्याश्रयः। न च स्मरणकरणे कल्पनागौरवमिति शङ्क्यम्। सम्बन्ध्यन्तरदर्शनेन सम्बन्ध्यन्तरस्मृतेः क्लृप्तत्वात्। किञ्च त्वन्मते पदानां तावत् [1]अर्थाभिधानशक्तिः। अर्थानामन्वयप्रत्यायनशक्तिः, तदाधानशक्तिश्च पदानामिति गौरवम्। अस्माकं तु पदानाम् अन्योन्यान्वितस्वार्थाभिधान-शक्तिरेकैवेति लाघवम्। किञ्च प्रत्ययस्य [2]प्रकृत्यर्थान्विताभिधायित्वमेवास्तु। किम् अर्थवैशसेन? अतस्सिद्धं कार्यान्विताभिधायित्वं पदानामिति। अत्र कार्यांशस्य अन्यलभ्यत्वेन तदपहाय अन्वितमात्रे शक्तिकल्पनमिति तत्त्वचिन्ता-मणिकारेण [3]यदुक्तं तदपि न युक्तम्। अन्वयस्याप्याकाङ्क्षादिसहकृत-पदकदम्बकसमभिव्याहारादेव प्रतीत्युपपत्तेः। अन्यलभ्यत्वाविशेषादि-तरान्वयेऽपि शक्तिकल्पनाया अयोगात्।

वस्तुतस्तु नास्मन्मते कार्यान्वयस्यान्यलभ्यत्वं [4]कार्यसमभिव्याहारस्य गवादिपदविषयशक्तिविषयकार्यान्वयप्रतियोगिविशेषस्मरणमात्रोपक्षीणत्वेन अन्य-थासिद्धत्वात्। तस्मात् प्राथमिकस्य व्युत्पत्त्यनुरोधात् कार्यान्विते स्वार्थे अभिधेति सिद्धम्। प्रपञ्चस्तु अस्मत्कृते तत्त्वचिन्तामणिखण्डने शास्त्रचूडामणौ द्रष्टव्यः।

**सा चाभिधा [5]द्विधा। रूढिपूर्विका योगपूर्विका चेति। तत्र रूढिपूर्विका यथा—**

---

[1] अर्थाभिधानशक्तेः—त

[2] प्रकृत्यर्थान्वितस्वार्थाभिधायित्ववत् प्रकृत्यर्थान्विताभिधायित्वमेवास्तु—त

[3] यदुक्तं भवति तदपि—त

[4] कार्यपदसमभिव्याहारस्य—त

[5] द्विविधा—त

सीता रमा केशव एव रामः
शेषाविशेषेण स लक्ष्मणोऽपि ।
समित्रबन्धोस्तव पङ्क्तिकण्ठ !
न शोभते तेन समं विरोधः ॥

अत्र सर्वे शब्दा रूढाः ।

योगपूर्विका यथा—

[1]विकासिपङ्केरुहरम्यलोचनं
पयोधरातीवमनोहराकृतिम् ।
सुवर्णबाणासनसायकान्वितं
कदा नु रामं कलयान्यहं दृशा ॥

अत्र पङ्केरुहादयश्शब्दाः यौगिकाः ।

ननु पङ्कजादि[2]शब्देष्वार्यप्रयोगसहितयोगस्यैव नियामकत्वोपपत्तेः [3]न समुदाये शक्तिरिति वेदान्तविवरणाचार्यैरुक्तमिति चेन्न । सर्वत्र [4]आर्यप्रयोगस्यैव नियामकत्वोपपत्तौ [5]वृत्तिमात्रस्यैव दत्ताञ्जलिताप्रसङ्गात् । इमामभिधां योगरूढिरिति केचन व्यवहरन्तीति कृतं विस्तरेण ।

---

[1] विकासपङ्केरुह—त

[2] (i) शब्देष्वर्थप्रयोगसहितयौगस्यैव—म
(ii) शब्देष्वार्यप्रयोगसहितस्यैव नियामकत्वोपपत्तेः—द

[3] न समुदायशक्तिरिति—द

[4] अर्थप्रयोगनियामकत्वोपपत्तौ—त

[5] व्यक्तिमात्रस्यैव दत्ताञ्जलिताप्रयोगप्रसङ्गात्—त

## लक्षणा

अथ लक्षणा निरूप्यते—

'ननु [1]मुख्यार्थानुपपत्तौ तद्योगे रूढितोऽथवा [2]फलात् ।
अन्योर्थो यदि लक्ष्यो भवति तदा लक्षणाभिमता ॥

इत्येकावळीकारः ।

'[3]मुख्यार्थबाधे तद्योगे रूढितोऽथप्रयोजनात् ।
अन्योऽर्थो लक्ष्यते यत्सा लक्षणारोपिता क्रिया ॥

इति काव्यप्रकाशिकाकारः ।

सम्बन्धानुपपत्तिभ्यां प्रसिद्धार्थ[4]प्रयोजनात् ।
'मुख्येन यदमुख्यार्थो लक्ष्यते, सा हि लक्षणा ॥
इति साहित्यचिन्तामणिकारः ।

[5]वाच्यार्थानुपपत्त्या तत्सम्बन्धिन्यारोपितः शब्दव्यापारो [6]लक्षणेति विद्यानाथः ।

तत्र न तावदाद्यं लक्षणं युक्तम् । लक्ष्यो भवतीत्यत्र [7]लक्ष्यशब्देन लक्षणाविषयत्व विवक्षायाम् आत्माश्रयप्रसङ्गात् । तेन प्रत्येतव्यत्वविवक्षायां गामानयेत्यादौ गवादिशब्देष्वतिव्याप्तिः । तत्र जातिसङ्केतवादिमते तस्याः

---

1 एकावली—उन्मेषः २-श्लोकः-५

2 फलतः—म

3 काव्यप्रकाशे—उल्लासः २ कारिका—९

4 प्रयोजनम्—म

5 वाक्यार्थानुपपत्त्या—त

6 प्रतापरुद्रीये—काव्यप्रकरणे-७ कारिका

7 'लक्ष्य' इति शब्दो 'म' प्रतौ नास्ति

वाक्यार्थान्वयानुपपत्त्या [1]व्यक्तिरूपार्थप्रत्ययात्। किञ्च रूढितो अन्यार्थलक्ष्यत्वे वा, लक्षणा फलतो वा, तदुभयसमुच्चयाद्वा, तयोरन्यतरो वा? नाद्यः। फललक्षणायामव्याप्तेः। [2]न द्वितीयः। रूढ्यां लक्षणायामव्याप्तेः। न तृतीयः। असम्भवापत्तेः। न चतुर्थः। अन्यतरशब्दार्थनिर्वचनात्। अतो नाद्यं लक्षणं युक्तम्। अतः न द्वितीयतृतीये। न चतुर्थमपि युक्तम्। लक्षणाया-[3]शब्दे आरोपासम्भवेन असम्भवप्रसङ्गात्। अनारोपे बाधकाभावाच्च। नन्वर्थ एव लक्षकः शब्दस्य स्वार्थप्रकाशनामात्रेणोपरतव्यापारस्य पुनः व्यापारासम्भवेन लक्षकत्वानौचित्यादिति चेन्मैवम्। वाच्यान्वयानुपपत्तिप्रतिसन्धानानन्तरं पूर्वप्रारब्धतशब्दसदृशशब्दान्तरस्य लक्षणाव्यापाराङ्गीकारे दोषाभावात्। न च शब्दान्तरकल्पने गौरवापत्तिरिशङ्क्या। त्वन्मतेऽपि लक्ष्यार्थस्य अशब्दत्वापत्तौ शब्दस्य तत्र तात्पर्यकल्पनावश्यंभावे तात्पर्येण पुनस्तस्यैव शब्दस्य लक्ष्यार्थ-बोधकत्वापत्त्या विरम्यव्यापारापत्तौ शब्दान्तरकल्पनायाः तवापि तुल्यत्वात्। तात्पर्यस्य वृत्तेर्निर्वाह्यत्वाच्च। शब्दान्तरस्यैव तदुचितमिति न पञ्चमलक्षण-मपि युक्तम्।

यत्तु शालिकानाथलक्षणलक्षणं 'वाच्यस्यास्यार्थस्य वाक्यार्थे सम्बन्धानुपपत्तितः। तत्सम्बन्धवशप्राप्तस्यान्वयात् लक्षणोच्यते' इति। तदपि न युक्तम्। गामानयेत्यादौ गवादिशब्देष्वतिव्याप्तेः। तत्र गोशब्द-वाच्यजातेरानयनानुपपत्त्या तत्सम्बन्धिन्या गोव्यक्तेरन्वयात् तत्र गोशब्दस्य लक्षणापत्तेः।

---

[1] व्याप्तिरूपार्थप्रत्ययात्—त

[2] 'न द्वितीयः रूढ्यां लक्षणायामव्याप्तेः' इत्येतत् वाक्यं 'भ' प्रतौ लुप्तमस्ति

[3] शब्देनारोपासम्भवेन—त

यदपि तत्त्वचिन्तामणिकारोक्तं लक्षणं 'स्वार्थसम्बन्धो वा शक्ति स्मारितशक्यसम्बन्धो वा लक्षणा' इति।

तदपि न युक्तम्। गौण्यामतिव्याप्तेः। सादृश्यं शक्यसम्बन्ध इति तस्याभिमतत्वात्। न चेष्टापत्तिः। तार्तीये [1]विषयशुद्धिन्यायेन भेदस्य समर्थितत्वात्। अत एव तज्जन्याशक्यसम्बन्धस्मृतिर्लक्षणेत्यपि निरस्तम्। गौण्यामपि तदभिमतसादृश्यरूपसम्बन्धेन शक्यसम्बन्धिसदृशस्मृतेः।

ननु शब्दात् परम्परया अशक्यासदृशान्वयपदोपस्थितिरेव लक्षणेति चेन्मैवम्। तादृशोपस्थितेश्शब्दात् [2]व्यापारविशेषं विना सम्बन्धो लक्षणेत्यपि परमार्थ इत्यपि तत्त्वचिन्तामणिकार इति चेन्मैवम्। तन्मते गौण्याऽनुत्पत्तेस्तस्यैव लक्षणारूपत्वात् उपस्थितिरूपत्वाभावेनासम्भवापत्तेः। अन्यथा तस्यापि वृत्त्यन्तरत्वापत्तिर्दुर्वारा। ननु तर्हि शक्यसम्बन्धलक्षणाबीजत्वेन तद्रूपत्वासम्भवात् असम्भवापत्तेश्च। तद्बीजस्यापि तद्रूपत्वेऽतिप्रसङ्गप्रसङ्गं को वारयेत्। एतेन शक्यसम्बन्धिनि तात्पर्यं लक्षणेत्यपि निरस्तम्। मुख्यतात्पर्यस्यैव वृत्तित्वोपपत्तौ शक्तेरप्युच्छेदापत्तिरिति दूषणविस्तरः शास्त्रचूडामणौ द्रष्टव्यः। तस्माल्लक्षणालक्षणं दुर्निर्वचमिति चेदत्रोच्यते—

'गुणयोगनिमित्तत्वे सति उत्तमकाव्यत्वाप्रयोजकप्राधान्यवत्त्वेसति परत्र परशब्दस्य प्रयोगो लक्षणा'। तत्र प्रथमसत्यन्तेन गौण्या-

---

[1] विषयसिद्धिन्यायेन – त

[2] व्यापारविशेषादिनानुत्पत्तेः तस्यैव लक्षणारूपत्वादुपस्थितिरूपत्वाभावेनासम्भवापत्तेः। अन्यथा तस्यापि वृत्त्यन्तरत्वापत्तिः दुर्वारा। ननु तर्हि शक्यसम्बन्धो लक्षणेति परमार्थ इत्यपि तत्त्वचिन्तामणिकार इति चेन्मैवम्। तन्मते गौण्यामतिव्याप्तेरेव सम्बन्धस्य लक्षणाबीजत्वेन—त

मतिव्याप्तिनिरासः। द्वितीयसत्यन्तेन व्यञ्जनायां नातिव्याप्तिः। व्यञ्जनाप्राधान्यस्यैव उत्तमकाव्यताप्रयोजकत्वात्।

यद्वा [1]वाच्यत्वावच्छिन्नवाच्यानुपपत्त्या तत्सम्बन्धिनि शब्दव्यापारो लक्षणा। नात्र गवादिशब्देष्वतिव्याप्तिः। तत्र [2]वाच्यत्वावच्छिन्नवाच्यस्यानुपपत्तेरभावात्। न च गौण्यामतिव्याप्तिः। सादृश्यातिरिक्तसम्बन्धेन [3]सम्बन्धिनि विवक्षितत्वात्।

सा च लक्षणा द्विविधा। जहत्यजहती चेति। केचित्तु जहदजहल्लक्षणाप्यस्तीत्याहुः। तथा हि—[4]गङ्गायां मीनघोषौ न प्रतिवसतः इत्यत्र घोषप्रतिवासरूपवाक्यार्थे गङ्गापदवाच्यतीररूपार्थस्य परित्यागात् मीनप्रतिवासरूपवाक्यार्थे चापरित्यागाज्जहदजहल्लक्षणा। वेदेऽपि 'विज्ञानमानन्दं [5]ब्रह्मे'त्यत्र विज्ञानपदस्य अनेकविकारघटितान्तःकरण[6]वृत्तिस्थचैतन्यवाचकान्तःकरणरूपवाच्यैकदेशपरित्यागान्न मुख्या वृत्तिः। नापि जहल्लक्षणा। चैतन्यरूपवाच्यैकदेशापरित्यागात् सर्वात्मना वाच्यपरित्यागाभावात्। नाप्यजहल्लक्षणा। छत्रिणो गच्छन्तीत्यत्र छत्र्यादिपदवत् सम्पूर्णवाच्यपरिग्रहात् अन्यत्र प्रवृत्तेरभावात्। तस्माद्विज्ञानपदे जहदजहल्लक्षणेति। तत्र वदामः। 'गङ्गायां

---

[1] वाच्यत्वादभिन्नवाच्यानुपपत्त्या—त

[2] वाच्यत्वादभिन्नवाच्यत्वानुपपत्तेः—त

[3] सम्बन्धिनीति विवक्षितत्वात्—त

[4] गङ्गायां घोषौ प्रतिवसतः—त

[5] ब्रह्मेत्यस्य—त

[6] वृत्तिरूपवाच्यैकदेशपरित्यागान्न मुख्या वृत्तिः—त

मीनघोषौ प्रतिवसतः' इत्यत्र [1]क्लृप्तलक्षणयैव प्रतीत्युपपत्तौ जहदजहल्लक्षणारूपभेदान्तरकल्पनाया गौरवोपपत्तिः।

नन्वजहल्लक्षणायां वाच्यस्य कार्यान्वयो वाच्यः। प्रकृते गङ्गापदवाच्यस्य तीरस्य घोषप्रतिवासरूपकार्यानन्वया[2]न्नाजहल्लक्षणेति चेदुच्यते। नात्र मीनघोषप्रतिवासो वाक्यार्थः। अर्थभेदे वाक्यभेदापत्तेः। वाक्यभेदे च गङ्गापदस्य वाक्यद्वये मुख्यजहल्लक्षणाभ्यामेव प्रतीत्युपपत्तेर्जहदजहल्लक्षणासिद्धिः। किन्तु तदुभयभिन्नभिन्नप्रतिवासो वाक्यार्थः। तथा च तीररूपवाच्यस्य तदुभयभिन्नभिन्नप्रतिवासरूपकार्यान्वयात् अजहल्लक्षणैव युक्ता। तथा 'विज्ञानमानन्दं ब्रह्म' इत्यादावपि विज्ञानपदस्य चैतन्यरूपवाच्यैकदेशापरित्यागेनैव ब्रह्मरूपानन्दं लक्षयतीति नाजहल्लक्षणातो [3]मुक्तिः। न चान्तःकरणवृत्तिरूपवाच्यैकदेशपरित्यागस्याप्यसत्वात् जहल्लक्षणापि किन्नस्यादिति वाच्यम्। युगपद्वृत्तिद्वयविरोधप्रसङ्गात्। न चैवं सति विनिगमकाभावः। विज्ञानमानन्दं ब्रह्मेति सामानाधिकरण्यमहिम्ना चैतन्यरूप[4]स्वार्थापरित्यागस्यैव पुरतः स्फुरणात् [5]विनिगमकत्वेनाजहल्लक्षणाया एव युक्तत्वात्। तस्मात्सिद्धं लक्षणाद्वैविध्यम्। भेदान्तराण्यपि अत्रैवान्तर्भवन्तीति विवरणोज्जोविन्यामस्माभिः अष्टमवर्णकाव्याख्यानसमये सम्यगुक्तं द्रष्टव्यम्।

---

[1] क्लृप्ताजहल्लक्षणयैव—त

[2] न जहल्लक्षणेति—त

[3] विमुक्तिः—त

[4] स्वार्थपरित्यागस्यैव—त

[5] विनिगमकसत्वेना जहल्लक्षणाया—त

तत्र जहल्लक्षणा यथा—

'अयोध्या निखिला [1]रामगुणाकृष्टा [2]तमन्वगात् ।
प्राकारपरिघासौधवीथिकाभित्तिभिर्विना ॥

अत्र अयोध्याया रामानुसरणवाक्यार्थानन्वयात् जहल्लक्षणा ।

[3]यथा वा—

'सदन्तिराजा भरतानुसारिणी
गुणेन शक्त्या कलितेन [4]लाञ्छिता ।
उवास रामानयनातिमोदिनी
सुरापगायां पृतनेव वासवी ॥

अत्र सुरापगायाः स्रोतोरूपायाः सेनानिवासरूपकार्यानन्वयात्त तीरे जहल्लक्षणा ।

अजहल्लक्षणा यथा—

'कोदण्डयोर्मामकपार्श्ववर्तिनो-
र्द्वयोस्सदा काञ्चनबन्धरम्ययोः ।
सुकृष्टयोरक्षयसायकोऽन्धिनो-
र्भीतिर्न यत्र क्वचनापि [5]मे खरः ॥

---

[1] रामं गुणाकृष्टा—त

[2] तमन्वयात्—म

[3] यथा—म

[4] लालिता—त

[5] 'मेखरः–इति पदे अर्थविषये संशयो वर्तते । 'म' प्रतौ 'मेटतः' इति वर्तते । सोऽपि अपपाठः इति प्रतिभाति ।

अत्र कोदण्डयोरित्यस्य तद्धारिणो रामलक्ष्मणयोः अजहल्लक्षणा ॥

अत्र साम्प्रदायिकालङ्कारिकाः—सादृश्यनिबन्धा लक्षणा [1]द्विधा। सारोपा साध्यवसाना चेति—लक्षणाया द्वैविध्यं कल्पयन्ति। तन्न युज्यते। द्विविधाया अपि तस्या गौण्यामेवान्तर्भावस्य वक्ष्यमाणत्वात्।

अथ गौणी निरूप्यते—

**स्वाभिधेयात् सदृशार्थान्तरे [2]अनुपपत्त्या वृत्तिः गौणी।** अथ च वृत्तिर्गौणीत्युक्ते भूम्यादिरूपे या वृत्तिरभिधा तत्रातिव्याप्तिः। तदर्थमभिधेयात् अर्थान्तर इति। तावत्युक्ते लक्षणायामतिव्याप्तिः। तदर्थं सदृशेति। लक्ष्यार्थस्य सादृश्याभावात् तेन तन्निवृत्तिः। तावत्युक्ते गावश्शोभन्त इत्यत्र गोशब्दस्य स्वाभिधेयात् सास्नादिमद्व्यक्तिरूपार्थाद्यथाकथञ्चित्सदृशार्थान्तरे भूम्यादिरूपे या व्यक्तिरभिधा तत्रातिव्याप्तिः। तन्निवृत्त्यर्थं अनुपपत्त्येति। ननु तथापि 'गङ्गां पादाभ्यां तरती'त्यत्र गङ्गाशब्दस्य अनुपपत्त्या स्वाभिधेयात शीतलत्वादिना सदृशकुल्यारूपार्थान्तरे या लक्षणावृत्तिः तत्रातिव्याप्तिरिति चेन्न। 'सादृश्यविशिष्टार्थान्तरे या वृत्तिस्सा गौणी' तर्हि विवक्षितम्। तथा च न तत्र गङ्गापदस्य सादृश्यविशिष्टकुल्यादौ वृत्तिः। [3]सादृश्यस्वरूपसत्वेऽपि शब्देन गङ्गासम्बन्धवदप्रतीयमानत्वात्। गङ्गासम्बन्धिकुल्याया एव शब्देन प्रतीयमानत्वात्। अतो न कोऽपि दोषः।

---

[1] द्विविधा—त

[2] 'अनुपपत्त्या वृत्तिः गौणी। अथ च वृत्तिर्गौणीत्युक्ते' इति भागः 'म' प्रतौ न दृश्यते।

[3] सादृश्यस्य स्वरूपसत्वेन गङ्गासम्बन्धिकुल्याया एव शब्देन प्रतीयमानत्वात्। अतो न कोऽपि दोषः।—'त'

 

सा द्विविधा । सारोपा साध्यवसाना चेति । तत्र विषयविषयिणोः अभेदप्रतिपत्त्या आरोपः । विषयनिगरणेन अभेदप्रतिपत्तिरध्यवसायः ।

तत्र सारोपा गौणी यथा—

मन्दोदरीमानसनाथसाक्षी-
मन्दार एवाश्रितमण्डलस्य ।
वनातिशोभी कथमन्यथा स्यात्
सपक्षशाखार्पितकाङ्क्षितार्थः ॥

अत्र रावणवैरिणि रामे मन्दारत्वमारोप्यते ।

यथा वा—

गण्डाभोगप्रसृमरतरामन्दहासप्रभाते
मद्यः कन्ये रुचिरमकरी गर्हिता जह्नुजैव ।
नो चेदेवं गुरुतमतयो मण्डलं [1]चण्डयन्ती
संदृष्टा स्यात्कथमिहमणी कर्णिका कण्ठभागे ॥

अत्र सीतायां मन्दहासप्रभायां जह्नवीत्वमारोप्यते ।

साध्यवसाना गौणी यथा—

विचित्र कोदण्डमनोहराकृतौ
विनीलमेघे पुरतः प्रसीदति ।

---

[1] खण्डयन्ती—त

जगत्यमुष्मिन्नुरुजीवनप्रदे

क्रिमस्ति तापाश्रितचातकावले: ॥

अत्र विषयभूतरामस्य निगरणेन तस्य नीलमेघादभेदप्रतिपत्तेरध्यसायः।

## व्यञ्जनावृत्तिः

अथ व्यञ्जनावृत्तिर्निरुप्यते—

तत्र ध्वनिर्नास्तीत्याहुः कतिचिदपरे भाक्तम् इतरे त्वनिर्वाच्यम्। वाच्यं कतिचिदनुमेयं कतिचनोति [1]व्यञ्जनापर्याये ध्वनौ विप्रतिपत्तिं [2]दर्शयामास साहित्यचिन्तामणिकारः।

'शब्दार्थौ वपुरस्य तत्र विबुधैरात्माभ्यधायी ध्वनि-

श्चार्वाकैरिव कैश्चिदस्य न पुनस्सत्तापि सम्भाव्यते।

कर्तु लक्षणमक्षमैरयमनिर्वाच्यैः परैरुच्यते

भाक्तोऽन्यैस्स[3]मुदीर्यत इति— विद्याधरोऽपि

विप्रतिपत्तिं प्रादर्शयत्।

तत्रोभयत्र प्रथमा विप्रतिपत्तिः न युज्यते।

---

1 व्यञ्जनापरपर्याये—त

2 प्रदर्शयामास—त

3 समुदीर्यतेऽस्य हि ततो ब्रूमः स्वरूपं वयम् ॥

(एकारवली—प्रथमोन्मेषः)

ध्वन्यभाववादिनो ध्वनिर्नास्तीति विप्रतिपत्तौ आश्रयासिद्धिप्रसङ्गात्। किन्त्वेवं विप्रतिपत्तिः। [1]वृत्तिमभिधालक्षणा गौणी व्यतिरिक्त[2]वृत्ति न चेति। अत्र विधिकोटौ ध्वनिसत्तापर्यवसानं निषेधकोटौ [3]ध्वनिर्नास्तीति। विधिकोटे-र्घटत्वादौ प्रसिद्धिः। निषेधकोटेरभिधात्वादौ प्रसिद्धिः। [4]यद्वा अभिधा-लक्षणाङ्गौण्यान्यत्वं वृत्तित्वासमानाधिकरणं, न चेति विप्रतिपत्तिः। अत्रापि विधिकोटेरभिधात्वादौ प्रसिद्धिः। निषेधकोटेर्घटत्वादौ प्रसिद्धिः। [5]तेन यद्विद्याधरेण ध्वन्यभाववादिनं प्रति दूषणमुक्तम्।

ननु ध्वनिर्नास्तीति प्रतिज्ञाविरोधः। ध्वनिरित्यनेन विधिः। नास्तीत्यनेन निषेधः। तयोश्च परस्परविरोद्धयोरेकस्मिन् धर्मिणि तिमिरात-पयोरिव सहानवस्थानदुःस्थयोरेव निवारितत्वात्। न चात्र विरोधपरिहार-प्रयोजकयोः देशकालयोरप्युपादानमस्ति। येन विरोधः समाधीयते। किञ्च प्रतीतः प्रतिषिध्यते ध्वनिः अप्रतीतो वा। आद्येऽपि क्वचिन्नास्ति, किं क्वचिदपि नास्तीति वा। प्रथमे सिद्धसाधनम्। अस्माभिरपि ध्वनेः क्वाचित्कनिषेधप्रतियोगित्वस्य [6]अभ्युपगमात्। न द्वितीयः प्रतीतस्य सार्वत्रिकनिषेधप्रतियोगित्वव्याघातात्। अप्रतीतश्चेन्नप्रतियोगिप्रतीतेः [7]प्रति-निषेधं प्रति कारणत्वादिति तद्दूरतो निरस्तम्। ध्वनिरस्ति नास्तीत्येव-माकारेण विप्रतिपत्तराश्रयासिद्धया निरस्तत्वात् तादृशविप्रतिपत्तावेव तादृश—

---

[1] वृत्तित्वमभिधा—त

[2] वृत्तिर्न वेति—त

[3] ध्वनिर्नास्तीति पर्यवस्यति विधिकोटेः—त

[4] अभिधालक्षणागौण्यान्यत्वं वृत्तित्वसमानाधिकरणं न वेति विप्रतिपत्तिः—त

[5] एतेन—त

[6] अभ्युपगतत्वात्—र

[7] प्रतिषेध प्रति—र

दूषणस्य सङ्गतत्वात्। तत्रायं ध्वन्यभाववादिनोऽभिप्रायः। वृत्तित्वम् अभिधालक्षणादिव्यतिरिक्तवृत्तेर्न भवति। 'योग्यत्वे सति [1]तन्निष्ठत्वेनानुपलभ्यत्वात्। यद्‌योग्यत्वे सति [2]तन्निष्ठत्वेनोपलभ्यते न तत्र तदस्ति। यथा भूतलनिष्ठत्वेनानुपलभ्यमानो घटो भूतले नास्ति। तथा चायम्। तस्मात्तथेति ध्वन्यभावस्सिद्ध इति। अत्रोच्यते न तावदिदमनुमानं युक्तम्। ध्वनिसत्तावादिनं प्रत्यन्यथासिद्धेः। तन्मते तन्निष्ठत्वेन वृत्तित्वस्योपलभ्यमानत्वात्। किञ्च किं व्यङ्ग्यार्थमङ्गीकृत्य ध्वनिमपलपसि किं वानङ्गीकृत्य। नाद्यः। तदङ्गीकारे तद्गोचरव्यञ्जनाया अप्यङ्गीकारत्वात्। न द्वितीयः। व्यङ्ग्यार्थ प्रतीतिविरोधप्रसङ्गात्। न च लक्षणयैव व्यङ्ग्यार्थप्रतीतिरिति वाच्यम्। [2]अनुपपत्तेरसत्वात्। लक्ष्यार्थप्रतीतावनुपपत्तेः कारणत्वात्। न च वाच्यारम्यत्वमेवानुपपत्तिः। अनुपपत्तेर्नानाविधत्वादिति नयविवेकदीपिकाकारवचनादिति वाच्यम्। वाच्यारम्यत्वेऽनुपपत्तिप्रयोगदर्शनात्। अन्यथ वाच्यपरशब्दानां सर्वेषामपि लक्षकत्वप्रसङ्गः। अतो व्यङ्ग्यार्थप्रतीतिः न लक्षणया, यथा च नाभिधया [3] तथा वक्ष्यामः। तस्मात् वृत्तित्वमभिधालक्षणागौणीव्यतिरिक्तवृत्तिर्भवितुमर्हति। तदन्यतरव्यतिरिक्तत्वे सति तत्क्रियासाधारणधर्मभिन्नधर्मत्वात्। प्रमेयत्ववदित्यनुमानादपि ध्वनिसिद्धिः। यदि ध्वनिर्न स्यात् व्यङ्ग्यार्थप्रतीतिः निरालम्बा स्यात्। प्रकारान्तराभावस्योपपादितत्वात् वक्ष्यमाणत्वाच्चेति विपक्षे [4]बाधकतर्कोऽयमनुसन्धेयः।

---

[1] तन्निष्ठत्वेनानुपलभ्यमानत्वात्—त

[2] अनुपपत्तेः सत्वात्—त

[3] तथा च वक्ष्यामः—त

[4] बाधकतर्कोऽनुसन्धेयः—त

अत्रेदमनुमानमुक्तं विद्याधरेण—

क्रियेत चेत्साधुविभक्तिचिन्ता
व्यक्तिस्तदा सा प्रथमाभिधेया ।
या स्वौजसां साधयितुं विलासैः
तावत्क्षमानामपदं बहु स्यात् ॥

इत्येतद्वाक्यम् [1]एतद्वाक्यवाच्यातिरिक्तार्थप्रकाशकमिति । तन्न तार्किकाणां मनो रञ्जयति । लक्षणया गौण्या वार्थान्तरस्य दुर्निवारत्वात् । प्रागुक्तवाक्यमेतद्वाच्यव्यङ्ग्यातिरिक्तार्थप्रकाशकम् उक्तहेतोरित्याभासमानयोगक्षेमता च दुर्वारा स्यात् । एतद्वाक्यातिरिक्तवाक्यत्वञ्चोपाधिः । न च पक्षमात्रव्यावर्तकविशेषणत्वेन पक्षेतरत्वमिति वाच्यम् । उपाधेस्साध्येन सह अन्वयव्याप्तेरसम्भवात् । घटादौ च व्यतिरेकव्याप्तिनिश्चयात् । न चैवं पर्वतेतरत्वादिकमप्युपाधिस्स्यादिति वाच्यम् । [2]तच्च व्यतिरेकसन्देहात् । अन्यथा वह्नीतरत्वादिति बाधोन्नीतपक्षेतरोऽप्युपाधिर्न स्यात् । ततो नेदमनुमानं युक्तम् । किन्त्वस्मदुक्तानुमानमेवानुस्मर्तव्यमिति न ध्वन्यभावो युक्तः ।

नन्वस्तु नाम ध्वनिः । तथापि स काव्यकामानीयकहेतुर्भवति न वा । नान्त्यः । अजागलस्तनायमानत्वेनानादरणीयत्वप्रसङ्गात् । आद्ये गुणालङ्कारान्यतरान्तर्भूतोऽस्तु । तथा च अनुमानं—ध्वनिः गुणालङ्कारानतिरिक्तः, काव्यकामनीयकहेतुत्वात् । व्यतिरेके दोषवदिति । न च वृत्तिरीतिषु व्यभिचारः । रीतीनां गुणानतिरिक्तत्वात् । वृत्तीनामपि दीप्तमसृण-

---

[1] एतद्वाक्यवाच्यातिरिक्तवाक्यार्थप्रकाशकं, वाक्यत्वात्, कालिदासादिवाक्यवत् । वाक्यं चेदम् । तस्मात् वाच्यातिरिक्तार्थप्रकाशकमिति । र. क.—त

[2] तत्र व्याप्तेरसन्देहात्—त

मध्यमवर्णारब्धानामनुप्रासजातिरूपाणाम् अलङ्कारान्तर्भूतत्वात् । जातिजाति-मतोरभेदात् इति चेत् उच्यते । न तावत् ध्वनेः गुणान्तर्भावो युक्तः रसधर्मे गुणे रसादिध्वनेः अन्तर्भावानौचित्यात्। अलङ्कारेष्वपि वाच्यमात्रा पर्यवसितेषु श्लेषादिष्वन्तर्भावायोगात् । समासोक्त्याद्यलङ्कारविशेषेष्वन्तर्भावो वक्तव्यः। सोऽपि न युज्यते। व्यङ्ग्यप्राधान्ये ध्वनित्वव्यपदेशात् [1]तस्योपसर्जनत्वे अलङ्कारत्वव्यपदेशात् गुणप्रधानभावविरोधापत्तेः । नन्वेवं तर्हि रूपकदीपकतुल्ययोगितापह्नवादिषु प्रतीयमानो उपमालङ्कारो वाच्योपस्कारक इत्यलङ्कारत्वं कथमिति चेन्न । कथमपीति ब्रूमः । तत्रापि गुणीभूतव्यङ्ग्य-तयैव उपमायाः स्थितत्वात् । अत एव रसवत्प्रेयऊर्जस्विसमहिताद्यलङ्कारे-ष्वपि रसभावरसाभासभावाभासादीनामप्यङ्गत्वमेवेति न ध्वनेर्गुणालङ्कारान्त-र्भावो युक्तः ।

यदनुमानमुक्तं ध्वनिर्गुणालङ्कारानतिरिक्त इति । तदपि न युक्तम्। काव्यात्मनो ध्वनेः काव्यकामनीयकहेतुत्वासम्भवादसिद्धेः । ननु रीतिरात्मा काव्यस्येति वामनवचनान्न ध्वनिः तदात्मेति चेन्न । रीतेर्माधुर्यादिगुणान-तिरेकात् तदात्मत्वायोगात् । वामनवचनं तु देवदत्तः चैत्रात्मेतिवदुपचारे-णाऽप्युपपद्यते । तस्मात् ध्वनिर्गुणालङ्कारातिरिक्त एव ।

[2]ननु ध्वनिविषयोऽर्थो दीर्घदीर्घाभिधाव्यापारेणैव प्रतीयताम् । किं ध्वनिनेति चेन्मैवम् । दीर्घदीर्घा[3]भिधाव्यापारेणैव 'गङ्गायां घोष' इत्यत्र

---

[1] तस्योपसर्जनत्वेऽलङ्कारत्वध्वनेर्गुणालङ्कारान्तर्भावत्वं कथमिति चेन्न । कथमपीति ब्रूमः ।—'म'

[2] 'ननु ध्वनिविषयोऽर्थो'—इति पदद्वयं 'त' पुस्तके नास्ति ।

[3] अभिधारूपव्यापारेणैव—त

[1]तीरादिप्रतीत्युपपत्तौ लक्षणोच्चेदप्रसङ्गात्। ननु यथा जातौ गृहीताभिधायाः व्यक्तिपर्यन्तं दैर्ध्यमङ्गीक्रियते। व्यक्तेरप्यभिधेयत्वात्। एवं व्यङ्ग्यार्थ-पर्यन्तं दैर्ध्यमङ्गीक्रियताम्।

[2]न च लक्षणोच्चेदापत्तिः। इष्टापत्तिरिति चेत् उच्यते। कार्यान्विते शक्तिग्रह इत्युपपादितम्। तथा च जातौ कार्यान्वयासम्भवात् तदन्वित-व्यक्तावेव जात्यवच्छेदेन शक्तिग्रहात् तत्र अभिधाङ्गीकारेऽपि न दोषः। यदुक्तं लक्षणोच्छेदापत्तिरिष्टेति। तन्न युक्तम्। गङ्गापदस्य तीराद्यनन्तार्थेषु शक्तिग्रहासम्भवात् लक्षणाङ्गीकारावश्यंभावात। किञ्च वाच्यव्यङ्ग्ययोः स्वरूपभेदावश्यंभावात् नैक्यं युक्तम्।

तयोस्स्वरूपभेदो यथा—

[3]भवानिहेत्थं हितपक्षपातिनी
संस्तूयते [4]रामकथैव लोके।
हिताय लङ्कापुरराज्यमात्रं
दत्तं त्वयाभूत् स्वपदं द्विषे तु॥

अत्र निन्दा वाच्या। प्रतीयमाना च स्तुतिः। तयोस्स्वरूपादेव भेदः। तथा कालभेदादपि भेदः। वाच्यं प्रथमतः प्रतीयते। व्यङ्ग्य तु तदनन्तर-मिति।

---

[1] तिमिरादिप्रतीत्युपपत्तौ—म

[2] न चैवं लक्षणोच्चेदापत्तेः—त

[3] भवानिवोत्थं—त

[4] राममुधैव—त

तथा शब्दमात्रं वाच्याश्रयः।

शब्दतदर्थवर्णसङ्घटनाः प्रतीयमानस्येति आश्रयभेदादपि तयोर्भेदः।

एवं कारणविषयभेदादपि भेदोऽप्यूहनीयः।

एवं पृथग्व्यङ्ग्यार्थसिद्धौ तद्गोचरव्यञ्जनाव्यापारोऽपि सिद्ध एव॥

केचिद्ध्वनिमिमम् अनिर्वाच्यमाचक्षते। किमिदम् अनिर्वचनीयत्वं नाम। किं लक्षणरूपनिर्वचनागोचरत्वं, माधुर्यादिवदनुभवैकवेद्यत्वेन अनिर्देश्यस्वरूपत्वं वा। वेदान्तिमते प्रपञ्चवत् सदसद्विलक्षणत्वं वा। [1]लोकोत्तरत्वं वा [2]सहृदयहृदयसम्वाद्यत्वं वा। नाद्यः। वक्ष्यमाणरीत्या लक्षणनिर्वचनात्। न द्वितीयः। ध्वनिरयमिति ध्वनिशब्देन निर्देश्यत्वात् माधुर्यमिदमिति तस्यापि निर्देश्यत्वेन दृष्टान्तासिद्धेश्च।

ननु माधुर्यादेः [3]तच्छब्दनिर्देश्यत्वे विशेषेण इदमीदृशमित्यनिर्वाच्यत्वमेवेति चेन्न। जलान्नालिकेरजलं मधुरम्। ततोऽपि गुडजलं मधुरम्। ततोऽपि [4]शर्करारसो मधुरः। ततोऽपि कान्ताधरो मधुरः। ततोऽपि सत्कवितारसो मधुर इति विशेषेणाऽपि माधुर्यादेः निर्देश्यत्वात्। न तृतीयः। ध्वनिरस्त्यत्र तत्र ध्वनिर्नास्तीति सत्त्वेनासत्त्वेन च व्यवहारात् तदसिद्धेः। अविद्याकार्यत्वेन तदङ्गीकारे अभिधाया अप्यनिर्वचनीयत्वापत्तिः। न चतुर्थः। तादृशानिर्वचनीयस्येष्टत्वात्। अत एव न पञ्चमः। तस्मान्नानिर्वचनीयो ध्वनिः।

अन्ये तु ध्वनिविषयो भाक्तः इत्याचक्षते। तत्रापि वक्तव्यम्।

---

[1] 'लोकोत्तरत्वं वा'—इत्येतत् 'म' प्रतौ नास्ति।

[2] सहृदयहृदयसन्देश्यत्वं वा—त

[3] तच्छब्दनिर्देश्यत्वेऽपि विशेषेण—त

[4] शर्करारसो मधुरः। ततोऽपि मकरन्दो मधुरः। ततोऽपि सुधारसो मधुरः। ततोऽपि कान्ताधरो मधुरः—त

किं [1]भक्तिव्यङ्ग्ययोरभेदः, व्यक्तेर्भक्तिलक्षणं वा। उपलक्षणं वा। नाद्यः। भक्तेर्मुख्यार्थबाधानुसन्धानप्रवृत्तत्वात्। व्यक्तेस्तु वक्तृविवक्षानुसन्धानप्रवृत्तत्वात्। विरुद्धधर्मयोगित्वेन दहनतुहिनयोरिव [2]भेदसिद्धः। न द्वितीयः। ध्वनिं [3]लक्षीकृत्य भक्तिमत्त्वहेतुना इतरभेदसाधनेऽभिधामूलध्वनौ हेतुर्भागासिद्धः। न तृतीय.। विवक्षितान्यपरवाच्यध्वनौ भक्त्युपलक्षितत्वाभावादतो न भाक्तो ध्वनिविषयः।

महिमभट्टस्तु ध्वनिरनुमानादनतिरिक्त इति प्रत्यपादि। तन्न युक्तम्। व्यङ्ग्यार्थव्याप्तहेतोरभावात् इत्युत्तरत्र वक्ष्यमाणत्वात्।

विद्याधरस्तु—तादात्म्यतदुपपत्तिभ्यां ह्यनुमानं प्रवर्तते। यथा—[4]'वृक्षोऽयं शिंशुपात्वात्'। 'वह्निमानयं प्रदेशो धूमवत्वादिति'। न चात्र गमकस्य शब्दार्थस्य गम्यार्थेन सह तादात्म्यमस्ति न वा? ध्वनेस्सकाशात् शब्दार्थयोरुत्पत्तिरस्ति, येनानुमानं प्रवर्त्येतेत्याह। तच्चिन्त्यम्। न हि तादात्म्यतदुत्पत्तिभ्यामेव, अनुमानप्रवृत्तिः. अतद्रूपेण कृत्तिकोदयेन [5]रोहिण्यासक्त्यानुमानदर्शनात्। ततो नेदं दूषणम्। किन्तु तद्व्याप्तहेतोरभावादिति अस्मदुक्तदूषणमेव सम्यक्। तस्मात् अस्ति ध्वन्यपरपर्यायो व्यञ्जनाव्यापार इति सिद्धम्।

तत्रार्थो व्यञ्जकः शब्दस्सहकारीति 'काव्यप्रकाशिकाकारः'। शब्द एव व्यञ्जकः अर्थस्सहकारीत्यन्ये मन्यन्ते। पक्षद्वयेऽपि उक्तन्यायेन न विरम्य

---

1 भक्तिव्यक्त्योरभेदः—त

2 भेदसिद्धिः—त

3 ध्वनिं पक्षीकृत्य—म

4 वृक्षोऽयं—म

5 रोहिण्यासत्यनुमानदर्शनात्—त

ध्येयम्। एवं प्रमाणेन [1]व्यञ्जनास्वरूपसिद्धौ तस्य [2]लक्षणमप्युच्यते।

नन्वन्वितेषु पदार्थेषु वाक्यार्थोपस्कारार्थमर्थान्तरविषयश्शब्दव्यापारो व्यञ्जनावृत्तिरिति विद्यानाथः। 'अर्थस्यान्यार्थधीहेतुर्व्यापारो वृत्तिरेव सेति' काव्यप्रकाशिकाकारः। 'काव्यात्मना ध्वनिरिति' विद्याधरः। [3]'ध्वनिर्व्यञ्जनेति' पर्याय इत्युक्तम्। तत्र न तावद्विद्यानाथलक्षणं युक्तम्। अर्थशक्तिमूलव्यञ्जनायामव्याप्तेः। तस्याश्शब्दव्यापारत्वाभावात्। न च सापि सहकारिशब्दव्यापारोऽपि भवत्येवेति वाच्यम्। शब्दस्य तत्सहकारित्वे सिद्धे तस्यास्तद्व्यापारत्वसिद्धिः। सिद्धे च तस्यास्तद्व्यापारत्वे तस्य सहकारित्वसिद्धिरपरस्पराश्रयप्रसङ्गात्।

ननु तर्हि शब्दग्रहणमर्थस्याप्युपलक्षणम्। तथा च शब्दार्थान्यतरव्यापारो व्यञ्जनेति विवक्षितत्वात् नोक्तदोष इति चेन्न। अन्यतरशब्देन एकैकविवक्षायां प्रागुक्ताव्याप्त्यनतिवृत्तेः। उभयविवक्षायामुक्तव्यञ्जनयोरव्याप्तेः। अस्तु वा अन्यतरशब्दार्थनिर्वचनम्। तथाप्युभयशक्तिमूलव्यञ्जनायामव्याप्तिं को वारयेत्। एकस्यास्तस्या उभयशक्तिमूलत्वेन शब्दव्यापारत्वाभावात्। अर्थव्यापारत्वाभावाच्च।

ननु तस्याश्शब्दशक्तिमूलत्वेन शब्दव्यापारत्वम् अर्थशक्तिमूलत्वेन अर्थव्यापारत्वमिति अवच्छेदकभेदेनोभयव्यापारत्वमप्यविरुद्धमिति चेत् मैवम्। सिद्धे अवच्छेदकभेदे तस्याः तदुभयव्यापारत्वसिद्धिः। सिद्धे च तदुभयव्यापारत्वेऽवच्छेदकभेदसिद्धिरिति परस्पराश्रयापत्तेरितरभेदसाधने अर्थव्यञ्जकवादिनं प्रति अन्यतरासिद्धेश्च ; नेदं लक्षणं युक्तम। किञ्च इदमर्थान्तरं नाम

---

[1] व्यञ्जनास्वरूपसिद्धौ अधुना तस्याः—त

[2] लक्षणमुच्यते—त

[3] ध्वनिर्व्यञ्जनाव्यापारः इत्युक्तम्—त

व्यङ्ग्यार्थो वा अप्रकृतपदार्थव्यतिरिक्तार्थो वा, अभिधेयाद्यर्थत्रयातिरिक्तार्थो वा, तात्पर्यार्थो वा, अन्वयातिरिक्तार्थो वा. अन्यो वा। नाद्यः। व्यञ्जना-विषयो व्यङ्ग्य इत्यात्माश्रयापत्तेः। न द्वितीयः। पदव्यङ्ग्यस्य व्यञ्जना-वृत्त्या पदार्थत्वेन अव्याप्तेः। न तृतीयः। व्यङ्ग्यत्वज्ञान विना अभिधे-यादिव्यतिरिक्तत्वाज्ञानादात्माश्रयानतिवृत्तेः। न चतुर्थः। तात्पर्यार्थो व्यङ्ग्यार्थ इत्युक्तत्वात्। तद्दोषतादवस्थ्यान्न पञ्चमः। व्यङ्ग्यत्वज्ञानं विना अन्वयव्यतिरेकानवगमात्। तद्दोषानपायात्। नान्त्यः। तस्यानिर्वचनात्। किञ्च कोऽयं शब्दव्यापारः। न तावत् शब्दधर्ममात्रम्। श्लेषालङ्कारेऽति-व्याप्तेः। [1]श्लिष्टत्वस्य शब्दधर्मत्वात। नापि [2]शक्तिरेव शब्दव्यापारः। इतरभेदसाधनेऽन्यतरासिद्धेः। [3]तस्मान्नेदं लक्षणं [4]युक्तम्। तत्रैव रीत्या आत्मवादिनं प्रत्यन्यतरासिद्धिः। तस्मात् व्यञ्जनावृत्तिलक्षणं [5]दुर्वचनमिति चेदत्रोच्यते—**अन्वितेषु पदार्थेषु कविसंरंभविश्रान्त्यवधीभूतार्थप्रतीति-जनकश्लेषातिरिक्तशब्दार्थोभय[6]भिन्नव्यापारो व्यञ्जनेति लक्षणनिष्कर्षः।** [7]तत्र सङ्केतवाच्यानुपपत्त्यनुसन्धानगुणयोगानिमित्तत्वजनकतावच्छेदकं विव-क्षितमिति नात्माश्रयशङ्कावकाशः।

---

[1] शब्दत्वस्य धर्मत्वात—म

[2] वृत्तिरेव—त

[3] ततो नेदं—त

[4] युक्तम्। नापि द्वितीयं लक्षणं युक्तम्। शब्दव्यञ्जकवादिनं प्रति अन्यतरा-सिद्धेरेव। व्यङ्ग्यत्वज्ञानं विना व्यङ्ग्यत्वज्ञानाभावात् आत्माश्रयश्च। नान्त्य-लक्षणं युक्तम्। तत्रैव रीत्या—त

[5] दुर्वारमिति चेत् अन्वितेषु—म

[6] भिन्नभिन्नव्यापारो—त

[7] अत्र—त

न चोभयशक्तिमूलव्यञ्जनायाम् अव्याप्तिः। तस्या अपि शब्दार्थोभयभिन्नभिन्नव्यापारत्वात्। ततोऽनवद्यं व्यञ्जनावृत्तिलक्षणम्।

सा च व्यञ्जना त्रिविधा—शब्दशक्तिमूला-अर्थशक्तिमूला-उभयशक्तिमूला चेति।

तत्र शब्दशक्तिमूला यथा—

[1]सुवर्णचैह्नैर्वियुतोरुपक्षैः
शिलीमुखैः राघवतो निरीतैः।
संसृष्टमात्राणि महापलाशि-
पत्राणि वृद्धानि [2]तथैव पेतुः॥

अत्र शिलीमुखादिशब्दानां बाणादिरूपार्थेषु अभिधया प्रतीयमानेष्वपि या अर्थान्तरप्रतिपत्तिः जायते लाघवात्, निर्गतैर्भृङ्गैः संस्पृष्टमात्राणि जीर्णतरुपत्राणि पेतुरिति सा व्यञ्जनैव। नात्र अभिधा शङ्कनीया। तस्याः प्राकरणिकार्थमात्रपर्यवसानात्।

ननु अप्राकरणिकार्थो वाक्यार्थशोभार्थं वक्तुर्विवक्षितः अभिधयैव प्रतीयतां, किं वृत्त्यन्तरकल्पनया। शिलीमुखादिशब्दानां प्रयोगान्तरेषु भृङ्गादिवाचकत्वस्यापि सिद्धत्वादिति चेत्सत्यम्। तथाप्ये[3]तस्मिन् प्रयोगे एकस्य शब्दस्य अनेकार्थत्वं न युज्यते। अन्याय्यश्चाने[4]कार्थत्वमिति न्यायात्।

---

[1] सुवर्णवर्णैर्विधुनोरुपक्षैः—त
[2] तदैव पेतुः—म
[3] एकस्मिन्—त
[4] अनेकार्थमिति न्यायात्—म

न च व्यञ्जनावृत्त्यङ्गीकारेऽपि एतन्न्यायविरोधस्समान इति वाच्यम्। तस्य न्यायस्य एकस्मिन् प्रयोगे अनेक[1]वाच्यार्थनिषेधपरत्वात्। अन्यथा अभिहितान्वयवादिमते गामानयेत्यादावपि एतन्न्यायविरोधात्। पदार्थातिरिक्तवाक्यार्थप्रतीतिर्न स्यात्।

नन्वक्षस्यां पश्यन्ति दीव्यन्तीचेत्यादौ एकस्मिन् प्रयोगेऽप्यनेकार्थवाचकत्वं दृश्यत इति चेन्न। तत्र क्रियाभेदघटितार्थभेदेन वाक्यार्थभेदाङ्गीकारात्। प्रकृते तदभावात्। अन्यथा तद्वदेव प्रकृतेऽप्यर्थान्तरेण प्रकृत[2]वाक्यार्थशोभनं स्यात्। अतो नात्राभिधायुक्ता। नापि लक्षणा सम्भवति। वाच्यानुपपत्तेरभावात्। वाच्यारमणीयत्वे च लोके [3]नानुपपत्तिप्रयोग इति प्रागेवोक्तत्वात्। तर्हि व्यापारद्वयेन अर्थभेदसत्वे वाक्यभेदस्स्यादिति चेन्न। वाक्यभेदाङ्गीकारे अर्थान्तरेण प्रकृतवाक्यार्थस्य बाधकाभावप्रसङ्गात्। वाक्यभेदस्थले तथा दर्शनात्। लौकिकवाक्यानां वक्तृविवक्षापरतन्त्रत्वाच्च। नाप्यत्र गौणी शङ्कनीया। गुणयोगाभावात। न चात्र श्लेषालङ्कारश्शङ्कनीयः। उभयोः प्रकृतत्वाभावेन प्रकृतश्लेषाभावात्। उभयोरप्रकृतत्वा[4]भावेन अप्रकृतस्याप्यसम्भवात्। विशेष्यस्यापि श्लिष्टत्वेन प्रकृताप्रकृतश्लेषस्याप्यनर्हत्वात्।

वस्तुतस्तु स एव नास्तीत्यलङ्कारप्रकरणे वक्ष्यते। नापि समासोक्तिः। विशेषणसाम्यात अप्रस्तुतस्य गम्यत्वाभावात्। अतः शब्दशक्तिमूलव्यञ्जनैव ध्वन्यपरपर्यायेति सिद्धम्।

---

[1] वाच्यार्थत्वनिषेधपरत्वात्—त

[2] वाक्यार्थप्रतीतिशोभनं—त

[3] नानुपपत्तिशब्दप्रयोग—त

[4] भावेनापि—त

अर्थशक्तिमूलव्यञ्जनावृत्तिर्यथा—

भञ्जाने रघुतिलके गिरीशचापं
सञ्जातं चटचटनिस्वनं गभीरम् ।
आकर्ण्य क्षितितनयात्मनीषु मोक्तुः
पुष्पेषोर्धनुरपि [1]भङ्गमेव मेने ॥

अत्र हरचापभङ्गे जाते सीता मन्मथचापमपि [2]भङ्गमेव मेन इति सीताया मन्मथबाणजनितबाधनिवृत्तिर्व्यज्यते ।

ननु सीतामन्मथबाणभेदजनितबाधशून्या तच्चापभङ्गाभिमानयुक्तत्वात् । यो यच्चापभङ्गाभिमानी स तद्बाणवेधजनितबाधशून्यः यथा संप्रतिपन्नवदिति । [3]अभिमानादेव तत्प्रतीतिरस्त्विति चेन्न । हेतावभिमानशब्देन प्रथमाविवक्षायां स्वरूपासिद्धिप्रसङ्गात् । भ्रमविवक्षायां व्यभिचारात् । अत एव न ज्ञानमात्रविवक्षापि युक्ता । व्यभिचारतादवस्थ्यादेव । एवमुदाहरणान्तरेष्वपि व्याप्यभावानुमानप्रवृत्तिरिति ध्वनिरनुमानादतिरि[4]च्येत इति ध्येयम् ।

नाप्यभिधावृत्त्या तत्प्रतीतिः । तस्याः [5]सङ्केतार्थमात्रप्रतीतावेवपर्यवसानात् । तस्मादर्थमूलव्यञ्जनेति सिद्धम् ।

---

[1] भग्नमेव मेने —त

[2] भग्नमेव—त

[3] अनुमानादेव—त

[4] रिच्यते इति—त

[5] सङ्केतितार्थमात्र—त

उभयशक्तिमूला यथा—

प्रयाणविजयप्रदं बलिविरोधिविद्रावणं
नितान्तविबुधास्पदं गुरुमहोत्सवस्थापनम् ।
विवृद्धतपनान्वयं विरुदकेतुशोभावहं
तवाहृतसुराजकं जयति रामरम्यं धनुः ॥

अत्र प्रयाणविजयप्रदं बलिविरोधिविद्रावणमित्यर्थशक्त्या गुरुमहोत्सवस्थापनं विरुदकेतु शोभावहमित्यादिशब्दशक्त्या च रामधनुषो धनूराशिसाम्यं व्यञ्जत इत्युभयशक्तिमूलता ।

अथ [1]कैशिक्यादीनां स्वरूपन्निरूप्यते—

'[2]अत्यन्तसुकुमारार्थसन्दुर्भा'—कैशिकीवृत्तिः ।

'[3]अत्युद्धतार्थसन्दर्भा—आरभटी' ।

---

[1] (i) कैशिक्यारभटी चैव सात्वती भारती तथा ।
चतस्रो वृत्तयो ज्ञेया रसावस्थानसूचकाः ॥
(प्र. रु. का. प्र–६)

(ii) भारती सात्वती चैव कैशिक्यारभटीति च ।
चतस्रो वृत्तयस्तासामुत्पत्तिर्वक्ष्यते स्फुटम् ॥
(र. सु. प्र. वि. २४४)

[2] नृत्तगीतविलासादिमृदुश्शृङ्गारचेष्टितैः ।
समन्विता भवेद्वृत्तिः कैशिकी श्लक्ष्णभूषणा ॥
(र. सु. प्र, वि. २६८)

[3] मायेन्द्रजालप्रचुरां चित्रयुद्धक्रियामयीम् ।
छेद्यैर्भेद्यैः प्लुतैर्युक्तां वृत्तिमारभटीं विदुः
(र. सु. प्र. वि. २८१)

"[1]ईषन्मृद्वर्थसन्दर्भा भारती ।

"[2]ईषत्प्रौढार्थसन्दर्भा सात्वती'

[3]अत्र सुकुमारसन्दर्भयोग्ययोः शृङ्गारकरुणारसयोः कैशिकी, अतिप्रौढार्थसन्दर्भयोग्ययोः रौद्रबीभत्सयोरारभटी, अनतिसुकुमारार्थसन्दर्भयोग्येषु हास्यशान्ताद्भुतेषु भारती, अनतिप्रौढसन्दर्भयोग्ययोर्वीरभयानकयोस्सात्वती ।

तत्र शृङ्गारे कैशिकी—यथा—

परस्परालोकनकौतुकोत्कयो-
श्शरीरतो रामनिमीन्द्रकन्ययोः ।
विवाहवेद्यं पुलकाङ्कुरप्रजा-
स्तमुत्सवं द्रष्टुमिवोद्गता बहिः ॥

करुणारसे कैशिकी—यथा—

'तूर्णमेष्यति तमस्समन्ततो
रामचन्द्रविपिनं गते त्वयि ।
तारके मम न चोल्लसिष्यतः
क्वापि यास्यति मनश्चकोरकः ।

---

1 प्रयुक्तत्वेन भरतैर्भारतीति निगद्यते ।
प्रस्तावनोपयोगित्वात् साङ्ग तत्रैव लक्ष्यते ॥
(र. सु. प्र. वि. १६१)

2 सात्त्विकेन गुणेनापि त्यागशौर्यादिना युता ।
हर्षप्रधाना सन्त्यक्तशोकभावा च या भवेत् ॥
(र. सु प्र. वि. २६२)

3 तत्र—त

[1]रौद्रेषु आरभटी—यथा—

ढक्का ढाङ्कारनादे रणभुविनिबिडीभूतभूतप्रभूतैः,
पैशाचैस्त[2]त्तत्ततत्तवततक्कतिकक्तों कतक्कत्तघोषैः।
रामे सम्पश्यमाने खरमुखरफलप्राशनैरस्रपानैः
भैतालं तालतारैः मुखरितभुवनं ताण्डवं चण्डमासीत्॥

बीभत्सारभटी यथा—

उद्यद्भिर्वकगृध्रचञ्चुदलनं दृग्गोलकं............
प्रोञ्छनं[3]यदि पू.तगन्धिविगलद्ग्रन्थं कबन्धव्रजम्।
क्रोष्ट्राकृष्टमितस्ततो विभजनाद्वेतालभूतादिभि-
स्स्रप्राणा रघुनाथबाणपतिता रक्षोभटा लक्षिताः।

हास्य रसे भारती यथा—

दूरं विक्षिपतो व्रजे पितरिति प्रोक्तं निर्जर्बालकैः,
संवेष्ट्याशुपटच्चरं स्फुटसिराजालं प्रदष्टाधरम्।
विक्षिप्य स्वबलेन दण्डमुदितस्खालित्यसंवल्लितं,
संवीक्ष्य त्रिजटं समुल्बणजरं रामोऽहसद्रक्षितुम्।

यथा वा—

नीवारमन्तुमभिसंपतितैः स्वपर्ण
शालाङ्कणातपगतं नतश्रृङ्गकोणैः।

---

[1] रौद्री आरभटी यथा—त
[2] स्रस्त—त
[3] युधि—त

सीतां समीक्ष्य हरिणैः कलहायमानां
रामो जहास हसितद्युतिपूर्णगण्डः ॥

शान्ते भारती यथा—

प्राग्गन्धप्रमदोक्तमादिविषयानन्देषु मन्दादराः
क्षोणि............हराधिवासनिरतास्सद्वासनावासिताः ।
श्रीरामायणकर्णिकर्णयुगलारामेति नामस्मृतिं
कुर्वाणा हृदि राममेव दधतो जीवन्ति धन्या जनाः ॥

अद्भुते भारती यथा—

निर्भिन्दन् सप्तताला ननुपरतगतिः पाटयन् सप्तशैलान्
प्रोद्धत्या सप्त मौनिस्थलमिषुतिलको लङ्घयन् सप्तसिन्धून् ।
यः पातालानि सप्तान्यपि परिदलयन् विष्टपानि द्विसप्त
व्यातेने साद्भुतानि प्रतिकलमवतादेष वो राघवीयः ॥

वीररसे[1] भारती यथा—

रामे साधितसेतुबन्धविभवे[2] सज्जीकृतं कार्मुकं
बिभ्राणे सहसाभिलङ्घमटति पृष्ठेन सौमित्रिणा ।
प्रापेद्वास्तमयं रजोभिरधिकैः प्लावङ्ग सेनोत्थितैः
कीशेन्द्राद्भुतसिंहनादविदलत्कूटास्त्रिकूटाचलः ॥

---

[1] सात्वती—त
[2] विभवैः—त
[3] सेनोक्षितै—त

भयानके सात्वती यथा—

"आयाते कुम्भकर्णे घनमति विपुलं सालमुल्लङ्घ्य दोर्ष्णोः,
शूलं लोलं करालं वहति कपिभटाः केचिदद्रीन् प्रविष्टाः।
केचिद्याता दिगन्तान् रणभुवि पतिताः केऽपि केचिन्न भोगाः,
जाता रामं शरण्यं शरणमुपगताः केचन प्राणरक्षाः॥

तथा मृदावप्यर्थे नातिप्रौढबन्धा—मध्यमकैशिकी नाम सर्वरससाधारणं वृत्त्यन्तरम्। एवं प्रौढेऽप्यर्थेनातिसुकुमारबन्धा मध्यमारभटी नाम वृत्त्यन्तरं सर्वरससाधारणम्। शृङ्गारकरुणयोरप्यतिप्रौढसन्दर्भस्यैव दोषावहत्वात्। रौद्रबीभत्सरसयोरप्यतिमृदुसन्दर्भस्यैव विरुद्धत्वात्।

तत्र मध्यमकैशिकी यथा—

'भूपतिरपि राघव त्वं किमु मामपि च प्रतापमार्तण्डः।
नावसि निपीड्यमानां चिरमुरुविरहज्वराभितापेन॥

मध्यमारभटी यथा—

'पीत्वा रात्रिञ्चराणां रुधिरमतितरां मात्रसूत्रोपवीतो,
मेदोगन्धानुलिप्तो जयति परिधृतोद्भिन्नसूक्ष्मोऽस्थिमालाः।
नृत्यद्वेतालभूतारचितघनानुतिभङ्गेणो राघवीयो
भीसस्संवर्तकालोदित इति विबुधैश्शङ्कितो भैरवो यः'॥

यथा वा—

'कुर्वन्ती घोषतोयाज्जडमवनितलं निस्सृतो राममेघान्
मुष्णन् चक्षूंष्यरीणामुरुतररुचिभिस्ताटका तालपातिः।

शुम्भद्दन्मौलिलीलामतनुत समरे कौशिकादेशवर्त्ती,
बाढं भीतिप्रदोऽयं भयमपहरताद्भूरि मे रामबाणः ।'

मध्यमकैशिकीमध्यमारभट्योस्सात्वतीवृत्तावन्तर्भावोऽस्तु, ईषत्प्रौढ-सन्दर्भरूपत्वाविशेषात् अतो न पृथग्वर्तित्वं तयोरिति चेदु[1]च्यते । ईषत्प्रौढ-सन्दर्भरूपा सात्वतीवृत्तिः । मध्यमकैशिकी तु मृद्रावप्यर्थेऽनतिप्रौढसन्दर्भरूपा । अतो न तस्यास्तत्रान्तर्भावः । अत एव न मध्यमारभट्या अपि तत्रान्तर्भावः । प्रौढेऽप्यर्थेऽनतिमृदुक्रमरूपत्वात् [2]मध्यमारभट्याः किञ्चित्साम्येन तत्रान्तर्भावा-ङ्गीकारेऽतिप्रसङ्गप्रसङ्गः । ननु तर्हि सात्वतीवृत्तिरपि सर्वरससाधारणा भवितु-मर्हति । 'ईषत्प्रौढसन्दर्भरूपत्वात्, मध्यमकैशिकीवत् अनतिमृदुसन्दर्भरूप-त्वात् मध्यमारभट्यादिवत् इत्यनुमानान्न [3]सात्वत्यभिधानकवीररससाधारणत्व-मिति चेन्मैवम् । प्रथमहेतौ मृद्वर्थत्वे सति अनतिप्रौढसन्दर्भस्योपाधित्वात् । द्वितीयहेतावपि प्रौढार्थत्वे सति अनतिमृदुसन्दर्भत्वस्य उपाधित्वात् । कैशिक्यादिवृत्तिरपि सर्वरससाधारणा भवितुमर्हति । वृत्तित्वान्मध्यमकैशि-क्यादिवत् इत्याभाससमानयोगक्षेमत्वाच्च । ननु तर्हि मध्यमकैशिकीमध्यमा-रभट्यौ सर्वरससाधारणे स्याताम् । ईषत्प्रौढसन्दर्भत्वात् । अनतिमृदु[4]सन्द-र्भाद्वा, सात्वतीवदिति चेन्मैवम् । प्रागुक्तभाससमानयोगक्षेमत्वादित्यल-मतिप्रसङ्गेन । एवं रसान्तरेष्वप्युदाहरणमूह्यम् ।

---

[1] उच्यते ईषत्प्रौढार्थे-ईषत्—त

[2] मध्यमारभट्याः अपि किञ्चित्—त

[3] सात्वतीभयानकवीररस—त

[4] सन्दर्भत्व द्वा—त

अथ [1]वैदर्भ्यादिरीतीनां कैशिक्यादिवृत्तिभ्यः कथं भेद इति चेदुच्यते। [2]शब्दगुणानां रीतीनाम् अर्थविशेषनिरपेक्षत्वात् केवलसन्दर्भसौकुमार्यप्रौढत्वमात्रविषयतया कैशिक्यादिवृत्तिभ्यो भेदस्सम्भवति। सन्दर्भस्यातिमृदुत्वं नाम असंयुक्तकोमलवर्णत्वमतिप्रौढत्वं परुषवर्णविकटबन्धत्वं संयुक्तमृदुवर्णेश्चीषन्मृदुत्वम्। अतिविकटपरुषवर्णेषु ईषत्प्रौढत्वम्। तत्र [3]रीतिर्नाम गुणाश्लिष्टपदसङ्घटना। सा त्रिविधा। वैदर्भी गौडी पाञ्चाली चेति। तत्र [4]परुषबन्धरहितानतिदीर्घसमासा वैदर्भीरीतिः।

यथा—

यस्याकारो भवति कृतिनां लोचनानन्ददायी
यश्चारित्रं श्रवणविवरानन्ददं श्रावकाणाम्।
चिन्ता यस्य प्रभवति सदा मानसानन्दकल्प्यै
सस्त्वानन्दं दिशतु भगवानेष मे रामचन्द्रः॥

---

1 अथ रीतीनां—म

2 शब्दगुणाश्रितानां—त

3 रीतिरस्यात् पदविन्यासभङ्गी सा तु त्रिधा मता।
कोमला कठिना मिश्रा चेति स्यात् तत्र कोमला॥
द्वितीयतुर्यवर्णैर्या स्वल्पैर्वर्गेषु निर्मिता।
अल्पप्राणाक्षरप्राया दशप्राणसमन्विता॥
समासरहिता स्वल्पैः समासैर्वा विभूषिता।
विदर्भजनहृद्यत्वात् सा वैदर्भीति कथ्यते॥
(र. सु. प्र. वि. २२८-२२९)

4 बन्धपारुष्यरहिता शब्दकाठिन्यवर्जिता।
नातिदीर्घसमासा च वैदर्भीरीतिरिष्यते॥ (प्र. रु. का. प्र. २७)

[1]ओजः कान्तिगुणविशिष्टा रीतिः गौडीरीतिः ।

यथा—

'राजत्तेजोऽग्निकीलाचटुलपटलसंप्लुष्टपौलस्त्य सौध-
स्फायत्सौवर्णभस्मक्षपितसुरवधूमूर्तिबन्दीक्षयार्तिः ।
लीलामात्रोपनीतौषधिगिरिवरसञ्जीवनी जीविताजी
भ्रश्यत्सौमित्रिजीवो जयति जनभिषक्कोऽपि रामस्य दूतः ॥

[2]उभयात्मिका पाञ्चालीरीतिः । यथा—

'मनोहरदयादृष्टिर्मन्दहासलसन्मुखः ।
मङ्गलाय सदा देवो मैथिलीजानिरस्तु मे ॥

यथा वा—

'प्रणतविबुधमौलिस्फारहारालितेजः
प्रविमलजलधौते यस्य पादारविन्दे ।
विरचयति विचित्रं सज्जकोदण्डपाणि-
स्सततमखिलभक्तावासरक्षां स रामः ॥'

---

1 (i) ओजः कान्तिगुणोपेता गौडीया रीतिरिष्यते ।
(प्र. रु. का. प्र. २९)

(ii) अतिदीर्घसमासयुता बहुलैर्वर्णैर्युता महाप्राणैः ।
कठिणा सा गौडीयेत्युक्ता तद्देशबुधमनोज्ञत्वात् ॥
(र. सु. प्र. वि. २३९)

2 (i) पाञ्चाली रीतिर्द्विधर्मौ गौडीवैदर्भ्योरुभयात्मिका ॥ (प्र. रु. का. प्र. ३२)

(ii) यत्रोभयगुणग्रामसन्निवेशस्तुलाधृतः ।
सा मिश्रा सैव पाञ्चालीत्युक्ता तद्देशजप्रिया ॥
(र. सु. प्र. वि. २४०)

## अथ शय्या निरूप्यते

[1]पदानामुत्कृष्टान्योन्यमैत्री शय्या। न चेयं रीतावेव अन्तर्भवतीति वाच्यम्। रीतौ पदसम्बन्धस्य विनिमयसम्भवात्। शय्यायां तु तदसम्भवेन ततो भेदसम्भवात्।

यथा—

'रामाविवक्ष्य, मुनिनेति विवर्ण्यमाना-
प्यामोदमानहृदयो [2]हृतवैरिमानः।
भीमायुधस्य भृशमानमनेन वाञ्छत्
जामातृतां जनकधाम जगाम रामः॥'

यथा वा—

'विदेहहृन ............ तृष्णोदयं
निरन्तरमुदावहं प्रबलसर्वजाड्यापहम्।
पुरन्दरचतुर्मुखप्रमुखदेवतादुर्लभं
पिबन्तु रसिका जना जगति रामनामामृतम्।

## अथ पाको निरूप्यते

[3]अर्थगाम्भीर्यं पाकः। स बहुविधः। द्राक्षापाकनालिकेरपाककदलीपाकादिभेदात्। बहिरन्तस्स्फुरद्रसः द्राक्षापाकः।

---

1 या पदानां परान्योन्यमैत्री शय्येति कथ्यते॥ (प्र. रु. का. प्र. ३४)

2 जितवैरिमानः—त

3 अर्थगम्भीरिमा पाकः स द्विधा हृदयंगमः।
द्राक्षापाको नारिकेलपाकश्च प्रस्फुटान्तरौ॥ (प्र. रु. का. प्र. ३५)

यथा—

'कदान्धकारं मम देशसङ्गतं,
हरिष्यति त्वन्मुखचन्द्रचन्द्रिका ।
महीसुते मामकदृक्चकोरकौ,
कदा नु तृप्तिं परमां गमिष्यतः' ॥

'[1]अन्तर्गूढरसो नालिकेरपाकः ।'

यथा—

'सतोऽव्रताद्वातसुगार्तिकीर्तये
सुराध्वविस्तारितपत्रयुग्भृतः ।
स दृग्विधोर्युग्मतदस्य राघवो
दधन्निषङ्गद्वयमङ्गपार्श्वयोः ॥'

अत्र तूणद्वयधरो रामचन्द्रो विस्तारितपक्ष[2]युगगरुत्मानिवेत्ययमर्थो [3]न प्राक् प्रतीयते इत्ययं नारिकेलपाकः ॥

'ईषद्गूढरसः कदलीपाकः । यथा—

सर्वप्रजानामतिशीतमेते
न योग्यमेतादृशवृत्त[4]मीक्ष्यते ।
विबाधसे [5]यद्रसिकाम्बुवर्षणै-
स्सीतानुरक्तान्मम जीवनाङ्कुरान् ॥

---

[1] स नारिकेलपाकस्स्यात् अन्तर्गूढरसोदयः । (प्र. रु. का. प्र. ३७)
[2] युगलो गरुत्मानिव—त
[3] प्राङ्न प्रतीयते—त
[4] मिष्यते—त
[5] यत्र सिताम्बुवर्षणैः—त

आदिशब्देन चूतपाकादयो गृह्यन्ते।

अत्र ईषद्गूढतमरसश्चूतपाकः। यथा—

सीते दशां मदीयां पृच्छसि चेद्वक्तुमपि न शक्तोऽस्मि।
त्वां राक्षसेन नीतामनुयातं किन्तु मन्मनः पृच्छ॥

अथ काव्यविशेषा निरूप्यन्ते।

[1]व्यङ्ग्यप्राधान्ये उत्तमं काव्यम्। तदेव ध्वनिरिति व्यपदिश्यते।

[2]व्यङ्ग्यस्याप्राधान्ये मध्यमं काव्यम्। तदेव गुणीभूतव्यङ्ग्यमित्युक्तम्।

व्यङ्ग्यस्यास्फुटत्वे अधमं काव्यम्। तदेव चित्रमिति गीयते।

उत्तमं काव्यं यथा—

वामाङ्कशोभिनिमिजाकुचदत्तपाणौ
सिंहासनाग्रमधितिष्ठति रामचन्द्रे।
आस्थानभित्तिपरिनिर्मितपुत्रिकाणा-
[3]मङ्गेऽपि सान्द्रपुलकाङ्कुरपालिरासीत्॥

---

[1] व्यङ्ग्यस्य प्राधान्याप्राधान्याभ्यामस्फुटत्वेन च त्रिविधं काव्यम्। व्यङ्ग्यस्य प्राधान्यं उत्तमं काव्यं ध्वनिरिति व्यपदिश्यते। अप्राधान्ये मध्यमं गुणिभूत व्यङ्ग्यमिति गीयते। व्यङ्ग्यस्य अस्फुटत्वे अधमं काव्यं, चित्रमिति गीयते। (प्र. रु. का. प्र. काव्यविशेषाः)

[2] अप्राधान्ये मध्यमं, गुणीभूतव्यङ्ग्यमिति गीयते—
(प्रतापरुद्रीये काव्यप्रकरणम्)

[3] मङ्केऽपि—त

अत्र आस्थानभित्तिचित्रवधूनामपि वपुषि पुलकाङ्कुरपालिरित्यनेन रामचन्द्रस्य लोकोत्तरसौन्दर्यशालित्वं ध्वन्यते ।

गुणिभूतव्यङ्ग्यं यथा—

मातः कुलं सुबहु हेम च मान एव
मानो स वः पुरुषमानिजनस्य लोके ।
रक्षोवराकक्रुतमीदृशमानभङ्गं
नो विस्मरेति वद राघवमाञ्जनेय ॥

अत्र मानभङ्गविस्मरणे कुलहान्यादिप्रसङ्ग इति व्यङ्ग्यम् । ईदृशमानभङ्गं न विस्मरेति "वाच्यादविशिष्टमिति गुणीभूतव्यङ्ग्यता ।

चित्रमपि त्रिविधम् । शब्दचित्रम् अर्थचित्रमुभयचित्रं चेति ।

तत्र शब्दचित्रं यथा —

'उद्दण्डो दण्डकान्तर्गतमुनिदिविपन्मण्डलालम्बदण्डो,
दैत्यानां कालदण्डाकृतिरखिलजगन्मन्दिराधारदण्डः ।
शिक्षादण्डः खलानां [1]रवितनयमहागण्डदण्डप्रचण्डो
दोर्दण्डे शोभितस्त्वाममररिपुरिपोः पातु कोदण्डदण्डः ।

यथा वा—

'दुश्शिक्षक्षणदाचरक्षतजविक्षोदोग्रसंवीक्षणः
क्षोणीभृद्रणपक्षशिक्षकभुजा कौक्षेयकादिक्षमः ।

---

[1] रचित—त

फालाक्षाभ्यधिकाक्षितीक्ष्णपतनस्साक्षाज्जगद्रक्षकः,
संक्षोभं [1]मनसः क्षिणोतु भवतां रामक्षुरप्रोत्करः ॥

अर्थचित्रं यथा—

पक्षैर्यः पन्नगानामरिरिव विलसच्छल्यनिर्यात[2]काल्या
साक्षाद्भावीव वह्निर्मरुदिव तरसा गौरवेणेव मेरुः ।
आकृत्येवोग्रनागश्शमन इव महाभीतिदानेन रेजे
सोऽव्यादव्याजमस्मानमरमय इव प्रोज्वलो रामबाणः ॥

उभयचित्रं यथा—

डोलाडोलायमाना समजनि पृथिवी निश्चचालातिवेलं
क्षोभं क्षोभं पयोधिर्वपुरतिपरुषं मारुता भीमवेगाः ।
भासा भासाविनेदुर्दिवि भयमिलितौ वीक्ष्य यं [3]सैष मोदं
दद्यादद्याधिकं नो दशवदनवधप्रेरितो रामबाणः ॥

अत्र छेकानुप्रासश्शब्दचित्रम् । शब्दचित्रान्तराण्यस्मज्जेष्ठपुत्र वेङ्कटेश्वरकविकृतचित्रबन्धरामायणस्थानि शब्दालङ्कारप्रकरणे स्फुटीभविष्यन्ति ।

---

[1] मनसीक्षणं तु भवतां—त
[2] कान्त्या—त
[3] नैष—त

## अथ ध्वनिविशेषा निरूप्यते ।

तत्र द्विविधो ध्वनिः । लक्षणामूलोऽभिधामूलश्चेति । तत्राद्यो द्विविधः । [1]अर्थान्तरसङ्क्रमिताविवक्षितवाच्योऽत्यन्ततिरस्कृताविवक्षितवाच्यश्चेति । तत्राजहल्लक्षणामूलः प्रथमः । द्वितीयस्तु जहल्लक्षणामूलः । वाच्यस्यात्यन्ततिरस्कृतत्वात् । तत्राद्यः पदगतो वाक्यगतश्चेति द्विविधः । द्वितीयोऽप्येवं पदवाक्यगतत्वेन द्विविधः । [2]अभिधामूलो-विवक्षितान्यपरवाच्य इत्युच्यते । सोऽपि द्विविधः । सल्लक्ष्यक्रमव्यङ्ग्यो, असल्लक्ष्यक्रमव्यङ्ग्यश्चेति । तत्र संलक्ष्यः सम्यगालक्ष्यस्फुटसंवेद्यः क्रमो व्यङ्ग्यव्यञ्जकयोर्यत्र व्यङ्ग्यो स संलक्ष्यक्रमव्यङ्ग्यः । यत्र व्यञ्जकस्य विभावादेर्व्यङ्ग्यस्य रसादेर्विद्यमानोऽपि क्रमो न संलक्ष्यते सोऽसंलक्ष्यक्रमव्यङ्ग्यः । तत्राद्य[3]श्शब्दशक्तिमूलोऽर्थशक्तिमूल उभयशक्ति मूलश्चेति त्रिविधः । तत्र शब्दशक्तिमूलोऽपि वस्तुध्वनिरलङ्कारध्वनिश्चेति

---

[1] (i) अर्थान्तरं सङ्क्रमितमत्यन्तं वा तिरस्कृतम् ।
अविवक्षितवाच्यस्य ध्वनेर्वाच्यं द्विधा मतम् ॥
(ध्वन्यालोक: २उ-१)

(ii) ध्वनिरविवक्षितवाच्यो भवति द्वेधाऽत्र लक्षणामूलः ।
(एकावली-३ उन्मेष: १. श्लो.)

[2] (i) अभिधामूलोऽपि तथा विवक्षितान्यपरवाच्य इत्युक्तः
(एकावली-३ उन्मेषः-१५-श्लो)

(ii) असंलक्ष्यक्रमोद्योतः क्रमेण द्योतितः परः ।
विवक्षिताभिधेयस्य ध्वनेरात्मा द्विधा मतः ॥
(ध्वन्यालोकः-२ उद्योतः-२ श्लो)

[3] अनुस्वानाभसंलक्ष्यक्रमव्यङ्ग्यस्थितिस्तु यः ।
शब्दार्थोभयशक्त्युत्थ त्रिधा स कथितो ध्वनि ॥
(काव्यप्रकाश -४उ-३७ का)

[1]द्विविधः। द्विविधोऽपि पदगतो वाक्यगतश्चेति द्विविधः। अर्थशक्तिमूलस्संलक्ष्यक्रमव्यङ्ग्योऽपि अर्थस्य स्वतस्सिद्धत्वेन कविप्रौढोक्तिसिद्धत्वेन कविनिबद्धवक्तृप्रौढोक्तिसिद्धत्वेन च त्रिविधः। ननु कविप्रौढोक्तिमन्तरेण स्वतस्सिद्धकविनिबद्धवक्तृप्रौढोक्तिसिद्धयोरकिञ्चित्करत्वात्। सर्वत्र कविप्रौढोक्ति[2]सिद्धमेवेति न त्रैविध्यमेवेति चेत्सत्यम्। तथापि स्वतस्सिद्धकविनिबद्धवक्तृप्रौढोक्तिसिद्धयोर्न कविप्रौढोक्तिसिद्धत्वम् अर्थस्य पुरतः स्फुरत्वात्। किन्तु स्वतस्सिद्धत्वकविनिबद्धवक्तृप्रौढोक्तिसिद्धत्वमेवेति त्रैविध्यं युक्तम्। त्रिविधोऽपि वस्त्वलङ्काररूपतया द्वैविध्ये षड्विधः। षड्विधोऽपि व्यङ्ग्यव्यञ्जकतया द्वैविध्ये [3]द्वादशविधः। द्वादशविधोऽपि प्रबन्धवाक्यपदगतत्वेन त्रैविध्ये षट्त्रिंशत्प्रकारोऽर्थशक्तिमूलस्सम्पद्यते। स एव अनुरणनध्वनिरिति व्यपदिश्यते। उभयशक्तिमूलस्तु वाक्यगतत्वेन एकविध एव। असंलक्ष्यक्रमव्यङ्ग्यो [4]रसादिध्वनिः। स च प्रबन्धवाक्यपदपदैकदेशरचनावर्णगतत्वेन षड्विधः। एवं विवक्षितान्यपरवाच्यध्वने-

---

[1] अलङ्कारोऽथ वस्त्वेव शब्दाद्यत्रावभासते।
प्रधानत्वेन स ज्ञेयः शब्दशक्त्युद्भवो द्विधा॥
(काव्यप्रकाशः-४उ-३८ का)

[2] सिद्धत्वमेवेति।—त

[3] अर्थशक्त्युद्भवोऽप्यर्थः व्यञ्जकः सम्भवी स्वतः। प्रौढोक्तिमात्रात् सिद्धो वा कवेः तेनोम्भितस्य वा वस्तु वालङ्कृतिर्वेति षड्भेदोऽसौ व्यनक्ति यत्। वस्त्वलङ्कारमथ वा तेनासौ द्वादशात्मकः॥
(काव्यप्रकाशः-४ उल्लासः-३९-४१ का)

[4] (i) रसभावतदाभासतत्प्रशान्त्यादिरक्रमः।
ध्वनेरात्माङ्गिभावेन भासमानो व्यवस्थितः॥
(ध्वन्यालोकः-२ उ ३-का)

(ii) रसादीनामनन्तत्वात् भेद एको हि गण्यते॥
(काव्यप्रकाशः-४ उ ४२ का)

रविवक्षितवाच्यभेदैस्सह शुद्धा [1]एकपञ्चाशद्भेदाः। शुद्धानामेकैकस्य प्रत्येकमेकैकेन सम्बन्धेन प्रथमभेदस्य एकपञ्चाशद्भेदाः। द्वितीयस्य पञ्चाशद्भेदाः एवमुत्तरोत्तरस्यैकैकभेदपरित्यागे षड्विंशत्युत्तरशतत्रयाधिकसहस्रसंख्याका मिश्रा भेदाः॥

नन्वेवं लक्षणामूलध्वनेरभिधामूलध्वनिसम्बन्धे यथैको मिश्रो भेदः तथा अभिधामूलध्वनेरपि लक्षणामूलध्वनिसम्बन्धे भेदान्तरं सम्भवति। एवमेकपञ्चाशद्भेदानां सम्बन्धे प्रतियोग्यनुयोगिभावव्यत्यासे क्रियमाणे सत्येकोत्तरशतषट्काधिकसहस्रद्वयमिश्रभेदसम्भवात् प्रागुक्तसंख्यानिर्देशो न युक्त इति चेत्सत्यम्। तथापि तस्यामुना सह सम्बन्धः अमुष्य वा तेनेति सम्बन्धिप्रतिसम्बन्धिनोरुच्चारणव्यत्यासमात्र एव पर्यवसानान्न चमत्कारविशेषावहध्वनिभेद एव उत्तमकाव्यमित्युक्तसंख्यानिर्देशो युक्त एव। तेषामपि मिश्रभेदानां सन्देहास्पदत्वेन अनुग्राह्यानुग्राहकभावेन एकव्यञ्जकानुप्रवेशेन च त्रिरूपेण सङ्करेण एकरूपया संसृष्ट्या च [2]पुनः चतुर्धा योजने चतुरुत्तरत्रयाधिकपञ्चसहस्राणि भेदास्सम्भवन्ति। संसृष्टिसङ्करयोस्स्वरूपं तु अलङ्कारप्रकरणान्ते स्फुटीभविष्यति। अलं विस्तरेण। तत्रत्यानां [3]नामधेयभेदविषयस्तु विद्यानाथादिभिरुपपादितो द्रष्टव्यः। तेष्वस्माभिः कियन्तो भेदा उदाह्रियन्ते। तत्र पदगतार्थान्तरसङ्क्रमिताविवक्षितवाच्यध्वनिर्यथा—

---

[1] भेदाः तदेकपञ्चाशत् (काव्यप्रकाश ४ उ-४२ का)

[2] पुनरपि च चतुर्धा—त

[3] शुद्धाश्चन्द्रशरा मिश्रा ऋतुनेत्रानलेन्दवः
संसृष्टिसंकरा यत्तास्त्वब्धिखाग्निशराभिधाः॥
तत्र शुद्धानामेकपञ्चाशद्भेदानां नामधेयानि कथ्यन्ते।

'राघव्यः पृतना निरुद्ध्य परितो लङ्कापुरं सङ्कुलं,

पदगतार्थान्तरसङ्क्रमिताविवक्षितवाच्यध्वनिः ॥ १ ॥
वाक्यगतार्थान्तरसंक्रमिताविवक्षितवाच्यध्वनिः ॥ २ ॥
पदगतात्यन्ततिरस्कृताविवक्षितवाच्यध्वनिः ॥ ३ ॥
वाक्यगतात्यन्ततिरस्कृत अविवक्षितवाच्यध्वनिः ॥ ४ ॥
पदगतशब्दशक्तिमूलसंलक्ष्यक्रमवस्तुध्वनिः ॥ ५ ॥
पदगतशब्दशक्तिमूलसंलक्ष्यक्रमालङ्कारध्वनिः ॥ ६ ॥
वाक्यगतशब्दशक्तिमूलसंलक्ष्यक्रमवस्तुध्वनिः ॥ ७ ॥
वाक्यगतशब्दशक्तिमूलसंलक्ष्यक्रमालङ्कारध्वनिः ॥ ८ ॥
पदगतस्वतःसिद्धार्थशक्तिमूलो वस्तुना वस्तुध्वनिः ॥ ९ ॥
पदगतस्वतःसिद्धार्थशक्तिमूलो वस्तुनालङ्कारध्वनिः ॥ १० ॥
पदगतस्वतःसिद्धार्थशक्तिमूलोऽलङ्कारेण अलङ्कारध्वनिः ॥ ११ ॥
पदगतस्वतः सिद्धार्थशक्तिमूलोऽलङ्कारेण वस्तुध्वनिः ॥ १२ ॥
वाक्यगतस्वतःसिद्धार्थशक्तिमूलो वस्तुना वस्तुध्वनिः ॥ १३ ॥
वाक्यगतस्वतःसिद्धार्थशक्तिमूलो वस्तुना अलङ्कारध्वनिः ॥ १४ ॥
वाक्यगतस्वतः सिद्धार्थशक्तिमूलोऽलङ्कारेणालङ्कारध्वनिः ॥ १५ ॥
वाक्यगतस्वत सिद्धार्थशक्तिमूलोऽलङ्कारेण वस्तुध्वनिः ॥ १६ ॥
प्रबन्धगतस्वतः सिद्धार्थशक्तिमूलो वस्तुना वस्तुध्वनिः ॥ १७ ॥
प्रबन्धगतस्वतः सिद्धार्थशक्तिमूलो वस्तुनालङ्कारध्वनिः ॥ १८ ॥
प्रबन्धगतस्वतः सिद्धार्थशक्तिमूलोऽलङ्कारेण अलङ्कारध्वनि॥ १९ ॥
प्रबन्धगतस्वतःसिद्धार्थशक्तिमूलोऽलङ्कारेण वस्तुध्वनिः ॥ २० ॥
पदगतकविप्रौढोक्तिसिद्धार्थशक्तिमूलो वस्तुना वस्तुध्वनिः ॥ २१ ॥

पद्गतकविप्रौढोक्तिसिद्धार्थशक्तिमूलो वस्तुना अलङ्कारध्वनिः ॥ २२ ॥

पदगतकविप्रौढोक्तिसिद्धार्थशक्तिमूलोऽलङ्कारेण अलङ्कारध्वनिः ॥ २३ ॥

पदगतकविप्रौढोक्तिसिद्धार्थशक्तिमलोऽलङ्कारेण वस्तुध्वनिः ॥ २४ ॥

वाक्यगतकविप्रोढोक्तिसिद्धार्थशक्तिमूलो वस्तुना वस्तुध्वनिः ॥ २५ ॥

वाक्यगतकविप्रौढोक्तिसिद्धार्थशक्तिमूलो वस्तुना अलङ्कारध्वनिः ॥ २६ ॥

वाक्तगतकविप्रौढोक्तिसिद्धार्थशक्तिसूलोऽलङ्कारेण अलङ्कारध्वनिः ॥ २७ ॥

वाक्यगतकविप्रौढोक्तिसिद्धार्थशक्तिमूलोऽलङ्कारेण वस्तुध्वनिः ॥ २८ ॥

प्रबन्धगतकविप्रौढोक्तिसिद्धार्थशक्तिमूलो वस्तुना वस्तुध्वनिः ॥ २९ ॥

प्रबन्धगतकविप्रौढोक्तिसिद्धार्थशक्तिमूलो वस्तुना अलङ्कारध्वनिः ॥ ३० ॥

प्रबन्धगतकविप्रौढोक्तिसिद्धार्थशक्तिमूलो अलङ्कारेण अलङ्कारध्वनि ॥ ३१ ॥

प्रबन्धगतकविप्रौढोक्तिसिद्धार्थशक्तिमुलो अलङ्कारेण वस्तुध्वनिः ॥ ३२ ॥

पद्गतकविनिबद्धोक्तिसिद्धार्थशक्तिमूलो वस्तुना वस्तुध्वनिः ॥ ३३ ॥

पद्गतकविनिबद्धोक्तिसिद्धार्थशक्तिमूलो वस्तुना अलङ्कारध्वनिः ॥ ३४ ॥

पद्गतकविनिबन्द्धोक्तिसिद्धार्थशक्तिमूलोऽलङ्कारेण अलङ्कारध्वनिः ॥ ३५ ॥

पदगतकविनिबद्धोक्तिसिद्धार्थशक्तिमूलो अलङ्कारेण वस्तुध्वनिः ॥ ३६ ॥

वाक्यगतकविनिबद्धोक्तिसिद्धार्थशक्तिमूलो वस्तुना वस्तुध्वनिः ॥ ३७ ॥

वाक्यगतकविनिबद्धोक्तिसिद्धार्थशक्तिमूलो वस्तुनालङ्कारध्वनिः ॥ ३८ ॥

वाक्यगतकविनिबद्धोक्तिसिद्धार्थशक्तिमुलो अलङ्कारेण अलङ्कारध्वनिः ॥ ३९ ॥

वाक्यगतकविनिबद्धोक्तिसिद्धार्थशक्तिमूलो अलङ्कारेण वस्तुध्वनिः ॥ ४० ॥

प्रबन्धगतकविनिबद्धोक्तिसिद्धार्थशक्तिमूलो वस्तुना वस्तुध्वनिः ॥ ४१ ॥

प्रबन्धगतकविनिबन्द्धोक्तिसिद्धार्थशक्तिमूलो वस्तुनालङ्कारध्वनिः ॥ ४२ ॥

प्रबन्धगतकविनिबद्धोक्तिसिद्धार्थशक्तिमूलो अलङ्कारेण अलङ्कारध्वनिः ॥ ४३ ॥

प्रबन्धगतकविनिबन्द्धोक्तिसिद्धार्थशक्तिमूलो अलङ्कारेण वस्तुध्वनिः ॥ ४४ ॥

[1]तिष्ठन्त्येकपरैव रावण तव प्राणप्रतिष्ठागतिः ।
भ्रातर्यद्य विभीषणे धुरमिमां राज्यस्य दत्वा पुनः
कैकस्याः प्रविगाह्य गर्भमुदय त्वं रामनामाङ्कितः ॥

अत्र राघवः खल्वमोघनिरङ्कुशप्रतापशाली, तस्य सम्बन्धिन्यः पृतना इत्यर्थान्तरसङ्क्रमितवाच्यता रामसेना दुर्जया इति ध्वनिः ।

वाक्यगतार्थान्तरसङ्क्रमिताविवक्षितवाच्यध्वनिर्यथा—

विश्रुतावेव भवता रामो लमक्ष्ण इत्युभौ ।
आज्ञया हन्त यो रागां जिज्ञासुस्ते स्थितिस्थलम् ।

अत्र रामलक्ष्मणावुभौ त्वया विश्रुतावित्यनेन रामलक्ष्मणौ सकालारिनिषूदनौ महाप्रतापशालिनावित्यर्थान्तरसङ्क्रमितवाच्यता । इतःपरं [2]तवावस्थानस्थलमपि दुर्लभमिति ध्वनिः वाक्यगतः ॥

---

प्रबन्धगतासंलक्ष्यक्रमव्यङ्ग्यो रसादिध्वनिः ॥ ४५ ॥
वाक्यगतासंलक्ष्यक्रमव्यङ्ग्यो रसादिध्वनिः ॥ ४६ ॥
पदगतासंलक्ष्यक्रमव्यङ्ग्यो रसादिध्वनिः ॥ ४७ ॥
पदैकदेशगतासंलक्ष्यक्रमव्यङ्ग्यो रसादिध्वनिः ॥ ४८ ॥
रचनागतासंलक्ष्यक्रमव्यङ्ग्यो रसादिध्वनिः ॥ ४९ ॥
वर्णगतासंलक्ष्यक्रमव्यङ्ग्यो रसादिध्वनिः ॥ ५० ॥
वाक्यगतोभयशक्तिमूलो ध्वनिः ॥ ५१ ॥

( प्रतापरुद्रीये काव्यप्रकरणे ध्वनिविशेषप्रकरणम् )

[1] तिष्ठत्येक—त
[2] तथाव—त

अत्यन्ततिरस्कृताविवक्षितवाच्यध्वनिर्यथा—

'इक्ष्वाकुवंशमयवारिधिसंभवानि
वल्मीकजन्मवदनापणविस्तृतानि ।
उत्कण्ठदिग्युवतिकण्ठविभूषणानि
राजन्ति रामगुणनिर्मलमौक्तिकानि ॥

अत्र दिग्युवतिकण्ठविभूषणानि इत्यत्यन्ततिरस्कृतवाच्यता, रामगुणास्सर्वंकषा इति ध्वनिः।

वाक्यगतात्यन्ततिरस्कृताविवक्षितवाच्यध्वनिर्यथा—

प्रतापलक्ष्मी[1]र्वितनोति दीपान्
बध्नाति कीर्तिर्धवलान्वितानान् ।
श्रीराम ते शैलबिलो मुनीन्द्रा
नितान्तमत्र स्थितिमाचरन्ति ॥

अत्र प्रतापलक्ष्मीर्दीपान् प्रतनोति कीर्तिर्धवलान्वितानान् बध्नातीत्यन्ततिरस्कृतवाच्यता । रामकीर्तिप्रतापौ बिलान्तर्वर्तिमुनिश्वराणामपि सन्तोषकराविति ध्वनिर्वाक्यगतः।

अर्थशक्तिर्मूलो वस्तुना वस्तुध्वनिर्यथा—

'रामस्य दौत्यमवलम्ब्य समेतमग्रे
पौलस्त्यकर्णपरुषं परिभाषमाणम् ।

---

[1] प्रतनोति—त

श्रुत्वाङ्गदं पलभुजां पुरि कामिनीभिः
निर्वापितोऽजनि महानसजातवेदाः ॥

अत्र आगतमङ्गदं श्रुत्वा लङ्कायाम् अङ्गनाभिः पाकगृहेष्वग्निः निर्वापित इति वस्तुना अयमपि [1]लङ्कान्धक्ष्यतीति शङ्काकुला लङ्काकुलस्त्रिय इति वस्तु व्यज्यते ।

यथा वा—

'कोदण्डपाणिमटवीसरणावटन्तं
रामं श्रियानुजयुतं [2]परिमुक्तकायाः ।
आलोक्य विस्मयविशालविलोचनोऽथ-
दानन्दबाष्पनिवहान्मुमुचुर्मुनीन्द्राः ॥'

अनेन रामचन्द्रस्य स्वध्येयचि[3]दानन्दरूपपरब्रह्मरूपवस्तु व्यज्यते ।

वस्तुना अलङ्कारध्वनिर्यथा—

गतवति रघुनाथे दण्डकारण्यमार्गं
नवसमुदितपुष्पा वृक्षवल्ल्यो बभूवुः ।
ननृतुरपि नितान्तोत्कण्ठिता नीलकण्ठा
मुदिह कुमुदिनीनां कापि जज्ञे दिनेऽपि ॥

अत्र वृक्षवल्लीनां पुष्पितत्वरूपवस्तुना रामे वसन्तभ्रान्तिर्नीलकण्ठानां नर्तनरूपवस्तुना रामे चन्द्रभ्रान्तिश्च ध्वन्यते ।

---

[1] गृहान् धक्ष्यतीति—त
[2] परिमुक्तयोगाः—त
[3] चिदानन्दपरब्रह्मस्वरूपं वस्तु—त

अलङ्कारेण वस्तुध्वनिर्यथा—

सहन्तरालेय [1]णसं समाहिअं
रहूत्तमं खण्डअ माणुमेसरम् ।
पुराणदेसेन भवाजुह ज्ज ज्जं
वहूअणा वं महंण में व मेणिरे ॥

छा : समानन्तरालेय धनुस्समाहितं
रघूत्तमं खण्डयमानमैश्वरम् ।
पुराणद्वेषेण भवायुधभञ्जनं
वधूजना मन्मथमेव मेनिरे ॥

अत्र उत्प्रेक्षालङ्कारेण रामस्य मन्मथसमानसौन्दर्यं वस्तु व्यज्यते ।

अलङ्कारेण अलङ्कारध्वनिर्यथा—

आस्थान्यामालेख्य प्रमदा नयनैरलोला[2]मानैस्स्वैः ।
सिंहासने निषण्णं राघवमनिमेषमिव निरीक्षन्ते ॥

अत्र राममनिमेषं निरीक्ष्य इवेत्युत्प्रेक्षया चित्रवध्वस्साभिलाषा इवेत्युत्प्रेक्षा व्यज्यते । एते स्वतस्सिद्धार्थशक्तिमूलध्वनयः ॥

कविप्रौढोक्तिसिद्धार्थशक्तिमूलो वस्तुना वस्तुध्वनिर्यथा—

‘[3]ताम्रप्रतापदहनोज्ज्वलकीलजाल-
संपर्कतप्तमपि निर्मलहेमरूपम् ।

---

[1] हंस—त
[2] मालैः स्वैः—त
[3] रामप्रताप—त

तत्कीर्तिसिन्धुपरिमग्नतया न सद्यो
ब्रह्माण्डभाण्डमुदितद्रुत[1]भानमासीत् ॥ १०२ ॥

अत्र रामप्रतापाग्नितप्तमपि ब्रह्माण्डभाण्डं रामकीर्तिसिन्धुमग्नतया सद्यो द्रुतं नासीदिति वस्तुना रामकीर्तिप्रतापविभवयोरतुल्यविभवत्वं वस्तु व्यज्यते।

कविप्रौढोक्तिसिद्धार्थशक्तिमूलो वस्तुना अलङ्कारध्वनिर्यथा—

तूणीरकोटरबिलादभिनिष्पतन्तः
प्रोद्यन्मुखा झटिति विष्णुपदानुषक्ताः।
[2]रामेषुकृष्णभुजगा, निजगाद भीमाः
प्राणानिलान् पपुरलं पलभोजनानाम् ॥ १०३ ॥

अत्र रामेषुभुजगाः पलाशिनां प्राणानिलान् पपुरित्यनेन वस्तुना सपिपासातिशया इवेत्युत्प्रेक्षा व्यज्यते।

कविप्रौढोक्तिसिद्धार्थशक्तिमूलालङ्कारेण वस्तुध्वनिर्यथा—

रामोऽसाववलम्ब्य भानुजकरं लङ्कामिमामीक्षते
सौमित्रिर्निकषन् शरान् शरमुखैरास्तेऽयमस्याग्रतः।
भूयोऽयं प्रदहन्निवास्ति हनुमान् दृष्टचाग्रहान्तुष्टया
लङ्कादुर्गरहस्यमेष लिखति क्षोणौ त्वदीयानुजः ॥ १०४ ॥

---

[1] भावमासीत्—त
[2] रामेषुकृष्टभुजगा—त

अत्र स्वभावोक्त्यलङ्कारेण रामो दुर्जय इति वस्तु व्यज्यते।

यथा वा—

स कल्पशाखीविकसत्प्रसूनमालाविलोलभ्रमराक्षनादैः ।
औदार्यविद्यां समधीत्य रामादभ्यस्यति स्मेव दिने दिनेऽपि ॥ १०५॥

अत्र रामादौदार्यविद्यामधीत्य अभ्यस्यति स्मेवेत्युत्प्रेक्षया रामस्य कल्पपादपादप्यधिकमौदार्यं वस्तु व्यज्यते।

कविप्रौढोक्तिसिद्धार्थशक्तिमूलोऽलङ्कारेणालङ्कारध्वनिर्यथा—

खरारिणा रोपविवर्णदृष्टिना,
प्रयुक्तबाणेन मरुस्थलीकृते ।
महार्णवे स्नेहवशावशीकृते
समस्तलोकास्सहसा वितत्रसुः ॥ १०६ ॥

अत्र रामबाणेन महार्णवे मरुस्थलीकृते इत्यतिशयोक्त्या सकललोकानां रामः सर्वभूतसंहारं करिष्यतीति भ्रान्तिर्व्यज्यते।

कविनिबद्धवक्तृप्रौढोक्तिसिद्धार्थशक्तिमूलो वस्तुना वस्तुध्वनिर्यथा—

[1]त्वन्नामधेयात् कलनाभिरामं
दशाननारामधिष्ठितासौ ।
विलोकयन्ती बहुमानदृष्ट्या
कथञ्चन प्राणिति राम सीता ॥ १०७ ॥

---

[1] त्वन्नामधेयाकलनाभिरामं—त

अत्र राम त्वन्नामधेयानुषक्तरावणगृहारामं दृष्ट्वा सीता कथञ्चन जीवतीति वस्तुना नेतः परं विलम्बः कर्तुमुचितः किन्त्वधुनैव रावणं प्रति दण्डयात्रा कर्तव्येति वस्तु व्यज्यते ।

यथा वा—

रे रे प्रोदितचन्द्रमस्त्वधिकथं पाटल्यमालक्ष्यते,
[1]जाने प्रोद्धृतमंशु यत्र विधया रक्तं महीजातनौ ।
निष्पीतं भवताद्य तद्वपुरभूदापाण्डु कच्चित्कृशं,
हा देवेन कथं त्वया कृतमिदं रक्ताशिनां चेष्टितम् ॥ १०८ ॥

अत्र देवेन त्वया कथं राक्षसचेष्टितं कृतमित्यनेन वस्तुना देवतानां कुले त्वमतीव निन्दितोऽभूरिति वस्तु व्यज्यते।

कविनिबद्धवक्तृप्रौढोक्तिसिद्धार्थशक्तिमूलो वस्तुनालङ्कारध्वनिर्यथा—

रेरे पातक देवपुण्यमलिनः कायोऽधुना तावको,
देहोऽस्माकमित्र प्रचण्डमहसां राशिः कथं जृम्भते ।
नो जाने समभूवमाशु चटुलश्रीरामचापाटवी
हेलाघूर्णितसेतुबन्धसलिलप्रोन्मज्जनादीदृशः ॥ १०९ ॥

अत्र रामसेतुधनुष्कोटीतीर्थे उन्मज्जनात् तेजोराशिरभूवं न जान इति वस्तुना किं रामस्य महिमा, किं वा तदीयधनुष्कोणस्य, आहोस्विचन्निर्मित सेतुबन्धस्य, अथवा तत्तीर्थस्येति संशयो व्यज्यते ।

---

[1] जाते प्रोच्युतमंशु यत्र—त

कविनिबद्धवक्तृप्रौढोक्तिसिद्धार्थशक्तिमूलालङ्कारेण अलङ्कार-ध्वनिर्यथा—

तेजःकोकनदस्य रावणरिपोः पत्रन्ति भागा दिशाम्,
अष्टौ काञ्चनकर्णिकातिरुचिरं ब्रह्माण्डभाण्डं तथा।
पारावारसरित्तटाकनिवहाः स्यन्दन्मरन्दन्त्यमी,
कुम्भीसम्भवजह्नुमुख्यमुनयो भृङ्गन्त्यटद्भङ्गयः ॥ ११० ॥

अत्र रामप्रतापकोकनदस्याष्टौ दिगन्ताः पत्रन्तीत्युपमाभिराश्रयाश्रयिणोरनानुगुण्यरूपाधिकालङ्कारो व्यज्यते।

कविनिबन्धवक्तृप्रौढोक्तिसिद्धार्थशक्तिमूलोऽलङ्कारेण वस्तुध्वनिर्यथा—

कोदण्डसायकधरैस्स्थितकान्तवक्त्रैः
कालाम्बुवाहसदृशैः करुणामयाक्षैः।
सीतानुजादिसहितैर्धृतदिव्यभूषै-
रामैस्सुचित्रितमिव प्रथते जगन्मे ॥ १११ ॥

अत्र स्थावरजङ्गमात्मकः प्रपञ्चो रामैश्चित्रितमिवेत्युत्प्रेक्षया रामस्य सर्वान्तर्यामित्वं वस्तु व्यज्यते। एवं प्रबन्धादिगतत्वेऽप्युदाहार्यम्।

## अथ शब्दशक्तिमूलध्वनिः यथा—

तत्र [1]संलक्ष्यक्रमशब्दशक्तिमूलालङ्कारध्वनिर्यथा—

---

[1] ससंलक्ष्यक्रम—त

निजासुहृद्दुष्कृतकर्मचोदितैः
पिनद्धदेहौ भुजगेन्द्र[1]साधकैः ।
उभौ नरेन्द्रौ स्मृतपन्नगान्तकौ
क्षणेन निर्मुक्तशुभौ बभूवतुः ॥ ११२ ॥

अत्र प्रकरणवशात् रामलक्ष्मणवाचकनरेन्द्रशब्देन व्यालग्राहिप्रतीतेरुपमा व्यज्यते। तेन ताभ्यां स्वत एव यद्यपि नागपाशबन्धनं मोचयितु शक्यते तथापि लोकोपदेशार्थं गरुडस्मरणं कृतमिति वस्त्वन्तरं व्यज्यते। तेन च तयोरादिविष्णुरूपत्वं व्यज्यते ।

संलक्ष्यक्रमशब्दशक्तिमूलवस्तुध्वनिर्यथा—

किन्नूपवासैः किमु तीर्थसेकैः
किं दानहोमैः किमशेषयोगैः ।
कृतं व्रतैः किं बहुना कदापि
स्मर्तव्य एवामरसार्वभौमः ॥ ॥ ११३ ॥

अत्रामरसार्वभौम इति शब्दशक्त्या प्रकरणबलात् रामचन्द्रप्रतीतिर्जायते । तेन सकलकर्मफलान्यपि [2]कदाचिद्रामचन्द्रस्मरणेनैव सिद्ध्यन्तीति वस्तु व्यज्यते। तेन च सकलकर्मफलावाप्त्यनन्तरं मोक्षरूपफलमपि सिद्ध्यतीति वस्त्वन्तरं च व्यज्यते ।

यथा वा—

विभीषणो रावणसोदरोऽहं
तेनावधूतश्शरणं प्रयातः ।

---

[1] सायकैः—त

[2] कादाचित्करामचन्द्र

निजाश्रितानाममरद्रुमाय
निवेदनीयो रघुनायकाय ॥११४॥

अत्र विभीषण इति शब्दशक्त्या रावणस्य अहं भयङ्कर इति वस्तु व्यज्यते। तेन रावणजयः ईषत्कर इत्यपि वस्तु व्यज्यते।

उभयशक्तिमूलध्वनिर्यथा—

महेश्वरोऽयं गुहसेव्यमानो
धरात्मजासन्निधिमोदमानः।
विलम्बमानातिलसज्ज[1]टांशुः
विभाति सान्निध्यनिवासिगङ्गः ॥ ११५ ॥

अत्र महेश्वरो गुहसेव्यमानो धरात्मजासन्निधिमोदमानः इति शब्दशक्तिमूलता। विलम्बमानातिलसज्जटांशुः सान्निध्यनिवासिगङ्गः इति चार्थशक्तिमूलता।

असंलक्ष्यक्रमव्यङ्ग्योदाहरणानि रसप्रकरणे स्फुटीभविष्यन्तीति ध्येयम्।

—गुणीभूतव्यङ्ग्यं मध्यमं काव्यम्—

गुणीभूतव्यङ्ग्यं मध्यमं काव्यम् अष्टविधम्।
तदुक्तं काव्य-प्रकाशिकाकारैः—

अगूढमपरस्याङ्गं वाच्यसिद्ध्यङ्गमस्फुटम्।
सन्दिग्धतुल्यप्राधान्ये काक्वाक्षिप्तमसुन्दरम् ॥

---

[1] जटांके—त

[1]इति [2]द्रविडकामिनीकुचकलशवदगूढव्यङ्ग्यस्य अचमत्कारकारित्वात् मध्यमकाव्यता।

यथा —

प्रायश्चित्तमिहाचर क्षितिसुताकामस्त्वमस्मिन् क्षणे
सुग्रीवस्य विधायकस्य वितर त्वज्जीवनं दक्षिणाम्।
लङ्कामप्यनुवादिनस्तव ननु भ्रातुर्द्विजेभ्यस्तनु-
प्राशं कीशसभाज्ञयाहमधुना छेत्स्यामि मूर्ध्नां भरम् ॥ ११६ ॥

अत्र अनया रीत्या सगुणप्रायश्चित्तकरणे तव सीताहरणजन्यपापान्निष्कृतिर्भविष्यतीति व्यङ्ग्यम् अगूढम्।

यथा वा —

छत्रं [3]सन्त्यज पुण्डरीकधवलं किञ्चामरे चामरे,
त्वद्भ्राता रघुनन्दनेन विभुना मूर्धाभिषिक्तः कृतः।
पापात्मन् समराङ्गणे निपतितश्शोचेत्त्वदीयाङ्गना
[4]भ्रश्यद्बाष्पजलोत्करेण भविता मूर्धाभिषिक्तो [5]भवान् ॥ ११७॥

---

[1] व्यङ्ग्यम् एवं गुणीभूतव्यङ्ग्यस्याष्टौ भिदाः स्मृताः ॥
(का. प्र.५उ. ४५)

[2] कामिनीकुचकलशवत् गूढमेव चमत्करोति। अगूढं तु स्फुटतया वाच्यायमानमिति गुणीभूतमेव ॥ (का. प्र. ५ उल्लास-४५)

[3] संत्यपि—त

[4] भ्रश्यद्तेष्टजलोत्करेण —त

[5] कृतः—त

अत्र तव इतः परं लङ्काराज्यमस्थिरमिति व्यङ्ग्यमगूढम्।

अत्र रसादे रसान्तरादिकमङ्गं भवति [1]तदपरस्याङ्गं गुणीभूत-व्यङ्ग्यम्।

यथा—

मुञ्चन्तो विषयान्तराणि सतमःपुञ्जे निकुञ्जान्तरे
सिन्धूनां पुलिने घने क्षितिभृतां हृत्सुन्दरे कन्दरे।
उन्मीलत्पुलका निमीलितदृशो श्रीरामभक्त्यान्विताः
कालं साधु नयन्ति दुर्लभतमानन्देन धन्या जनाः ॥ ११८ ॥

अत्र शान्तरसस्य शृङ्गाररसोऽङ्गतया प्रतीयते।

वाच्यसिद्ध्यङ्गं यथा—

आभासि शीतलतमे हृदये मुनीनां
व्यालम्बिकोमलभुजोऽवनिजासमेतः।
रामातिशुभ्रयशसा सुरभीकृताशः
त्वं कल्पवृक्ष इव पूर्णदयाऽमृताढ्यः ॥ ११९ ॥

अत्र मुनिहृदयस्य आलवालसाम्यं व्यङ्ग्यं भुजसीतायशोदयानां शाखालतापुष्पमकरन्दसाम्यं व्यङ्ग्यम्। तत्सर्वं त्वं कल्पवृक्षइवेति वाच्याया उपमायास्सिद्धेरङ्गम्।

[1] (i) अपरस्य-रसादेः वाच्यस्य वा वाक्यार्थीभूतस्य अङ्गं रसादि अनुरणनरूपं वा— (काव्यप्रकाश ५ उल्लासः)

(ii) अपरस्याङ्गं यत्र रसादे रसादिरङ्गं तदपि गुणीभूतव्यङ्ग्यमेव ॥ (प्रतापरुद्रीये काव्यप्रकरणम्)

अस्फुटं यथा—

हेलाभिरक्षितमुनीश्वरसप्ततन्तु-
मारब्धमैथिलगृहोचितचापभङ्गम् ।
जेतारमात्तपरशोर्जमदग्निसूनो-
र्विज्ञाय राममनिशं भजताप्रमत्ताः ॥ १२० ॥

अत्र रामस्य ईश्वरादप्याधिक्यं व्यङ्ग्यं परम् अस्फुटं प्रतीयते ।

यथा वा—

यो भूतनाथभवनं रजताचलेन्द्र-
मुन्मूल्यदिग्विजयिनं रजनीचरेन्द्रम् ।
संहृत्य सङ्गरमुखे गिरिशप्रतिष्ठां
[1]चक्रे स्थिरं रघुपतिः किमु वर्णये तम् ॥ १२१ ॥

अत्र रामो भवनोत्पाटयितारं रावणं संहृत्य कीर्त्यर्थमेव शिवप्रतिष्ठां सेतुबन्धे कृतवान् न तु ब्रह्महत्यानिवृत्त्यर्थमिति व्यङ्ग्यमस्फुटम् ।

सन्दिग्धं यथा—

रामायणं नियतमादरतश्शृणोति
रामस्य नाम गिरिधारयति प्रयत्नात् ।
रामं सदैव मनुते हृदि पुंवरेण्यं
रामस्य संजपति सा धृतिमन्त्रराजम् ॥ १२२ ॥

---

[1] चक्रे—त

तुल्यप्राधान्यं यथा—

वायव्यास्त्रैरपास्य प्रबलबलरजो वारुणास्त्रेण सिञ्चन्
युद्धक्ष्मां पातितारिप्रकटमकुटभारङ्गवल्लीं वितन्वन् ।
पारम्पर्यैश्शराणां सुनिविडरुचिरैस्तोरणानि प्रबध्नन्
वीरश्रीपाणिबन्धोद्यममिव रचयन् पातु वो रामचापः ॥ १२३ ॥

अत्र राम एव वरः तस्य पत्नीवियोगनिमित्तेन द्वितीयविवाहं कुर्वन्निवेति व्यङ्ग्यम् । वाच्येन [1]सह प्राधान्यम् ।

यथा वा—

अभयं विभीषणाय प्रददौ रामो भयं दिशास्याय ।
उभयं निशाचराणां दशकण्ठविभीषणद्वयात्मनाम् ॥ १२४ ॥

अत्र रामश्शरणागतत्राणपरायणः विरोधिसंहारी चेति व्यङ्ग्यं वाच्येन [2]सह प्राधान्यम् ।

असुन्दरं यथा—

काकं शाकंभराजास्तनरुधिरकणासक्तपादं प्रयुक्तो
हन्तुं मन्तुं दधानं [3]स्फुटदुरुमहसा सायको नायकेन ।
विद्यां हृद्यां प्रदद्याद्घनतरतरसा धर्षितं येन भीतं
नालं व्यालम्बिशीर्षा हरिहरविधयो रक्षितुं वीक्षितुं वा ॥ १२५ ॥

---

[1] समं—त
[2] समं—त
[3] स्फुरदुरुमहसा—त

अत्र हरिहरब्रह्मादयोऽपि न रामेण समाना इति व्यङ्ग्यमसुन्दरम् ।

यथा वा —

सेत्वर्थमानीय गीरीन् कपीशाः
निपातयामासुरपांनिधौ ते ।
चिरप्रतिष्ठां विदधे त्रिकूटं
नोत्पाटयन्ति स्म विभीषणस्य ॥ १२६ ॥

[1]अत्र तु नारायणाद्भयेनेति व्यङ्ग्यमसुन्दरम् । यत्र काक्वा अर्थान्तरमाक्षिप्यते तदपि गुणीभूतव्यङ्ग्यमेव ।

यथा —

मा दुस्सहां तव लिलङ्घयिषोस्समुद्रं
पादाहतिं प्रबल वेत्तु [2]गिरिर्महेन्द्रः ।
नो वेद तां तु मुखसन्ततिसान्तवान्त-
रक्तोऽत्र [[3]......तद्द......] पवनाशनेन्द्रः ॥ १२७ ॥

अत्र हे प्रबल हनुमन् तव पादाहतिं महेन्द्रो गिरिर्मा वेत्तु, पवनाशनेन्द्रो नो वेद, वेदैवेति काक्वा व्यज्यते ।

यथा वा —

---

[1] अत्र न तु रावणात् भयेनेति—त

[2] हरिर्महेन्द्रः—त

[3] अत्र अपेक्षितो भागः त्रुटितः

यत्कक्षोदितधर्मवारिरसनिश्वासान्निजाध्वश्रमं
हित्वा स्वेदजजन्तुवत्त्वमवसस्तत्रत्यरोमोत्करे ।
एकेनैव तु नूर्व गर्वितममुं बाणेन यो वालिनम्
रामं वेत्सि न तं दशास्य हनूमान् तस्याभवं किङ्करः ॥ १२८ ॥

अत्र रामं न वेत्सि ? वेत्स्येवेति काक्वा ध्वन्यते।

[1]चित्रं तु काव्यं बहुविधं शब्दालङ्कारप्रकरणे प्रपञ्चयिष्यत इति नात्र तदादरः ।

## महाकाव्यप्रबन्धाः

अथ महाकाव्यादयः प्रबन्धा निरूप्यन्ते ।

तत्र—

---

[1] शब्दार्थचित्रं यत्पूर्वं काव्यद्वयमुदाहृतम् ।
गुणप्राधान्यतः तत्र स्थितिः शब्दार्थचित्रयोः ॥
(काव्यप्रकाशः-६-उल्लास ४८ का)

न तु शब्दचित्रे अर्थचित्रस्य अचित्रत्वम्,
अर्थचित्रे वा शब्दस्य ॥ तथा चोक्तम्
'रूपकादिलङ्कारः तस्यान्यैः बहुधोदितः ।
न कान्तमपि निर्भूषं विभाति वनिताऽऽननम् ॥
रूपकादिमलङ्कारं बाह्यमाचक्षतेऽपरे ।
सुपां तिङां च व्युत्पत्तिं वाचां वाञ्छन्त्यलङ्कृतिम् ।
तदेतदाहुः सौशब्द्यं नार्थव्युत्पत्तिरीदृशी ।
शब्दाभिधेयालङ्कारभेदात् इष्टं द्वयं तु नः ॥ इति काव्यप्रकाशः-६ उल्लासः ॥

[1]नगरार्क[2]शैलचन्द्रार्कोदयोद्यानजलक्रीडामधुपानरतोत्सवविप्रलम्भविवाहकुमारोदयमन्त्रदूतप्रयाणादिनायकाभ्युदयरूपाष्टादशवस्तुवर्णनात्मकत्वं महाकाव्यत्वमिति आलङ्कारिकसंप्रदायः। ननु नेदं महाकाव्यलक्षणं, मेघसन्देशादावव्याप्तेः। तत्र अष्टादशवर्णात्मकत्वाभावात्। न चेष्टापत्तिः तत्त्वेन व्यवहारात्। ननूक्तेषु कतिपयवर्णनात्मकत्वमपि तत्र प्रयोजकमिति चेन्नैवम्। कतिपयशब्दस्य चित्राद्यनेकार्थपरत्वेन इयद्वर्णनात्मकत्वं महाकाव्यमिति निर्णेतुमशक्यत्वेन इतरभेदसाधने सन्दिग्धसिद्ध्यापत्तेः।

ननूक्तेषु शक्यवर्णनात्मकत्वं तत्त्वमिति चेन्न। उपकाव्यस्यापि महाकाव्यत्वापत्तेः। एतेन एतेषु कैश्चिन्न्यूनमपि महाकाव्यमित्यपि निरस्तम्। उपकाव्येऽतिव्याप्त्यापत्तेः। किञ्च भागवतमहाभारतादौ पुराणेतिहासादावतिव्याप्तिर्दुर्वारा। तत्राप्युक्तेषु शक्यवर्णनात्मकत्वदर्शनात्। ननु उक्तेषु शक्यवस्तुवर्णनाप्रधानप्रबन्धत्वं महाकाव्यत्वमिति न तत्रातिव्याप्तिः। पुराणादेर्वंशमन्वन्तरादिकथनप्रधानत्वादिति चेन्न। तथापि रघुवंशादावव्याप्तिप्रसङ्गात्। तस्यापि वंशवर्णनप्रधानत्वात्। अन्यथा [3]तथा नामकरणाभावप्रसङ्गात्। अत एव महाकविकृतप्रबन्धो महाकाव्यमिति निरस्तम्।

---

[1] नगरार्णवशैलर्तुचन्द्रार्कोदयवर्णनम्।
उद्यानसलिलक्रीडामधुपानरतोत्सवाः॥
विप्रलम्भो विवाहश्च कुमारोदयवर्णनम्।
मन्त्रद्यूतप्रयाणानि नायकाभ्युदया अपि॥
एतानि यत्र वर्ण्यन्ते तन्महाकाव्यमुच्यते॥
(प्रतापरुद्रीये काव्यप्रकरणे महाकाव्यप्रबन्धप्रकरणम्)

[2] शैलर्तुचन्द्रा—त

[3] "अतो नेदं महाकाव्यलक्षणम्"—इत्ययं भागः तथा नामकरणाभावप्रसङ्गात् इत्यनन्तरम् अत एव—इत्येतत्पूर्वं—'त' प्रतौ परिदृश्यते॥

[1]तादृशकविकृतक्षुद्रप्रबन्धादावतिव्याप्तेः। क्षुद्रप्रबन्धनिर्माणदशायामपि कवीनां [2]महत्ता अनपायात्। ननु लौकिकानां महाकाव्यव्यवहारविषयत्वमेव तत्त्वमिति चेन्नैवम्। तादृशव्यवहारविषयतावच्छेदकसत्त्वे तस्यैव दुर्ज्ञेयत्वात्। अतो महाकाव्यलक्षणं [3]दुर्निवहणमिति चेदत्रोच्यते—

'नगराद्यष्टादशवस्तुसमुदायपतितकतिपयबहुवस्तुवर्णनाप्रधान-प्रबन्धत्वं महाकाव्यत्वमिति' काव्यलक्षणम्। न च पुराणेतिहासादौ [4]अतिव्याप्तिः। तेषां तद्वर्णनाप्राधान्येन अप्रवृत्तेः। न च रघुवंशादावव्याप्तिः। तस्यापि तत्प्राधान्येनैव प्रवृत्तेः। तथानामकरणं तु महापुरुषचरित्रनिबन्धरूपत्वेन असत्काव्यताव्यावृत्त्यर्थम्। मेघसन्देशादेरपि बहुवस्तुवर्णनाप्राधान्येन प्रवृत्तेर्नाव्याप्तिदोषः। न चोपकाव्येऽतिव्याप्तिशङ्कावकाशः। तस्य बहुवर्णनात्मकत्वासंभवात्। तत्सम्भवे वा तदपि महाकाव्यमेवेत्यलमतिचर्चया। तत्त्रिविधम्। गद्यमयं पद्यमयमुभयञ्चेति।

अपादपदसङ्घातो गद्यम्। चतुष्पदं पद्यम्। गद्यकाव्यं कादम्बर्यादि। पद्यकाव्यं रघुवंशास्मत्कृता[5]ष्टभाषारामायणादि।

---

[1] न तादृश—त

[2] महतानपायात्—त

[3] दुर्गुणमिति—त

[4] अतिव्याप्ते—त

[5] 'अष्टभाषारामायणं'—नामकं पद्यकाव्यम्। एतत् अनेन ग्रन्थकृता यज्ञेश्वरदीक्षितेन विरचितमस्ति।

[1]असर्गबन्धमपि काव्यमिष्यते । असर्गबन्धं [2]वंशस्थरामायणस्तोत्र-रत्नाकरादि । गद्यपद्यमयं चम्पूरित्यभिधीयते । चम्पूकाव्यमस्मत्कृत [3]चम्पूरत्नादि । गीतगोविन्दास्मत्कृत [4]सङ्गीतराघवादिकमपि चम्पूकाव्यभेद एव ।

## [5]अथाख्यायिका ।

आख्यायिका नाम [6]वक्त्रापरवक्त्रादियुक्ता सोच्छ्वासा, कथा तु तद्विरहितेति अभिनवगुप्ताचार्याः [7]प्राहुः । वक्त्रापरवक्त्रे वृत्तविशेषेण वृत्तरत्नाकरादौ द्रष्टव्यौ ।

---

[1] असर्गबन्धमपि यदुपकाव्यमुदीर्यते ॥
असर्गबन्धरूपं सूर्यशतकादि ।
(प्रतापरुद्रीये—काव्यप्रकरणम्)

[2] वंशस्थरामायणम् स्तोत्ररत्नाकरः—एतद्द्वयमपि अस्य ग्रन्थकृतः कृतिरत्नमेव ।

[3-4] चम्पूरत्नं नामकं चम्पूकाव्यं, सङ्गीतराघवं नाम चम्पूकाव्यं च अस्य ग्रन्थकारस्यैव कृतिरिति प्रतिभाति ।

[5] अथाख्यायिकाः—त

[6] वक्त्रं चापरवक्त्रं च सोच्छ्वासत्वं च भेदकम् ।
वर्ण्यते यत्र काव्यज्ञैरसावाख्यायिका मता ॥
(प्रतापरुद्रीये काव्यप्रकरणे महाकाव्यप्रकरणम्)

[7] तदुक्तमभिनवगुप्ताचार्यैः—
आख्यायिकोच्छ्वासादिना वक्त्रापरवक्त्रादिना युक्ता । कथा तु तद्विरहिता—(प्रतापरुद्रीयस्य रत्नापणव्याख्यायां काव्यप्रकरणे—आख्यायिकाभेदनिरुपणावसरे दर्शितेयं कारिका ।)

## अथ क्षुद्रप्रबन्धा निरूप्यन्ते

तत्र प्रथमं[1] निबन्धं जयतिरदमालिनीवृत्ताद्यष्टश्लोकसहितसतालसाद्यन्त-प्रासकलि कोत्कोलिकासम्पन्नं[2] ष्टविभक्तिकप्रबन्धत्वमुदाहरणत्वम् ।

---

वक्त्रं नाम अष्टाक्षरपादो मात्रावृत्तविशेषः ।

अपरवक्त्रमर्धसमवृत्तभेदः ।

उभयोर्लक्षणं तु वृत्तरत्नाकरे

वक्त्रं नाद्यान्नसौ स्यातामब्धेर्योऽनुष्टुभि ख्यातम् ।

अयुजिननरला गुरुः समे तदपरवक्त्रमिदं नजौ जरौ ॥

(प्रतापरुद्रीये रत्नापणव्याख्यायुते काव्यप्रकरणव्याख्याने वर्ततेऽयं भ ग.)

[1] निबद्ध—व

[2] येत केनापि तालेन गद्यपद्यसमन्वितम् ।
जयत्युपक्रमं मालिन्यादिप्रासविचित्रितम् ।
तदुदाहरणं ताम विभक्त्यष्टकसंयुतम् ॥
तत्रादौ जहत्युपक्रमं मालिन्यादिवृत्तरम्यं पद्यं निबध्यते ।
अनन्तरमपि च इत्युपक्रमाण्यष्टवाक्यानि सप्रासानि सतालानि प्रति-विभक्ति निबध्यन्ते । अनन्तरं विभक्त्याभासास्तदुदाहरणम् ।
संबोधनविभक्त्या यत् प्रचुरं पद्यपूर्वकम् ।
विभक्तपुनराकृष्टशब्दं स्याच्चक्रवालकम् ॥
आद्यन्तपद्यसंयुक्ता संस्कृतप्राकृतात्मिका ।
अष्टभिर्वा चतुर्भिर्वा वाक्यैः स्कन्धसमन्विता ॥
प्रतिस्कन्धं भिन्नवाक्यरीतिर्देवनृपोचिता ।
सर्वतो देवशब्दादिरेषा भोगावली मता ॥

न चानुत्कलिके [1]सार्यावृत्तोदाहरणेऽव्याप्तमिदं लक्षणमिति वाच्यम् ।

अत्रोत्कलिकाशब्दस्यार्योत्कलिका[2]न्यपरत्वात् । कलिकापि सर्व-विभक्तिष्वपि चोपक्रमात् द्रष्टव्या । विशेषान्तरं साहित्यचिन्तामणौ द्रष्टव्यम् । 'सम्बोधनविभक्तिप्रचुरत्वे सति आद्यन्ताशीर्वादघटितत्वे सति चतुर्धाष्टधा वा आवृत्तपद्यमुक्तपदादानमारभ्य गद्ययुक्तप्रबन्धत्वम् [3]चक्रवालत्वम् । आद्यन्तयो-र्नायकनामाङ्कितसाशीर्वादपद्यसम्पन्नत्वे सति चतुरष्टान्यतरभोगोपकरणवर्णनप्राय-[4]भिन्नरीतिकवाक्यस्कन्धघटितसंस्कृतप्राकृतात्मकप्रबन्धो [5]भोगावली ।

'नायकविरुदचिह्नवर्णनाप्रचुरत्वे सति वागाडम्बरसंयुक्तप्रबन्धो

---

वर्ण्यमानाङ्कविरुदवर्णनप्रचुरोज्वला ।
वाक्याडम्बरसंयुक्ता सा मता विरुदावली ॥
तारणां संख्यया पद्यैर्युक्ता तारावली मता ।
(प्रतापरुद्रीये काव्यप्रकरणे क्षुद्राः प्रबन्धाः)

[1] साध्यवृत्तोदाहरणे—त

[2] अन्यतरपररत्वात्—त

[3] सम्बोधनविभक्त्या यत् प्रचुरं पद्यपूर्वकम् ।
विभक्तपुनराकृष्टशब्दं स्माच्चक्रवालकम् ॥
(प्रतापरुद्रीये काव्यप्रकरणे क्षुद्रप्रबन्धभागे)

[4] भिन्नभिन्नरीतिक—त

[5] आद्यन्तपद्यसंयुक्ता संस्कृतप्राकृतात्मिका ।
अष्टभिर्वा चतुर्भिर्वा वाक्यैः स्कन्धसमन्विता ॥
प्रतिस्कन्धं भिन्नवाक्यरीतिर्देवनृपोचिता ।
सर्वतो देवशब्दादिरेषा भोगावली मता ॥
(प्रतापरुद्रीये—काव्यप्रकरणे क्षुद्रप्रबन्धनिरूपणावसरे)

[1]विरुदावली। '। सप्तविंशतिसंख्याकपद्ययुक्त[[2]त्वे सति धीरपदाङ्कितत्वे सति कोणे मुक्त] प्रबन्धस्त।[3]रावली।

साशीर्वादपद्यप्रारम्भत्वे सति गद्यानन्तरभाविदलचतुष्टयत्वे सति शा.स्त्र-सिद्धकविकल्पिततालान्यतरतालयुक्तत्वे सति [4]धीरपदाङ्कितत्वे सति कोणे [5]मुक्तपदादानरम्यप्रबन्धविशेषो विरुदगद्यम्। एवं [6]कल्पितक्षुद्रप्रबन्धान्तराणामपि लक्षणमूहनीयम्॥

एतेषु विरुदं गद्यमात्रस्योदाहरणं प्रदर्श्यते अस्माभि ग्रन्थविस्तरभीरुभिः॥

यथा—

श्रीमन्कोसलभूमिपालतनयागर्भाब्धिशुभ्रद्युते
निष्पन्दीकृतयोगिमानससरस्संसारहंसाकृते।
अङ्कारोपितमैथिलीकुचपरीरम्भप्रगल्भाद्दते
कारुण्यादभिराम राम तव मे सिद्ध्यन्तु चेतोरथाः ॥१२९॥

---

[1] वर्णैम.न.ङ्क विरुदवर्णनप्रचुरोज्वला।
वाक्याडम्बरसंयुक्ता सा मता विरुदावली॥
(प्रतापरुद्रीये काव्यप्रकरणे क्षुद्रप्रबन्धनिरूपणसन्दर्भे)

[2] मातृकायां कोणे मुक्त इति पर्यन्तं 'म' प्रतौ वर्जितचिह्नमस्ति 'त' प्रतौ नास्ति।

[3] ताराणां संख्यया पद्यैर्युक्ता तारावली मता।
(प्र. रु. का. प्र. क्षुद्रप्रबन्धनिरूपणावसरे)

[4] धीरपदाङ्कितकोणे—म

[5] मुक्तपदादौ नरस्य प्रबन्धविशेषो—त

[6] कविकल्पित—त

'जय जय सुरनरकिन्नरचारणप्रमुखमुखापणविततनिगम[1]समुन्मादयसुगमगुणगण घनघनसार[2]विसरणनिरन्तरसुरभितदिगन्तरसदननिषीदमरवरविरचित विरतिविरहित रतिसुखसुरयुवतिविनुत महानुभाव[3]वीर अणिमादिपरभूतिभरणप्रचण्ड [4]मणिकुण्डलद्वन्द्वलसमानगण्ड फणिभोगसमबाहुधृतचापदण्ड [5]रणितोग्रदरुकण्ठतलगण्डुगण्ड [6]वीर प्रबलप्रथनप्रवण[7]प्रचुरप्रकटप्रथमक्षितिभृद्विपत्प्रवर[8]क्षितिकृत्नलभूप्रथितप्रचयक्षयकृद्विशिखप्रकर धीर ॥

भेकतालम्

घनतरमरुद्रथजयमिलन्निजशरहतिविदलद्रणमुखरणत्खरमुखरवियच्चररिपुबलहृद्बहिरुपगतपुरीतद्ग्रथितपदपतद्वनचरदिविपन्नतिमुदित धीर अयमपि भेकतालभेदः।

असत्वरविद्युज्जित्वरखड्गप्रस्तुतयुद्धप्रक्रमशुम्भद्विक्रमगर्जद्दुर्जय रक्षःकर्त्तन सिद्धयद्वर्तन धीर ॥ इदमपि भेकतालान्तरम्।

वन्यशृङ्गाटकव्यारटत्तोटकत्रासकृत्ताटकानाटकोत्पाटकार्यापहृद्धाटकालिप्तपुङ्खाशुगाटोपसङ्घाटिकारब्धयागत्रसद्द्राधिसन्तानसन्तानसङ्काश-

---

[1] समुदयसुगम—त

[2] विसरणसिन्दुरसुरभित—त

[3] धीर—त

[4] मणिकुण्डलद्वन्द्वलसमानगण्ड—इति भागः 'त' प्रतौ न दृश्यते

[5] रमितो..........कण्ठ—म

[6] धीर—त

[7] प्रवणप्रचरप्रचलप्रकट—त

[8] क्षितिकृत्प्रभुक्वथितप्रचयक्षयकृत्—त

नाराचनिर्भिन्नभीनीचमारीचमाया[1]चशोदण्डदोर्दण्ड निर्भग्नपालाक्ष-कोदण्ड[2]धीर ।

धूतपाप पादचारपुण्यनीतदण्डकावन वीतरागलोकचित्तकलस-दीव्यदेहावन स्फीतयत्नसंविधीयमानसेवकानुधावन गौतमातिभीमशाप-दूररूपदारपावन धीर ॥

चण्डसङ्गरङ्गसङ्गतपङ्क्तिकन्दरगन्धकुञ्जरकुम्भमण्डलभङ्गसम्भ्रम सञ्चलन्म[3]णिमण्डलाक्षत[4]मण्डितायुध धीर ॥

भृङ्गताल :

[5]सत्यपरवक्तगतवृत्तचणवित्त[6]कृत्तिधरशक्तिवहवृत्ररिपु नित्यनुत-सुत्वकृतकृत्यफलद तकृतिसुत्वरितभक्तजनभक्तियुतमुक्तिकर धीर ॥

भृशखलसुररिपुहृदयोरुभल्लवि[7]शदमतिरुचिरसुगुणप्रफुल्लवशकृत कपिपटमहिताच्छभल्लदशमुखपुरञ्जयनिरशङ्कमल्ल धीर ॥

दम्भं वपुरिम्भं बम्भरडिम्भं परिभङ्गं लंभय शुम्भं परिरम्भं सन्मणिशुम्भं कुचकुम्भं जृम्भयवन्धं कृतसन्धं संहर धीर ॥

शङ्खताल :

भामाभामं मुक्त्वाभीमं प्राप्तं पादं दुष्प्रापं मे लिम्पन् विभवं कुर्वन् भूमौ विभ्रम धीर ॥

ओष्ठ्यम् ।

---

[1] चयोद्दण्ड—त
[2] 'धीर' इतिपदं 'म' प्रातौ नास्ति
[3] मङ्गलाक्षत—त
[4] मण्डलितायुध—म
[5] सत्यपरवक्त्रगत—त
[6] वित्तपतिकृत्तिधर—त
[7] विकटमतिरुचिर—त

जय दशरथतनय [1]घनरथिक निरतिशयरथचलित शरदलित निशिचरनिकर हितशरणचरणजलजनिखिलजगदवनहरणचरण हृदय-गतदयाकलित सकलकलरसजनतरण धीर ॥

लघुकृतभुवनातिभार रघुकुलकृतावतार साकेतपुरभूषण [2]साकेत-विशेषण विश्वामित्रगणशिक्षण विश्वामित्रमखरक्षण पादाक्षयुवति-शापदण्डन [3]फालाक्षकठिणचाप मैथिलीहृदयाभिराम शैथिलीनीत-परशुराम आदृतकैकेयीनियोग आचरितदण्डकायोग सुकलितभ रतानुनयन विकलितकाकैकनयन विरचितविराधभुजदलन चिरकृश-मुनिहृगानन्दकन्दलन कारितशूर्पणखाविकार वारितखरादि[4]-कदनप्रकार घोरकवन्धबन्धनिर्वर्त्तन सुरसुतस्नेहानुबन्ध-निर्वर्तन हनूमदावेदितदारकुशल तनूपदम्बुधिदत्तकौशल विमतानु-जाभयङ्कर समदाहितमनोभयङ्कर क्षणविहितसेतुबन्धन रणदह्यमान-राक्षसेन्धन निरुपमबाणपातितकुम्भकर्ण [5]उरबलमेघनादनिरसनलब्ध-वर्ण दशमुखपन्नगवैनतेय प्रशमितरिपुमुदितादितेय विभीकृतसीतानु-षङ्गरुचिर विभीषणराज्याभिषेकचतुर साधितकुबेरविमानयान शोभितजटाकृतमङ्गलस्नान निजपुररत्नसिंहासनारूढ भुजविजित-

---

1 घनरघुवीर—त
2 स.केतविपरितोषण—त
3 'फालाक्षकठिणचापविदलनमैथिलीहृदयाभिराम' इति पाठः कल्पितः।
4 कथनप्रकार—म
5 गुरुबल—त

दिगन्तरथाधिरूढ त्रिमतानुजवीजितचामर सौमित्रित्रिधृतधवलातपत्र सौमित्रिकरदत्त[1]ताम्बूलपत्र स्वर्णकिरीटशोभितमणिमण्डल कर्ण-लम्बितमकरकुण्डल अङ्गदशोभमानबाहाङ्कण सङ्गतलसमानमणिकङ्कण-माणिक्यखचितरुचिराङ्गुलीयक घृणिजालनिचितकौस्तुभरामणीयक हारमण्डितवक्षःकवाट सारमणिमेखलानन्दकटितट विलसितपीताम्ब-रावरण कलरवनूपुराभरण कुवलयदलकोमलाकार रवप्रमुखवानरेन्द्र-परिवार [2]वाराधिधीरधीराजित जितसकलाहितलक्षणधुरन्धर धरात्म-जामनोभिराम रामचन्द्र चन्द्रोपमाकीर्तिजात जातवेदस्फुरत्प्रताप तापहरदयामयेक्षण विजयीभव विजयीभव [3]विजयीभव ।

पण्डितपामरभक्तश्रोत्रयुगानन्दसन्दायि ।
यज्ञेन यज्वकविना विरचितमितिरामविरुदगद्यमिदम् ॥

इति श्रीचक्कूरिकोण्डुभट्टोपाध्यायतनयेन यज्ञेश्वरदीक्षितेन
तिरुमलयज्वप्रियसोदरेण विरचिचे अलङ्काररराघवे

**काव्यप्रकरणं सम्पूर्णम्**

श्रीरामचन्द्रपरब्रह्मणे नमः

---

[1] दत्त....जलपत्र—म

[2] वाराधिधीर—त

[3] 'विजयीभव' इति पदं 'म' प्रतौ नास्ति

# अथ नाट्यप्रकरणम्

अथ नाट्यप्रधानः प्रबन्धा निरूप्यन्ते। तत्रादौ नाट्यस्वरूपं निरूप्यते। ननु तत्र [1]'नाट्यं दशविधं 'नाट्यार्थाभिनयात्मकमिति' शिङ्गभूपालः। 'अवस्थानुकृतिर्नाट्यमिति' साहित्यचिन्तामणिकारः।

'चतुर्विधैरभिनयैस्सात्त्विकाङ्गिकपूर्वकैः।
धीरोदात्ताद्यवस्थानुकृतिर्नाट्यं रसाश्रयम्॥

इति विद्यानाथः।

तत्र न तावदाद्यं लक्षणं युक्तम्। नाट्यज्ञाने नाट्यज्ञानमित्यात्माश्रयप्रसङ्गात्। ननु दशविधनाट्यशब्देन दशविधनाट्यप्रकरणादिरूपकाण्युच्यन्त इति नात्माश्रयदोष इति चेन्नैवम्। रूपकस्यापि नाट्यगर्भत्वात् तद्दोषतादवस्थ्यात्। तदुक्तं रसार्णवसुधाकरे।

[2]तदीदृशरसाधारं नाट्यं रूपकमुच्यत इति। द्वितीयलक्षणमपि न युक्तम्। परिहासकृतलौकिकमनुष्यावस्थानुकरणेऽतिव्याप्तेः। न च नायकावस्थानुकरणं विवक्षितमिति वाच्यम्। प्रागुक्तदूषणानतिवृत्तेः।

---

[1] (i) तत्र नाट्यं दशविधं वाक्यार्थाभिनयात्मकम्
(रसार्णवसुधाकरः—३ विलासः-३)

(ii) सात्त्विकाद्यैरभिनयैः प्रेक्षकाणां यतो भवेत्।
नटे नायकतादात्म्यबुद्धिस्तन्नाट्यमुच्यते॥
(रसार्णवसुधाकरः—प्रथमो विलासः-५७)

(iii) नटकर्मैव नाट्यं स्यादिति नाट्यविदां मतम्॥
(भावप्रकाशः—द्वितीयोऽधिकारः—१५)

[2] (i) रसार्णवसुधाकरः—३ विलासः—१

(ii) तदीदृशरसाधारणं नाट्यं—त

तृतीयलक्षणस्यायमर्थः। परगतसुखदुःखभावनया भावितान्तःकरणत्वं सत्त्वम्। तद्भावास्सात्विकाः स्तम्भादयः। अङ्गं हस्तादि। तद्भावा आङ्गिकाः। पूर्वशब्देन वाचिकाहार्याभिनयौ गृह्येते। तत्र पाठ्यापरपर्यायं काव्यनाटकादिरूपं वाचिकम्। नाट्योचितालङ्कारधारणमाहार्यशब्दार्थः। तथा च सात्विकाङ्गिकौ पूर्वौ येषां ते तथोक्ताः चत्वारोऽभिनयाः। अनिमिषनयनत्वादिः सात्विकाभिनयः। पताकाभ्रमरादिः आङ्गिकाभिनयः। गीतरागानुषङ्गादिः वाचिकाभिनयः। अलङ्कारधारणमाहार्याभिनय इति। तर्हि धीरोदात्ताद्यवस्थानुकरणं रसाश्रयं वाक्यार्थीभूतरसविषयं नाट्यमिति न तावदिदं नाट्यसामान्यलक्षणम्। फणिमधुरनाट्यादावव्याप्तेः। न च तन्न नाट्यमेवेति वाच्यम्। [1]फणी नटति मयूरो नटतीति व्यवहारे विरोधापत्तेः। न चायं भाक्तः मुख्यबाधकाभावात् ततो यत्प्राधान्येन नाटकादयः प्रबन्धाः प्रवर्तन्ते तस्य नाट्यस्य इदं लक्षणमिति वाच्यम्। तन्न युक्तम्। नायकानुवर्तिजनावस्थानुकृतिरूपनाट्ये अव्याप्तेः। तस्य धीरोदात्तादिनायकावस्थानुकृतिरूपत्वाभावात्। ननु धीरोदात्तादिपदं तदनुवर्तिजलस्याप्युपलक्षणमिति चेन्न। परिहासनकृते लौकिकमनुष्याकरणे चतुर्विधाभिनयजन्येऽतिव्याप्तेः। न च तदपि नाट्यमेवेति नोक्तदोष इति वाच्यम्। तत्र पण्डितपामराणां नाट्यादिव्यवहाराभावात्। प्रत्युत विपरीतव्यवहारस्यैव दर्शनात्। ननु रसाश्रयमित्यनेन तद्व्यावृत्तिरिति चेन्न। तस्यापि [2]हास्यरसाश्रयत्वेन तदनतिवृत्तेः। किञ्चावस्थानशब्देन जागरादिमहावस्थाः विवक्ष्यन्ते किं वावान्तरावस्थाः। नाद्यः। [3]जागरादिमहावस्थानुकरणस्य तच्चमत्कारकारित्वम्-

---

[1] फणी नटति मयूरो इत्यारभ्य इदं लक्षणमिति वाच्यम्—इति पर्यन्तो भागः 'म' प्रतौ न दृश्यते।

[2] हासरसाश्रयत्वेन—त

[3] 'जागरादि'—इत्यारभ्य नाद्यः—इति पर्यन्तं 'म' प्रतौ नास्ति।

द्वितीयेऽपि किं यावदवान्तरावस्थानुकरणं विवक्षितं किं वा कतिपयावान्त-रावस्थानुकरणम्। नाद्यः। असम्भवापत्तेः। यावदवान्तरावस्थानुकरणस्य कस्याप्यशक्यत्वात्। द्वितीयेऽपि सुरताद्यवान्तरावस्थानुकरणस्य अनुचितत्वादसम्भवः। ननु लोकविरुद्धकतिपयावान्तरावस्थानुकरणं नाट्यमिति चेन्मैवम्। तथापि ता एता इति दुर्निश्चयत्वेन तदनुकरणस्य अशक्यत्वादसम्भवापत्तेः। ननु नाटकादिप्रबन्धनिरूपिता रामादिनायक[1]लीलापर्यायावान्तरावस्थास्सुनिश्चया एवेति नासम्भव इति चेत्तर्हि सिद्धे नाटकादिप्रबन्धे तन्निरूपितावस्थानुकरणरूप-[2]नाट्यसिद्धिः। सिद्धे च नाट्ये तत्प्राधान्येन प्रवृत्तनाटकादिसिद्धिरित्यन्योन्याश्रयप्रसङ्गः। किञ्च नृत्ये अतिव्याप्तिः। तस्यापि तादृशावस्थानुकरणरूपत्वात्। नहि तस्य [3]भावाभिप्रायाङ्गिकाभिनयप्राचुर्यमात्रे तादृशावान्तरावस्थानुकृतिरूपत्वमेवेति। अतो [4]नेदं नाटकलक्षणं युक्तमिति चेत् अत्रोच्यते—

**सात्विकबाहुल्ये सति चतुर्विधाभिनयैर्नायकादितादात्म्यापत्तिर्नाट्यमिति नाट्यसामान्यलक्षणम्।** न चेदं [5]परिहासकृतस्पन्दविशेषे अतिव्याप्तम्। तस्य लौकिकमनुष्यचेष्टाभिनयमात्रत्वेन तादात्म्यापत्तिरूपत्वाभावात्। न च नृत्येऽतिव्याप्तिशङ्कावकाशः। तस्य सात्विकबाहुल्यरूपत्वाभावात्। आदिशब्देन नायकानुवर्त्तिजनावस्थानुकृतिरूपनाट्येऽव्याप्तिर्निरस्ता। अत एव न नायिकावस्थानुकृतिरूपनाट्येऽप्यव्याप्तिरिति ध्येयम्।

---

[1] लीलापरपर्याया-त

[2] नाट्यसिद्धिः—त

[3] भावापरपर्यायाङ्गिकाभिनयप्राचुर्यमात्रे—त

[4] नेदमपि नाटकलक्षणं—त

[5] परिहासकर्तृकस्पन्दविशेषे—त

[1]न च मधुरादिनाट्ये ऽव्याप्तिः। तस्य नाट्यत्वात्। अन्यथा स नृत्यतीति व्यवहाराभावापत्तेः। अतो निरवद्यं नाट्यलक्षणम्।

नृत्यनृत्तयोरपि नाटकादेरङ्गत्वात् लक्षणमुच्यते। आङ्गिकप्रचुरो [2]भावविशेषः स्पन्दविशेषो [3]नृत्यम्।ताललयाश्रयस्पन्दविशेषो [4]नृत्तम् देश्यापरपर्यायम्। गीतादेर्मित्याधायकः कालविशेषस्तालः। लयेऽपि तद्विशेष एवेति नात्र तद्विस्तरः। तदुभयमपि द्विविधम्। लास्यं ताण्डवञ्चेति। मधुरं नृत्यं नृत्तं च लास्यम्। उद्धत तदुभयं ताण्डवम्। नन्वेव तर्हि [5]ताण्डवं नटनं नाट्यं लास्यं नृत्तं च नर्त्तनमिति कोशकारवचनात् नाट्यादीनाम् अभेदप्रतिपत्तिः कथमिति चेन्नैवम्। अवान्तरभेदानालोचनयैव कोशकारवचनं प्रवृत्तमिति न कोऽपि दोषः। तेन नाट्येन दशरूपकाणि भवन्ति। नाटकप्रकरणभाणप्रहसनव्यायोगडिमसमवकारवीथ्यङ्केहामृग इति। [6]नाटिकासट्टिकादीनां यथासम्भवमत्रैवान्तर्भाव इति न संख्याविरोधशङ्कावकाशः।

## १. अथ नाटकम्

अत्र साङ्गपञ्चसन्धिसम्पन्नत्वे सति प्रख्यातेतिवृत्तप्रबन्धो धीरोदात्तनायकयुक्तो नाट्यप्रधानप्रबन्धो वीरशृङ्गारयोरन्यतरप्रधानत्वे

---

[1] नहि मयूरादिनाट्ये— त

[2] भावविषयः—त

[3] (i) अन्यद्भावाश्रयं नृत्यं—दशरूपकं-१ प्र. ८ श्लो)
(ii) भावाश्रयं तु नृत्यं स्यात्—प्रतापरुद्रीयम् (ना. प्र.)

[4] नृत्तं ताललयान्वितम् (प्र. रु ना. प्र)

[5] अमरकोशः—नाट्यवर्गः

[6] नाटिकासट्टिकादीनां—म

सति पञ्चसन्धिसम्पन्नः प्रबन्धः उत्तरकथासूचकनान्दीसम्पन्नरूपक-विशेषो वा [1]नाटकमिति नाटकलक्षणम् । नाटके साङ्गाः पञ्चसन्धयः । प्रख्यातमिति वृत्तम् । वीरश्रृङ्गारयोरन्यतरस्य प्राधान्यम् । अन्य रसानामङ्गत्वेन अनुप्रवेशः ।

## २. प्रकरणम्

साङ्गपञ्चसन्धिसम्पन्नत्वे सत्युत्पाद्येतिवृत्तः प्रबन्धो धीरशान्त-नायकयुक्तः प्रबन्धो केवलश्रृङ्गाररसप्राधान्येन प्रवृत्तो नाट्यप्रधान-प्रबन्धो वा [2]प्रकरणमिति प्रकरणलक्षणम् । प्रकरणे उत्पाद्यमिति वृत्तम् । धीरशान्तो नायकः । श्रृंगाररस एव प्रधानः । साङ्गाः पञ्चसन्धयः ।

## ३. अथ भाणः

उत्पाद्येति वृत्तत्वे सति धूर्तविटचारित्रवर्णनात्मको नाट्यप्रधानः प्रबन्धः, सन्धिद्वयसम्पन्नत्वे सत्येकाङ्को भारतीवृत्तिभूयिष्ठो नाट्यप्रधान-

---

[1] साङ्गः मुखप्रतिमुखगर्भमर्शोपसंहृतैः ।
पूर्वं प्रकृतिरन्येषामाधिकारिकवृत्तवत् ॥

वीरश्रृङ्गारयोरेकः प्रधानं यत्र वर्ण्यते ।
प्रख्यातनायकोपेतं नाटकं तदुदाहृतम् ॥

(प्रतापरुद्रीये नाटकप्रकरणे—३२-३३)

[2] उत्पाद्येनेतिवृत्तेन धीरशान्तप्रधानकम् ।
शेषं नाटकतुल्याङ्गं भवेत् प्रकरणं हि तत् ।

(प्रतापरुद्रीये नाटकप्रकरणे—३५)

प्रबन्धो वा [1]भाण इति भाणलक्षणम् । भाणे धूर्तविटो नायकः । उत्पाद्य-मितिवृत्तम् । वीरशृङ्गारयोस्सूचनामात्र[2]सारता भारतीवृत्तभूयिष्ठः एक एवाङ्कः। मुखनिर्वहणसन्धी द्वावेव ।

## ४. अथ प्रहसनम्

हास्यरसप्रधानत्वे सति नाट्यप्रधानः प्रबन्धः पाषण्डतापसप्रभृतिचारित्र-वर्णनात्मको [3]नाट्यप्रधानः प्रबन्धो वा [4]प्रहसनमिति प्रहसनलक्षणम् ।

---

[1] भारतीवृत्तिभूयिष्ठं शौर्यसौभाग्यसंस्तवैः ।
सूच्येते वीरशृङ्गारौ विटेन निपुणोक्तिना ॥
कल्पितेनेतिवृत्तेन धूर्तचारित्रवर्णनम् ।
एकोऽङ्को मुखनिर्वाहौ यत्र भाणः स संमतः ॥
(प्रतापरुद्रीये नाटकप्रकरणे-३६-३७)

[2] सारता इति पदं 'त' पुस्तके नास्ति ।

[3] काव्यप्रधानः—त

[4] यत्र सन्ध्यङ्गवृत्त्यङ्गवर्णनं भाणवन्मतम् ।
हास्यो रसः प्रधानं स्याद्भवेत् प्रहसनं हितम् ॥ तत् त्रिविधम् । शुद्धं वैकृतं सङ्कीर्णं चेति ।

तत्र शुद्धम्
पाषण्डविप्रभृति चेटीचेटसमाकुलम् ।
वेषभाषादिसहितं शुद्धं हास्यवचोऽन्वितम् ॥

अथ वैकृतं-
कामुकादिवचोवेषैः षण्डकञ्चुकितापसैः ।
प्रहासाभिनयप्रायं वैकृतं तत् प्रकीर्त्यते ॥

अथ सङ्कीर्णं-
यद्वीथ्यङ्गैः समाकीर्णैः सङ्कीर्णं धूर्तसङ्कुलम् ॥
(प्रतापरुद्रीये नाटकलक्षणं ३९-४१)

प्रहसनं त्रिविधम्। शुद्धं वैकृतं सङ्कीर्णञ्चेति। तत्र पाषण्डविप्रविटचेटादि-सङ्कुलं हास्यवचःप्रचुरं शुद्धम्। कामुकवचोवेषषण्डकञ्चुकितापससङ्कुलं हासप्रायं विकृतम्। वीथ्यङ्गैस्सङ्कीर्णं सङ्कीर्णम्। त्रिविधेऽपि प्रहसने कल्पितमितिवृत्तम्। पाषण्डतापसादयो नायकाः। हास्यरसः प्रधानम्। मुखसन्धिनिर्वहणसन्धिद्वयम्। एकोऽङ्कः। भारतीवृत्तिभूयिष्ठता।

## ५. अथ डिमः

अत्यन्तोद्धतषोडशनायकसम्पन्नो नाट्यप्रधानप्रबन्धो रौद्ररसप्रधानो नाट्यप्रधानप्रबन्धो वा डिम इति डिमलक्षणम्। डिमे इतिवृत्तं प्रख्यातम्। कैशिकीव्यतिरिक्तवृत्तयः। देवगन्धर्वयक्षराक्षसादयो नायकाः। रौद्ररसः प्रधानः। हास्यशृङ्गारयोरनुप्रवेशः। चत्वारोऽङ्काः। चत्वारो विमर्शसन्धिव्यतिरिक्तसन्धयः। महेन्द्रजालसङ्ग्राम[2]सूर्यचन्द्रग्रहणादयो वर्णनीयाः।

## ६. अथ व्यायोगः

गर्भविमर्शव्यतिरिक्तसन्धिसम्पन्नः एकवासरमात्रचारित्रवर्णनात्मकः

---

[1] यत्र वृत्तं प्रसिद्धं स्यात् वृत्तयः कौशिकीं विना।
नेतारो देवगन्धर्वयक्षरक्षोमहोरगाः॥
भूतप्रेतपिशाचाद्याः षोडशात्यन्तमुद्धताः।
हास्यशृङ्गाररहिता रसा रौद्रप्रधानकाः॥
चत्वारोऽङ्का सन्धयश्च चत्वारो मर्शवर्जिताः।
मायेन्द्रजालसंग्रामसूर्यचन्द्रग्रहादयः।
शेषं नाटकवत्सर्वं स डिमः परिकीर्त्यते॥
(प्रतापरुद्रीये नाटकप्रकरणे ४२-४४)

[2] ससूर्य—त

प्रबन्धविशेषो व्यायोग इति [1]व्यायोगलक्षणम्। व्यायोगे इतिवृत्तं प्रख्यातम्। उद्धतो नायकः। गर्भविमर्शसन्धिव्यतिरिक्तसन्धयः प्रयोक्तव्याः। हास्यशृङ्गारव्यतिरिक्तरसाः। एकवासरचरित्रम्। एकोऽङ्कः

## ७. अथ समवकारः

विमर्शव्यतिरिक्तसन्धिसम्पन्नत्वे सत्यङ्कत्रयान्वितः प्रबन्धः पृथक्फलोद्देशप्रवृत्तद्वादशनायकघटितः प्रबन्धो वा [2]समवकार इति समवकारलक्षणम्। समवकारे देवासुरादयो द्वादश नायकाः। विमर्शव्यतिरिक्तसन्धयः प्रयोज्याः। वीररसप्रधानः। नगरावरोधसङ्ग्रामवह्न्यादिनिमित्तविद्रवा वर्ण्याः। धर्मार्थकामानुगुण्येन शृङ्गाररीतयस्तिस्रः। त्रयोऽङ्काः।

---

[1] यत्र ख्यातेतिवृत्तं स्यादुद्धतो नायको मतः।
गर्भविमर्शराहित्यं डिमवद्रसपोषणम्।

एकवासरकार्यं च स व्यायोगो महारणः।

(प्रतापरुद्रीये नाटकप्रकरणे—४४-४५)

[2] यत्र मुखं नाटकवत् सन्धयो मर्शवर्जिताः
नेतारो द्वादश पृथक्फला देवासुरादयः॥

वीरप्रधानाश्च रसास्त्रयोऽङ्कास्तेषु च क्रमात्।
वस्तुस्वभावदैवादिकृताः स्युः कपटास्त्रयः।

पुररोधरणाग्न्यादिनिमित्ता विद्रवास्त्रयः।
धर्मार्थकामानुगुणास्तिस्रः शृङ्गाररीतयः॥

प्रथमेऽङ्के निबद्धव्या कथायामत्रयावधिः।
यामावधिर्द्वितीयेऽङ्के तृतीयेऽङ्केऽर्धयामिका॥

असौ समवकारः स्याद्वीथ्यङ्गैः कैश्चिदन्वितः।

(प्रतापरुद्रीये नाटकप्रकरणे—४६-४९)

प्रथमाङ्के यायत्रयावधिकथा [1]निबद्धव्या। यामावधिकथा द्वितीयेऽङ्के। अर्धयामावधिकथा तृतीयाङ्के। केषाञ्चित् वीथ्यङ्गानां प्रयोगः।

## ८. अथ वीथी

उद्धात्यकाद्यङ्गसहितत्वे सति भाणसदृशः प्रबन्धो [2]वीथिः। वीथौ कैशिकीवृत्तिः। शृङ्गाररसस्सूचनीयः। उद्धात्यकादीन्यङ्गान्यपि प्रयोक्तव्यानि। एकोऽङ्कः। धूर्तविटो नायकः। मुखनिर्वहणसन्धिद्वयम्। करुणारसयुक्तो नाट्यप्रधानः प्रबन्धः।

## ९. अथ अङ्कः

[3]स्त्रीविलापवाग्युद्धबहुलप्रबन्धो वा [4]अङ्क इत्यङ्कलक्षणम्। अङ्के इतिवृत्तं प्रख्यातम्। करुणारसः प्रधानः। प्राकृतनरा नायकाः। स्त्रीवि[5]लापवाग्युद्धं

---

[1] बद्धव्या—म

[2] यत्र भाणवदङ्गानां क्लृप्तिर्वृत्तिस्तु कैशिकी।
शृङ्गारः परिपूर्णत्वात् सूचनीयोऽतिभूयसा॥
उद्धात्यकादीन्यङ्गानि सा वीथी वीथिवन्मता॥
(प्रतापरुद्रीये—नाटकप्रकरणे-४९ ५०)

[3] स्त्रीविलासवाग्युद्ध—त

[4] यत्रेतिवृत्तं प्रख्यातं प्रधानं करुणो रसः।
स्त्रीणां विलासो वाग्युद्धं नेतारः प्राकृता नराः॥
भाणवत् सन्धिवृत्त्यादि स उत्सृष्टोऽङ्कसंज्ञितः॥
(प्रतापरुद्रीये नाटकप्रकरणे-५०-५१)

[5] विलासवाग्युद्धम्—त

वर्ण्यम् । मुखनिर्वहणसन्धिद्वयम् । भारतीवृत्तिभूयिष्ठता ।

## १०· अथ ईहामृगः

मर्त्यदिव्यनायकसम्पन्नत्वे सति नाट्यप्रधानप्रबन्ध [1]ईहामृग इति ईहामृगलक्षणम् । ईहामृगे मिश्रमितिवृत्तम् । चत्वारोऽङ्काः । सन्धित्रयम् । दिव्यां स्त्रियं [2]हर्तुकामौ मर्त्यदिव्यपुरुषौ नायकौ । वधापर्यवसायि युद्धम् । आभासो रसः ।

## इतिवृत्तम

अथ सर्वरूपकोपयोगि इतिवृत्तं निरूप्यते । तत्र इतिवृत्तं नाम प्रबन्धशरीरं वस्तुकथापरपर्यायम् । तद्द्विविधम् । आधिकारिकं प्रासङ्गिकञ्चेति । तत्र अधिकारः फलं तद्वान् अधिकारी । अधिकारेण अधिकारिणा वा निवृत्तमाधिकारिकम् । प्रधानमित्यर्थः । यथा रामायणे सीतारामयोः चरित्रम् । प्रसङ्गेन निवृत्तं प्रासङ्गिकम् । अङ्गभूतमित्यर्थः । तद्द्विविधम् । पताका प्रकरिका चेति । तत्र दूरानुवर्तिनी कथा पताका । यथा सुग्रीवचरितम् । अव्यापिनी कथा प्रकरिका । यथा जटायुसम्पात्यादिवृत्तान्तः[3] । तत्पुनः

---

[1] मिश्रमीहामृगे वृत्तं चतुरङ्कं त्रिसन्धिकम् ।
मर्त्यदिव्यौ च नियमान्नायकप्रतिनायकौ ।
धीरोद्धतौ स्त्रियं दिव्यां हर्तुकामौ च कामुकौ ।
अवधं युद्धमन्योन्यमाभासरसयोस्तयोः ॥
(प्रतापरुद्रीये नाटकप्रकरणे-५२-५३)

[2] हर्तुकामौ अधिकोद्धतौ मर्त्यदिव्यपुरुषौ—त

त्रिविधम्। प्रख्यातमुत्पाद्यं मिश्रञ्चेति। तत्र इतिहासादिनिबन्धनं प्रख्यातम्। कविकल्पितमुत्पाद्यम्। सङ्कीर्णं मिश्रम्। एवमाधिकारिकपताकाप्रकरिकाणां प्रत्येकं प्रख्यातत्वादिरूपेण त्रैविध्येन नवविधं वस्तु ज्ञेयम्।

अथ सन्धयो निरूप्यन्ते।

सन्धिर्नाम–एकेन प्रयोजनेन अन्वितानां कथानाम् अवान्तरप्रयोजनेन सम्बन्धः।

सः पञ्चविधः। मुखप्रतिमुखगर्भविमर्शनिर्वहणभेदात्।

(१) अथ मुखसन्धिः

तत्र बीजसमुत्पत्तिः मुखसन्धिः।

स्तोकोद्दिष्टः कार्यहेतुरनेकधा विस्तारि बीजम्। मुखसन्धेरारम्भानुगुण्येन द्वादशाङ्गानि प्रयोक्तव्यानि।

'आरम्भो'नाम भूयसे फललाभाय औत्सुक्यमात्रम्।

द्वादशाङ्गानि उपक्षेपपरिकरपरिन्यास विलोभनयुक्तिप्राप्तिसमाधानविधानपरिभावनोद्भेदकरणानि।

बीजन्यास उपक्षेपः। बीजस्य बहूकरणं परिकरः। बीजनिष्पत्तिः परिन्यासः। बीजगुणवर्णनं विलोभनम्। बीजानुकूलसङ्घट्टनप्रयोजनविचारो युक्तिः। बीजसुखागमः प्राप्तिः। बीजसन्निधानं समाधानम्। बीजसुखदुःखहेतुर्विधानम्। बीजविषयाश्चर्यावेशः परिभावनम्। गूढबीजप्रकाशनमुद्भेदः। बीजानुगुणप्रोत्साहनं भेदः। बीजानुगुणप्रस्तुतकार्यारम्भः करणम्। तत्र उपक्षेपपरिकरपरिन्यासयुक्त्युद्भेदसमाधानान्यावश्यकानि।

## (२) अथ प्रतिमुखसन्धिः

लक्ष्यालक्ष्यबीजाभिव्यक्तिः प्रतिमुखम्। तस्य [1]बिन्दुप्रयत्नानुगुण्येन त्रयोदशाङ्गानि प्रयोक्तव्यानि।

अवान्तरार्थविच्छेदे सति अच्छेदकारणं बिन्दुः।

फलप्राप्तावतित्वरया व्यापारः प्रयत्नः। त्रयोदशाङ्गानि-विलासपरिसर्प [2]विमानशर्मनर्मद्युतिप्रगमनविरोधपर्युपासनवज्रपुष्पोपन्यासवर्णसंहाराः। तत्र सम्भोगविषयो मनोरथो विलासः। दृष्टनष्टबीजानुसरणं परिसर्पः। अनिष्टवस्तुविक्षेपो [3]विमतम्। अरत्युपशमनं शमः। परिहासवचनं नर्म। अनुरागोद्घाटनोत्थाप्रीतिः नर्मद्युतिः। [4]उत्तरोत्तरवाक्यैरनुरागप्रकाशनं प्रगमः। छद्मनाहितागमननिरोधनं विरोधः। इष्टजनानुनयः पर्युपासनम्। निष्ठुरवचनं वज्रम्। अनुरागप्रकाशकशिष्टवचनं पुष्पम्। अनुरागहेतुवाक्यरचनोपन्यासः। चतुर्वर्णनिर्वर्णनं वर्णसंहारः। [5]अत्र परिसर्पप्रगमवज्रोपन्यासपुष्पाणां प्राधान्यम्।

---

[1] बीजप्रयत्नानुगुण्येन—त

[2] विधूतम्—(ल)

[3] विधूतम्—(प्र. रु.)

[4] उत्तरोत्तरवाक्यैरनुरागबीजप्रकाशनं प्रगमनम्। (प्र. रु. ना. प्र)

[5] तत्र—त

## (३) अथ गर्भसन्धिः

दृष्टनष्टबीजान्वेषणं गर्भसन्धिः। तस्य पताकाप्राप्त्याशानुगुण्येन द्वादशाङ्गानि प्रयोक्तव्यानि। *पताकास्वरूपं प्रागेव निरूपितम्। 'उपायापायशङ्कया कार्यसम्भवः प्राप्त्याशा'। द्वादशाङ्गानि-अभूताहरणमार्गरूपोदाहरणक्रमसङ्ग्रहोऽनुमानतोटकाधिवलोद्वेगसंभ्रमाक्षेपाः। [1]अत्र प्रकृतोपयोगिच्छद्माचरणम् अभूताहरणम्। तच्चानुकीर्तनं मार्गः। वितर्कप्रतिपादकवाक्यं रूपम्। प्रस्तुतोत्कर्षाभिधानमुदाहृतिः। सञ्चितार्थप्राप्तिः क्रमः। प्रस्तुतोपयोगिसामदानवाक्यं संग्रहः। [2]लिङ्गादग्रहणमनुमानम्। रोषसंभ्रमवचनं तोटकम्। इष्टजनातिसन्धानमधिवलम्। [3]अपकारिजनोदयभयमुद्वेगः। शङ्कात्रासौ सम्भ्रमः। इष्टार्थोपायानुसरणमाक्षेपः। तत्र अभूताहरणमार्गतोटकाधिवलाक्षेपाणां प्राधान्यम्।

## (४) अथ विमर्शसन्धिः

आवश्यकता येनकेनचिद्धेतुना गर्भसन्धौ।

प्रसिद्धबीजावमर्शनं विमर्शसन्धिः।

तस्य प्रकरीनियताप्त्योरानुगुण्येन त्रयोदशाङ्गानि प्रयोक्तव्यानि।

---

* प्रतिपाद्य कथाङ्ग स्यात् पताकाख्यापनी कथा (प्र. रु. ना. प्र)

[1] तत्र—त

[1] लिङ्गादभ्यूहनमनुमानम्—त

[2] अपकारिजनाद्भयमुद्वेगः—त

*प्रकरीस्वरूपं प्रागेव निरूपितम्। अपायाभावात् कार्यनिश्चयो नियताप्तिः। त्रयोदशान्यङ्गानि। अपवादविद्रवसंफेटद्रवशक्तिद्युति-प्रसङ्गच्छलनव्यवसायविरोधनप्ररोचन[1]चलनादानानि। तत्र दोष-प्रख्यापनमपवादः। रोषसम्भाषणं सम्फेटः। वधबन्धादिकं विद्रवः। गुरुतिरस्कृतिः द्रवः। विरोधशमनं युक्तिः। तर्जनोद्वेजने द्युतिः। गुरुकीर्त्तनं प्रसङ्गः। [2]अवमाननं छलनम्। स्वशक्तिप्रशंसनं व्यवसायः। क्रोधसंरब्धानामन्योन्यविक्षेपो विरोधनम्। [3]सिद्धभाविश्रयःकथनं प्ररोचनम्। स्वगुणाविष्करणं विचलनम्। [4]काव्यसङ्ग्रह आदानम्।

## (५) अथ निर्वहणसन्धिः

'विप्रकीर्णमुखाद्यर्था यत्र ऐकार्थ्यमुपनीयन्ते तन्निर्वहणम्'। तस्य कार्यफलाग्योरानुगुण्येन चतुर्दशाङ्गानि प्रयोक्तव्यानि। कार्यं नाम फलनिर्वाहकरम्। समग्रफलसम्पत्तिः फलागमः। चतुर्दशाङ्गानि सन्धिविरोधग्रथननिर्णयपरिभाषणप्रसादानन्दसमयकृत्याभाषणोपगूहन पूर्वभावोपसंहारप्रशस्तयः। तत्र [5]बीजोपगमनं सन्धिः। कार्यमार्गणं विरोधः। कार्योपक्षेपणं ग्रथनम्। [6]बीजानुगुणप्रख्यापनं निर्णयः।

---

* अव्यापिनीं प्रकरिका (प्र रु. ना. प्र)

[1] विचलनाधानानि—त

[2] उपमानं चलनम् (प्र. रु. ना. प्र)

[3] सिद्धवद्भाविश्रय: कथनम्—त

[4] कार्यसङ्ग्रहणमाधानम्—त

[5] बीजोपशमनम् (प्र.रु. ना. प्र)

[6] बीजानुगुणकार्यप्रख्यापनम् (प्र. रु. ना. प्र.)

मिथोजल्पनं परिभाषणम्। प्रत्युपासनं [1]प्रसादः। वाञ्छितार्थ प्राप्तिरानन्दः। दुःखप्रशमनं समयः। [2]लब्धस्थितिकारणं कृतिः। [3]प्रसक्तकार्यानुमोदनम् आभाषणम्। अद्भुतार्थप्राप्तिरुपगूहनम्। इष्टकार्यदर्शनं पूर्वभावः। [4]वाक्यार्थोपसंहृतिरुपसंहारः। शुभप्रशंसनं प्रशस्तिः।

एवं चतुःषष्ठ्यङ्गसम्पन्नाः पञ्च सन्धयः प्रतिपादिताः। [5]सन्ध्यन्तराणि सामदानभेददण्डादीन्येकविंशतिसंख्याकानि तानि शिङ्गभूपालेन उपपादितानि द्रष्टव्यानि।

केचित्तु—सन्ध्यन्तराणामङ्गेष्वेवान्तर्भावम् आचख्यिरे। एतेषां षट्प्रयोजनानि सम्भवन्ति।

---

[1] प्रसादनम्—त

[2] लब्धस्थिरीकरणं कृतिः (प्र. रु. ना. प्र.)

[3] प्राप्तकार्यानुमोदनं—त

[4] कार्यार्थोपसंहृतिरुपसंहारः (प्र. रु. ना. प्र)

[5] अथ सन्ध्यन्तराणि—

मुखादिसन्धिष्वङ्गानामशैथिल्यं प्रतीयते
सन्ध्यन्तराणि योग्यानि तत्र तत्रैकविंशतिः ॥
आचार्यास्तत्संज्ञया चमत्कारो विधीयते।
लक्ष्यलक्षणमेतेषामुदाहृतमपि स्फुटम् ॥
सामदाने भेददण्डौ प्रत्युत्पन्नमतिर्वधः।
गोत्रस्खलितमोजश्च धीः क्रोधः साहसं भयम् ॥
माया च संहृतिर्भ्रान्तिर्दूत्यं हेत्ववधारणम्।
स्वप्नलेखौ मदश्चित्रमित्येतान्येकविंशतिः ॥

(रसार्णवसुधाकरे तृतीयोल्लासे ७९-८२)

१. विवक्षितार्थप्रतिपादनम्।
२. गोप्यार्थगोपनम्।
३. प्रकाश्यार्थप्रकाशनम्।
४. अभिनयरागसमृद्धिः।
५. चमत्कारित्वम्।
६. इतिवृत्तविस्तरश्चेति।

सन्धीनां नाटकाङ्गत्वेन पृथक्प्रयोजनकथनमनुपपन्नम्। अङ्गानां [1]प्रधानप्रयोजनेनैव फलवत्त्वात्। अत एव पताकारूपसुग्रीवादिचरित्राणामपि पृथक्फलाङ्गीकारो न युक्त इति चेदुच्यते[2]प्रयोजादीनां स्वजन्याङ्गपूर्वप्रधानद्वारा प्रधानफलोपयोगस्वसाध्यविवक्षितार्थादिप्रतिपादनद्वारा प्रधानफलेनैव फलवतां प्रयोजनोक्तिस्तु साध्याभिप्राया।

[3]शृङ्गारप्रकाशिकाकारस्तु-अङ्गानां प्रधानफलेनैव फलवत्त्वोक्तिरदृष्टफलविषयेत्याह, तच्चिन्त्यम्। अस्मदुक्तरीत्या प्रधानफलेनैव फलवत्त्वोपपत्तौ सङ्कोचकल्पनायां मानाभावात् इत्यलंविस्तरेण।

इतिवृत्तं द्विविधम्। [4]सूच्यमसूच्यश्चेति।

असूच्यमपि द्विविधम्। दृश्यं श्राव्यश्चेति। श्राव्यमपि द्विविधम्। सर्वश्राव्यं नियतश्राव्यं चेति। द्वितीयमपि द्विविधम्। जनान्तिकमपवारितश्चेति। [5]एतेषां लक्षणं नाटकवेदिनां स्पष्टमिति नोच्यते।

---

[1] प्रधानफलेनैव—त

[2] प्रयाजादीनां स्वजन्याङ्गपूर्वाद्वा प्रधानफलोपयोगवदेतेषाम् अपि स्वसाध्यविवक्षितार्थादि—त

[3] भोजः

[4] अरुच्यमवाक्यं चेति। अरुच्यमपि द्विविधम्। दृश्यं श्राव्यं चेति—ट

[5] तेषां लक्षणं—त

सूच्यस्य सूचनाक्रमः पञ्चविधः विष्कम्भचूलिकाङ्कास्यप्रवेशाङ्कावतारैः। (१) तत्र भूतभाविकथांशानां निदर्शकः सङ्क्षेपार्थो मध्यपात्रप्रयोजितो [1]विष्कम्भः। स द्विविधः शुद्धस्सङ्कीर्णश्चेति। शुद्धः संस्कृतप्रायः। संस्कृतप्राकृतमिश्रः सङ्कीर्णः। (२) यवनिकान्तर्वर्त्तिपात्रैरर्थसूचनं [2]चूलिका। सा द्विविधा चूलिकाखण्डचूलिका चेति। चूलिकाङ्कादावङ्कमध्ये च प्रयोज्या। [3]तत्र प्रवेशनिर्गमौ स्तः। खण्डचूलिकात्वङ्कादावेव प्रयोज्या। तत्र प्रवेशनिर्गमौ न स्तः। विस्तरस्तु रसार्णवसुधाकरे द्रष्टव्यः। (३) अङ्कान्तपात्रैरुत्तराङ्कार्थसूचन[4]मङ्कास्यम्। (४) भूतभाविकथांशनिदर्शकत्वे सति नीचपात्रप्रयोजितः [5]प्रवेशकः। [6]अङ्कः नाट्यङ्के युक्तः। (५) यत्रोत्तराङ्कार्थः पूर्वार्थानुषङ्गेणासूचिताङ्कपात्र एव प्रवर्तते सोऽ[7]ङ्कावतारः। अङ्केन यद्दृश्यते तद्दृश्येतिवृत्तम्।

---

[1] वृत्तवर्तिष्यमाणानां कथांशानां निदर्शकः।
सङ्क्षेपार्थस्तु विष्कम्भो माध्यपात्रप्रयोजितः॥
(प्रतापरुद्रीये—नाटकप्रकरणे—१९)

[2] अन्तर्यवनिकासंस्थैः चूलिकार्थस्य सूचना (प्र. रु. ना. प्र. २०)

[3] न तत्र—ग

[4] अङ्कान्तपात्रैरङ्कास्यमुत्तराङ्कार्थसूचना (प्र. रु. ना. प्र. २१)

[5] वृत्तवर्तिष्यमाणानां कथांशानां निदर्शकः।
प्रवेशकस्तु नाट्यऽङ्के नीचपात्रप्रयोजितः॥ (प्र. रु. ना. प्र. २२)

[6] अयं नाट्यङ्के—त

[7] यत्र स्यादुत्तरार्थाङ्कः पूर्वार्थानुसंगतः।
असूचित इवात्र तदङ्कावतरणं मतम्॥
(प्र. रु. ना. प्र. २३)

''[1]अङ्को नाम साक्षान्निर्दिश्यमाननायकव्यापारत्वे सति विन्दुव्यक्त्यलङ्कृतत्वे सति वहुविधावान्तरप्रयोजनकथाविशेषरसानामाश्रयः। अङ्के दूरगमनभययुद्धराज्यदेशादिविप्लवसंरोधभोजनस्नानसुरतादीनि प्रत्यक्षतो न निर्दिष्टव्यानि।

अथामुखं निरूप्यते। सूत्रधारस्य नटीमारिषविदूषकेषु केनापि सह चित्रोक्तिभिः स्वकार्यप्रस्तुताक्षेप[2]कमामुखम्। आमुखं प्रस्तावनेति पर्यायः। केचिदामुखविशेषः प्रस्तावनेत्याहुः।

अन्ये तु—प्रस्तावनाविशेष एव आमुखम् इत्याहुः। तस्य त्रीण्यङ्गानि कथोद्घातः प्रवर्तकं प्रयोगातिशयश्चेति। तत्र सूत्रधारस्य वाक्य[3]मर्थं वा गृहीत्वा पात्रप्रवेशः [4]कथोद्घातः। प्रवेशितपात्रस्य प्रकृतगुणवर्णनं [5]प्रवर्तकम्। सूत्रधारस्य एषोऽयमिति निर्देशानन्तरं

---

[1] प्रत्यक्षनेतृचरितो विन्दुव्यक्तिपुरस्कृतः।
अङ्को नानाप्रकारार्थसंविधानरसाश्रयः॥
(प्र. रु. ना. प्र. २४)

[2] सूत्रधारो नटीं ब्रूते मारिषं वा विदूषकम्।
स्वकार्यप्रस्तुताक्षेपि चित्रोक्त्या यत्तदामुखम्॥
प्रस्तावना वा— (प्रतापरुद्रीये नाटकप्रकरणे—२५-२६)

[3] अर्थं गृहित्वा—म

[4] स्वेतिवृत्तसमं वाक्यमर्थं वा यत्र सूत्रिणः।
गृहीत्वा प्रविशेत् पात्रं कथोद्घातो द्विधैव सः॥
(प्रतापरुद्रीये नाटकप्रकरणे—२७)

[5] प्रस्तूयमानकालस्य गुणवर्णनया स्वतः।
प्रविशेत् सूचितं पात्रं यत्र तत् स्यात् प्रवर्तकम्॥
(प्रतापरुद्रीये नाटकप्रकरणे—२८)

पात्रप्रवेशः [1]प्रयोगातिशयः। आमुखं भारतीवृत्तेरङ्गम्। पुरुषविशेष-प्रयोज्यः काव्यार्थसूचकः संस्कृतप्रायो वाग्व्यापारो [2]भारतीवृत्तिः। सेयं कञ्चिदृतुमाश्रित्य प्रयोज्या। (तस्यैव) प्ररोचना वीथी प्रहसना-मुखानि चास्या[3]ङ्गानि। प्रस्तुतार्थप्रशंसनेन श्रोतॄणां प्रवृत्त्युन्मुखी-करणं प्ररोचना। वीथ्यङ्गानामप्यामुखाङ्गत्वात् तान्यपि निरूप्यन्ते। त्रयोदश वीथ्यङ्गानि। उद्घात्यकावलगितप्रपञ्चत्रिगतच्छलवाक्केल्यधि-बलगण्डावस्यन्दितनालिकासत्प्रलापव्याहारमृदवानि।

तत्र गूढार्थपर्यायमालाप्रश्नोत्तरमाला वा उद्घात्यकम्। अन्य-कार्यच्छद्मना अन्यकार्यकरणमन्यत्प्रसङ्गात् प्रकृतकार्यसिद्धिर्वा अवलगि-तम्। असद्भूतं मिथस्स्तोत्रं प्रपञ्चः। पूर्वरङ्गे[4]नटीभिः साम्यादनेकार्थ-योजनं त्रिगतम्। प्रियसदृशैरपि प्रियैर्वाक्यैर्विलोभनं छलनम्। साक्षा-

---

[1] एषोऽयमित्युपक्षेपात् सूत्रधारप्रयोगतः।
पात्रप्रवेशो यत्रायं प्रयोगातिशयो मतः॥
(प्रतापरुद्रीये—नाटकप्रकरणे—२९)

[2] भारती संस्कृतप्रायो वाग्व्यापारो नटाश्रयः।
भेदैः प्ररोचनायुक्तैः वीथीप्रहसनामुखैः॥
(दशरूपकम्, प्रकाश ३ श्लो—५)

[3] अङ्गान्यस्याश्च चत्वारि भरतेनावभाषिरे।
प्ररोचनामुखे चैव वीथी प्रहसने इति॥
(रसार्णवसुधाकरः ३ विलासे—१४०)

[4] नटादिभिः—त

द्वायकनिर्वर्त्तनमुक्तिप्रत्युक्तिर्वा वाक्केलिः। स्पर्धया अन्योन्यवाक्याधिक्यमधिबलम्। सहसोदितं प्रस्तुतविरोधि गण्डम्। रसवशादुक्तस्य अन्यथाव्याख्यानमवस्यन्दितम्। सोपहासनिगूढार्थप्रहेलिका नालिका। असम्बन्धकथाप्रायः प्रलापः। अन्यार्थं हास्यलोभकरं वचनं व्याहारः। दोषाणां [1]गुणत्वप्रतिपादनं मृदवम्। एतेषां मध्ये यथासम्भवं कानिचित् प्रस्तावनायां प्रयोज्यानि।

अथ सर्वरूपकोपकारकत्वात् पूर्वरङ्गस्वरूपं निरूप्यते। [2]पूर्वरङ्गो नाम नाटकादौ कर्तव्यः प्रत्यूहपरिपन्थी कर्मविशेषः। तत्र नान्द्यवश्यंप्रयोक्तव्या। तदुक्तं बादरायणेन—

यद्यप्यङ्गानि भूयांसि पूर्वरङ्गस्य नाटके।
तथाप्यवश्यं कर्तव्या नान्दी विघ्नोपशान्तये ॥ इति।

नान्दी नाम नाटकादिरूपकाणाम् आदौ विहितं पद्यम्। तत्र नाटकादिनान्द्यामर्थतश्शब्दतो [3]वाक्यार्थस्सूचनीयः। तत्र अष्टद्वादशाष्टादश पदानि द्वाविंशतिपदानि वा प्रयोक्तव्यानि। नान्द्यां पदानियमो नेति केचित्।

---

[1] गुणार्थप्रतिपादनम्—त

[2] यन्नाट्यवस्तुनः पूर्वं रङ्गविघ्नोपशान्तये।
कुशीलवाः प्रकुर्वन्ति पूर्वरङ्गः स कीर्तितः ॥
(प्रतापरुद्रीयस्य रत्नापणव्याख्याने नाटकप्रकरणे नान्दीस्वरूपनिरूपणावसरे पूर्वरङ्गस्वरूपम्)

[3] वा काव्यार्थः सूचनीयः—त

[1]तत्रैव चन्द्रवाचकपदं मङ्गलवाचकपदमपि प्रयोज्यम्। आशीर्नमस्क्रिया वस्तुनिर्देशो वा तत्र कल्पनीयः। नान्द्यनन्तरं प्रविष्टेन सूत्रधारेण रङ्गप्रसाधन-पुरस्सरं भारतीवृत्त्याश्रयणेन श्लोकैः काव्यार्थस्सूचनीयः। तत्र सर्वरूपकोपकारित्वेन अस्मत्पितृव्यलक्ष्मणभट्टोपाध्यायैष्षड्भाषाचन्द्रिकायां निरूपितो भाषाविनियोगः प्रदर्श्यते।

तत्र तु प्राकृतं स्त्रीणां सर्वासां नियतं भवेत्।
[2]क्वचिच्च देवीगणिकामन्त्रिराजादियोपिताम्॥
योगिन्यप्सरसोः शिल्पनारीणामपि संस्कृतम्।
ये नीचाः कर्मणा जात्या तेषां प्राकृतमुच्यते॥
छद्मलिङ्गवतां तद्वज्जनानामिति केचन।
अधमे मध्यमे [3]वापि [4]शौरसेनी प्रयुज्यते॥

---

[1] तत्र नान्दीति—(ल)
चन्द्रनामाङ्किता प्रायो मङ्गलार्थपदोज्वला।
आशीर्नमस्क्रिया वस्तुनिर्देशो वा प्रकल्प्यते॥
—(प्रत.परुद्रीये-नाटकप्रप्रकरणे-रत्नापणव्याख्याने नान्दीप्रकरणावसरे पठितोऽयं श्लोकः)

[2] क्वचिच्च देवीगणिकामन्त्रिजाधीतियोषितात्।
योगिन्यप्सरसोः शिल्पकारिण्या अपि संस्कृतम्॥
(रसार्णवसुधाकरः-३ विल.स.-६९९ श्लोकः)

[3] चापि—त

[4] शौरसेन्यधमेषु च।
पिशाचात्यन्तनीचादौ पैशाचं मागधं तथा
यद्देशं नीचपात्रं यत्तद्देशं तस्य भाषितम्॥
कार्यतश्चोत्तमादीनां कार्यो भाषाव्यतिक्रमः॥
दशरूपकम्-प्रकाशः २-श्लोक ६५-६६)

धीवराद्यतिनीचेषु मागधी विनियुज्यते ।
रक्षःपिशाचनीचेषु पैशाची द्वितयं भवेत् ॥
अपभ्रंशस्तु चण्डालयवनादिषु युज्यते ।
नाटकादावपभ्रंशविन्यासस्यासहिष्णवः ॥
अन्ये चण्डालकादीनां मागध्यादीन् प्रयुञ्जते ।
सर्वेषां कारणवशान् कार्यो भाषाव्यतिक्रमः ॥
माहात्म्यस्य परिभ्रंशो मदस्यातिशयस्तथा ।
प्रच्छादनञ्च विभ्रान्ति यथालिखितवाचनम् ॥
कदाचिदनुवादश्च कारणानि [1]प्रचक्षते ॥

---

अथ काव्यश्रवणरूपकोऽभिनयप्रयोज्यात्मानन्दरूपो रसो निरूप्यते ।

ननु —कारणान्यथ कार्याणि सहकारीणि यानि च ।
रत्यादेः स्थायिनो लोके तानि चेन्नाट्यकाव्ययोः ।
विभावा अनुभावास्तत्कथ्यन्ते व्यभिचारिणः ।
व्यक्तस्स तैर्विभावाद्यैः स्थायीभावोरसःस्मृतः ॥

इति काव्यप्रकाशिकाकारः ।

व्यक्तस्सामाजिकानां यो वासनात्मतया स्थितः ।
स स्थायीभावोरत्यादिरास्वाद्यत्वाद्रसस्स्मृतः ॥

इति साहित्यचिन्तामणिकारः ।

---

[1] प्रचक्षते इति—त

एते च स्थायिनः [1]स्वैःस्वैः विभावैर्व्यभिचारिभिः ।
सात्त्विकैरनुभावैश्च नटाभिनययोगतः ॥
साक्षात्कारमिवानीताः प्रापितास्स्वादुरूपताम् ।
सामाजिकानां [2]मनसि प्रयान्ति रसरूपताम् ॥ इति

रसार्णवसुधाकरः ।

विभावैर्ललनादिभिरालम्बनकारणैरङ्कुरितः [3]किसलितकरादिभिरुद्दीपनकारणैः कन्दलितोऽनुभावैः स्मितादिभिः प्रतीतिपद्धतिमध्यारोपितो व्यभिचारिभिः चिन्तादिभिः पल्लवितः कदापि नानुभूतोऽभिधानेन कर्णातिथीकृतो तात्पर्येण नालक्षीकृतो लक्षणया न स्वविषयं प्राप्तः प्रत्यक्षेण नात्मनः [4]समानमानीतोऽनुमानेनापरिशीलितसरणिः स्मरणेन नाक्रान्तः कार्यतया न ज्ञातः ज्ञाप्यतयाविगलितवेद्यान्तरत्वेन परिमितावनर्धाती ध्वननाभिधानाभिनवव्यापारपरिरम्भणनिर्भरतयाऽनुकार्य्यानुकर्तृगतत्वपरिहारेण सामाजिकानां वासनात्मतया स्थितःस्थायी रत्यादिको भाव एव विभावादिजीवितावधिः पानकरसन्यायेन चर्व्यमाणः चर्व्यमाणैकप्राणःसमुल्लसन् [5]ब्रह्मास्वादसब्रह्मचारी लोकोत्तर-

---

[1] तैः तैर्विभावैः—म

[2] हृदये—म

[3] शीतकरादिभिरुद्दीपनकारणैः कन्दलितः—त

[4] सीमानमानीतोऽनुमानेन—त

[5] ब्रह्मानन्दास्वादसब्रह्मचारितया—म

चमत्कारी शृङ्गारादिको रसोऽभि[1]धीयत इति विद्याधरः। विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्तिरिति भरतः। "विभावानुभावसात्त्विकव्यभिचारिसामग्रीसमुल्लसितः स्थायीभावो रस' इति विद्यानाथः। तत्र न तावत काव्यप्रकाशिकाकारलक्षणं युक्तम्। रसाभासेऽतिव्याप्तेः। ननु समग्रैरिति विशेषणं [2]नीयते [3]तर्हि म्लेच्छादिगतरसाभासादौ विभावादिपरिपूर्तेरभावान्नातिव्याप्तिरिति चेन्नैवम्। लक्षणस्य असम्भवप्रसङ्गात्। मलयानिलचन्द्र[4]कोकिलवसन्तादितटस्थविभावादीनामनन्तत्वेन तस्मिन्नपि देशे काले [5]च असम्भवात्। ननु सम्भवद्विभावादयः समग्रशब्दार्था इति चेत्तर्हि रसाभासेऽतिव्याप्तिस्तदवस्थैव। तत्रापि सम्भवद्विभावादिपूर्त्तिसम्भवात्। अत एव न साहित्यचिन्तामणिकारलक्षणं युक्तम्। नापि शिङ्गभूपालीयं लक्षणं युक्तम्। [6]काव्यप्रवणयोज्यरसेऽतिव्याप्तेः। नापि विद्याधरलक्षणं युक्तम्। तत्र सर्वेषां लक्षणानुप्रवेशो विशेषणवैयर्थ्यात्। विभावानुभावसात्त्विकव्यभिचारिभिस्समुल्लसन् स्थायीभावो रस इत्येव लक्षणे मिवक्षिते प्रागुक्तदूषणानतिवृत्तिः। विभावानुभावव्यभिचारि[7]संयोगान्नि-

---

[1] विधीयत इति—त

[2] दीयते—त

[3] तथा च—त

[4] कोकिलरुतवसन्तादि—त

[5] वा—त

[6] काव्यप्रकाशकारेणप्रयोज्यरसे अव्याप्तेः—त

[7] संयोगनिष्पाद्यमानः—त

ष्पाद्यमानः स्थायीभावो रस इति भरतवचनार्थः। तदपि न युक्तम्। निष्पत्तिशब्देन उत्पत्तिविवक्षायां व्यक्तिवादिनं प्रत्यन्यतरासिद्धेः। व्यक्तिविवक्षायाम् उत्पत्तिवादिनं प्रत्यन्यतरासिद्धेः। एवं [1]भुक्तिविवक्षायामपि इतरभेदसाधनेऽन्यतरासिद्धिर्द्रष्टव्या। एतेन लोल्लटादिभरतव्याख्यानमपि निरस्तं बोध्यम्। विद्यानाथलक्षणेऽपि सामग्रीपदं व्यर्थम्। उपयोगाभावात्। न च रसाभासेऽतिव्याप्तिनिरासार्थं तदिति शङ्क्यम्। प्रागुक्तदूषणात्। ननु तिर्यङ्म्लेच्छादावारोपेण [2]मुख्यरसाभावात् समुल्लसितत्वापरपर्यायानन्दसंविद्रूपावस्थारूपचमत्काराभावादेव रसाभासे नातिव्याप्तिरिति नोक्तदूषणापत्तिरिति चेन्मैवम्। आरोपितशुक्तिरजतादौ प्रमोदातिशयवद्रसारोपस्थलेऽपि चमत्कारसम्भवात्। अन्यथा तिर्यगादीनां निरातङ्कप्रवृत्त्यभावप्रसङ्गात्। ननु तिर्यगादौ भेदाग्रहादेव प्रवृत्तिरिति चेन्न। आरोपितरसो वा बाधितरसो वा रसाभास इत्यङ्गीकारात् रसज्ञाने तदाभासज्ञानं तज्ज्ञाने च रसज्ञानमित्यन्योन्याश्रयात्। ननु भावान्तरबाधितस्य भावान्तरमेव लोकोत्तरनायकादावपि तत एव प्रवृत्तिसम्भवात्। चमत्काराभावप्रसङ्गात्। अनुभवापलापस्तु उभयत्रापि समानः। ननु मास्तु सामग्रीपदम्। न च रसाभासेऽतिव्याप्तिः। तद्व्यतिरिक्तत्वे सति इति विशेषणादिति चेन्न। आरोपितरसो वा बाधितरसो वा रसभास इत्यङ्गीकारात् रसज्ञाने तदाभासज्ञानं तज्ज्ञाने च रसज्ञानमित्यन्योन्याश्रयप्रसङ्गात्। न च

---

[1] भुक्त्यां विवक्षायामपि—त

[2] मुख्यरसाभावात् समुल्लसितत्व—त

भावान्तरबाधितभावान्तरमेव रसाभास इति वाच्यम्। विभावाद्युल्लसित-चमत्कारात् प्रागपि भावान्तरस्य भावान्तरबाधसम्भवात् रसाभासव्यवहार-प्रसङ्गात्। ततः सामग्रीपदादानदानयोरसम्भवात् अतिव्याप्तिदोषतादव-स्थ्यात् दुर्वारम्। किञ्च विभावादिविशेषणोपयोगमपि न पश्यामः। ननु चूतकदलीफलास्वादनजन्यानन्दादावतिव्याप्तिनिवृत्तये विभावादिविशेषणं देयम्। तस्य तदसमुल्लसितत्वादिति चेन्न। रत्यादिनवविधभावपरेण भावशब्देनैव तस्यापि व्यावर्तित्वात्। भावशब्दस्य भावमात्रपरत्वाङ्गीरेका लक्षणस्यासम्भवदोषप्रसङ्गः। भावमात्रस्यापि विभावादिभिरानन्दसंविद्रूपाव-स्थानापादनात्। न च तादृशसुखमपि रतिरेवेति न तेन तद्व्यावृत्तिरिति वाच्यम्। सम्भोगविषयेच्छाविशेषोरतिरिति [1]आलङ्कारि......करे रतिलक्षण-कथनात्। किञ्च स्थायिपदं व्यर्थम्। न च निर्वेदादिसञ्चारिभावे अतिव्याप्तिवारणाय तदिति शङ्क्यम्। तस्य निर्भरानन्दसंविद्रूपत्वाभावात्। न च प्रागुक्तसुखेऽतिव्याप्तिवारणाय तत्। प्रागुक्तयुक्तेरेव तत्र तदलग्नात्। तस्य विभावाद्यसमुल्लसितत्वाच्च। एतेन

[2]विभावैरनुभावैश्च सात्विकैर्व्यभिचारिभिः।
आनीयमानः स्वादुत्वं स्थायीभावोरसःस्मृत।

इति लक्षणं निरस्तम्।

यदपि तस्यैव लक्षणान्तरम्। रसतेः स्वादनार्थत्वात् रस्यते इति ते

---

[1] मध्ये—'त्रुटितः' मातृकायाम्।

[2] दशरूपककारलक्षणम्।
(द. रू. ४ प्रकाश-श्लो-१

रसा इति तदपि न साधीयः। [1]सरसपुरुषास्वाद्यमानचूतपीडादिरसस्यापि रसत्वापत्तेः। ननु तर्हि स्थायिभावस्य आस्वाद्यमानतावस्थैव रस इति [2]लक्षणमस्तु। तदुक्तम्—

व्यञ्जनौपधिसंयोगाद्यथा न स्वादुतां व्रजेत्।

एवं नयन्ति रसतां इतरे स्थायिनं श्रिता।

इति चेन्न। अत्रापि प्रागुक्तन्यायेन स्थायिपदवैयर्थ्याद् सावधिकावस्थानपरेण स्थायिपदेन [3]फलास्वादनजन्यसुखादिव्यावृत्तेरयोगाच्च। तेन निरवधिकावस्थानविवक्षायां रसेऽप्यसम्भवः। विभावादिसामग्रीनाशानन्तरं तस्यावस्थानासम्भवात्। ननु तर्हि भावस्यास्वाद्यमानतावस्थैव रस इति तल्लक्षणमस्त्विति चेन्न। रसाभासेऽतिव्याप्तेः। ननु तर्हि—रसतदा[4]भासमिदं लक्षणमस्त्विति चेन्नेदं वचनं लक्षणज्ञानां मनो रञ्जयति। यत्रातिव्याप्तिर्लक्षणस्य परेणाशङ्क्यते। तत्सहितस्यैव [5]प्रकृतस्यैव लक्षणमिदमिति सर्वत्र सुवचत्वेन अतिव्याप्तेरेव दूषणत्वप्रसङ्गात्। मुख्यरसस्य लक्षणान्तरानिर्वचनाच्च। अतो रसलक्षणं दुर्निर्वचमिति चेन्—अत्रोच्यते।

सरसकाव्यश्रवणनिपुण[6]नटाभिनयभिन्नभिन्नसाक्षात्क्रियमाण–

---

[1] सरसपुरुषास्वाद्यमानचूतफलादिरसस्यापि—त

[2] तल्लक्षणमस्तु—त

[3] कदलीफलास्वादनजन्यसुखादिव्यावृत्तेः—त

[4] तदाभाससाधारणमिदं—त

[5] प्रकृतस्य लक्षणम्—त

[6] नटाभिनयोभयभिन्न—त

सम्भवद्विभावादिभिर्भावकहृदये स्वादुतां प्रापितो बाध्यत्वानधिकरण-मानन्दो रस इति लक्षणनिष्कर्षः।

अत्र नान्यतरासिद्धिः। उत्पत्त्यादिभिरपि रसास्वादस्य अङ्गीकृतत्वात साक्षात् क्रियमाणैरसाक्षात्कारं नीयमानैरित्यर्थः। तेन नासम्भवदोष इति बोध्यम्। नेदं लौकिकरसेऽतिव्याप्तम्। तस्य भावकजनास्वाद्यमानत्वा-भावात्। न च रसाभासेऽतिव्याप्तिः। तस्य बाध्यत्वात्। सरसकाव्य-श्रवण[1]योज्यरसेऽव्याप्तिवारणाय काव्यश्रवणेति। [2]आभासे काव्येनानन्दा-स्वादनासम्भवात्। तदर्थं सरसेति। काव्याभिनयप्रयोज्यरसयोरुभयोः प्रयोज्यत्वात् असम्भवनिवृत्त्यर्थञ्च उभयभिन्नभिन्नेति।

ननु ब्रह्मानन्दं किं न रसः? किं वा रसः? नाद्यः। 'रसो वै सा' इतिः श्रुतिविरोधात्।

शान्तरसप्रकर्षरूपत्वेन रसत्वानपायाच्च। न च ब्रह्मानन्दो रसफलं न स्वयं रस इति वाच्यम्। स्वर्गापूर्वयोरिव शान्तरसब्रह्मानन्दयो[3]रेकलोली-भावात्। द्वितीये तत्राव्याप्तिः। अस्य काव्याभिनयान्यतरप्रयोज्यत्वा-भावादिति चेन्नैवम। ब्रह्मानन्दस्यापि शान्तरसप्रधानकाव्यश्रवणप्रयोज्यत्वात् तत्प्रधानाभिनयप्रयोज्यत्वाच्च। ननु तर्हि ब्रह्मानन्दकामिनां सरसकाव्यश्रवणा-दावेव प्रवृत्तिस्स्यादिति चेन्न उच्यते। प्रवर्तन्त एव तत्र सरसा ब्रह्मानन्द-कामिनः वीररसास्तु न प्रवर्त्तन्ते। नैतावता कोऽपि दोषः। न च वेदान्तेषु न प्रवृत्तिस्स्यादिति वाच्यम्। वेदान्तेषु प्रवर्तमानस्य पुराणादौ

---

[1] प्रयोज्य—त

[2] आभासकाव्येन—त

[3] रेकतोविभावात्—त

प्रवृत्तिवद्वेदान्तविचारस्य अनुभावरूपत्वेन तत्रापि प्रवृत्त्युपपत्तेः। न चैवं शृङ्गारादिरसवद्ब्रह्मानन्दस्याप्यपायापत्तिः। [1]शृङ्गाररसस्यापि नित्यत्वेन अपायाभावात् तत्राभिव्यक्तेरेव अपायात्। ब्रह्मानन्दाभिव्यक्तौ तु नापायः। वेदान्तविचारादिनानुभावेनासम्भावनाविपरीतभावनयोर्निवृत्तेः। ततो रस-सामान्यलक्षणम् अनवद्यम्।

अस्य रसस्य नव स्थायिभावाः। तदुक्तम्।

[2]रतिर्हासश्च शोकश्च क्रोधोत्साहौ भयं तथा।
जुगुप्साविस्मयशमाः स्थायिभावाः प्रकीर्तिताः॥

तत्र भावो नाम—

'काव्येनाभिनयेन वा निवेद्यमानरामादिसुखदुःखानुभवजनित-भावनारूपसामाजिकमनोविकारः।

तदुक्तम्—

सुखदुःखादिभिर्भावैर्भावस्तद्भावभावनमिति।

अत्र तस्य भावकस्य भावश्चित्तं तस्य भावनम्। वासनेत्यर्थः।

अत [3]एव

चोक्तं—शिङ्गभूपालेन—

---

[1] शृङ्गारादिरसस्यापि—त

[2] रतिर्हासश्च शोकश्च क्रोधोत्साहौ भयं तथा।
जुगुप्साविस्मयशमाः स्थायिभावा नव क्रमात्॥
—(प्रतापरुद्रीये रसप्रकरणम्)

[3] अत एवोक्तम्—त

निर्विकारस्य चित्तस्य [1]भावस्स्यादादिविक्रिया।

इति। एतदुक्तं भवति। 'रसस्य सन्निहितपूर्वावस्थाविशेषः स्थायिभाव' इति। [2]भावस्य [3]स्थायित्वं नाम—सजातीयासजातीयातिरस्कृतरूपतया यावदनुभवमस्थानम्। स चासम्भवः। सजातीयेन नायिकान्तरानुरागेण विजातीयेन बीभत्सादिना वा एकस्यां नायिकायाम् अनुरागस्य अतिरस्करणात्। तदुक्तम्—

विरुद्धैरविरुद्धैश्च भावैर्विच्छिद्यते न यः।
आत्मभावं नयत्यन्यान् स्थायीव लवणाकर ॥ इति।

स च रसो नवविधः श्रृङ्गारहास्यकरुणरौद्रवीरभयानकबीभत्साद्भुतशान्त भेदात्। ननुशान्तवर्ज्[4]मष्टो रसा इति। कथं नवविधो रस इति चेन्न। विकल्पासहत्वात्। किं शान्तस्य निर्भरानन्दरूपत्वाभावात् न रसता?

---

[1] रसार्णवसुधाकरः—प्रथमो विलासः—१९२ श्लोक

[2] भावस्य स्थायित्वं नाम सजातीयविजातीयानभिभूततया यावदनुभवमस्थानम्।
(प्रतापरुद्रीये रसप्रकरणम्)

[3] सजातीयविजातीयैर्भावैर्ये त्वतिरस्कृताः।
क्षीराब्धिवन्नयन्त्यन्यान् स्वात्मत्वं स्थायिनोहि ते ॥
(रसार्णवसुधाकरः २ विलासः—१०४ श्लो)

[4] (i) अष्टधा स च श्रृङ्गारहास्यवीराद्भुता अपि।
रौद्रः करुणबीभत्सौ भयानक इतीरितः ॥
(रसार्णवसुधाकराः २ विलास-१६६-१६७ श्लोका)

(ii) श्रृङ्गारहास्यकरुणरौद्रवीरभयानकाः।
बीभाद्भुतसंज्ञौ चेत्यष्टौ नाट्ये रसाः स्मृताः ॥
(काव्यप्रकाशः—४ उल्लास—२९ श्लो)

किं वा उक्तेष्वेवान्तर्भावात् ? नाद्यः । [1]शान्तरसस्य निर्भरानन्दत्वात् । नेतरः । तस्य कुत्राप्यनन्तर्भावात् ।

तथा हि—

न तावत्तस्य शृङ्गारेऽन्तर्भावः । अप्रसक्तत्वात् ।

ननु [2]त्रिविधो वीरः । दानवीरो धर्मवीरो युद्धवीरश्चेति । तत्र शान्तो धर्मवीर इति तत्रैव तस्यान्तर्भाव इति चेदुच्यते । अहमेवंविध इति उत्साहापरपर्यायाभिमानमयो वीरः । सर्वाहङ्कारप्रशमैकरूपश्शान्त इति कथं तत्र तस्यान्तर्भावः । [3]उभयोरत्यन्तवैजात्यात् । दयावीरो धर्मवीर एवेति न तत्राप्यन्तर्भावश्शक्यश्शङ्कः । रसान्तरेषु नान्तर्भावशङ्कैव उन्मिषति ।

ननु मुनिना अपरिगणितत्वात् शान्तो न रस इति चेन्मैवम् ।

---

[1] शान्तश्च तृष्णाक्षयसुखस्य परिपोषः तल्लक्षणो रसः प्रतीयत एव । तथा चोक्तम्—

यच्च कामसुखं लोके यच्च दिव्यं महत्सुखम् ।
तृष्णाक्षयसुखस्यैते नार्हतः षोडशीं कलाम् ॥

यदि नाम सर्वजनानुभवगोचरता तस्य नास्ति नैतावता असौ अलोकसामान्य-महानुभावचित्तवृत्तिविशेषवत् प्रतिक्षेप्तुं शक्यः—ध्वन्यालोके–तृतीयोद्योतः

[2] नन्वेवं दयावीरो धर्मवीरो दानवीरो वा नासौ कश्चित् । शान्तस्यैवेदं नामान्तरकरणम् । तथा च मुनेः–दानवीरं धर्मवीरं युद्धवीरं तथैव च । दयावीरमपि प्राह ब्रह्मा त्रिविधसंमतम् । इत्यागमपुरःसरं त्रैविध्यमेव अभ्यधात् ॥

(ध्वन्यालोकलोचने–तृतीयोद्योते शान्तरसनिरूपणावसरे)

[3] वीरे च तस्य अन्तर्भावः कर्तुं युक्तः । तस्याभिमानमयत्वेन व्यवस्थापनात् । अस्य च अहंकारप्रशमैकरूपतया स्थितेः । तयोश्चैवंविधविशेषसद्भावेऽपि यद्यैक्यं परिकल्प्यते तद्वीररौद्रयोरपि तथा प्रसङ्गः । दयावीरादीनां च चित्तवृत्तिविशेषाणां सर्वाकारमहङ्काररहिततत्वेन शान्तरसप्रभेदत्वम् इतरथा तु वीरप्रभेदत्वमिति व्यवस्थाप्यमाने न कश्चिद्विरोधः । तदेवमस्ति शान्तरसः ॥

(ध्वन्यालोकः ३ उद्योतः)

निर्वेद एव [1]शान्तस्य [2]स्थायीभाव इति मुनिनाप्यङ्गीकृतत्वात्। ननु रससामग्रीवैधुर्यान्न शान्तो रस इति चेत्—सत्पुरुषसेवादौ शान्तविचाराद्यनुभावश्रवणमननिदिध्यासनापरपर्यायमतिस्मृतिचिन्तादिव्यभिचारिभावादिसामग्र्याः सम्भवात्। ननु रागिणामश्लाघ्यत्वात् न शान्तो रस इति चेन्न। तर्हि वीतरागाणामश्लाघ्यत्वात् शृङ्गारादिरपि न रस इति तुल्यम्। सर्वश्लाघ्यत्वं तु न [3]शान्तरसस्यापि सम्भवति। वीतरागेषु तदादरदर्शनात्। ननु तथापि पुरुषार्थत्वाभावात् न शान्तो रस इति चेन्न। चतुर्थपुरुषार्थस्य [4]मुक्तेस्सम्भवात्। निरपायरसब्रह्मानन्दरूपप्रकर्षावाप्तिरेव मुक्तिशब्दार्थः। तथा च निरपायब्रह्मानन्दाविर्भावरूपा मु[5]क्तिश्शान्तरसानन्दैकलोलीभावं प्रतिपन्नापि तत्साध्येति गीयते। यथा काम्यापूर्वैकलोलीभावमापन्नोऽपि स्वर्गः साध्य इति गीयते।

---

[1] तस्य—त

[2] निर्वेदस्य अमङ्गलप्रायस्य प्रथमम् अनुपादेयत्वेऽपि उपादानं, व्यभिचारित्वेऽपि स्थायित्वाऽभिधानार्थम्। तेन—निर्वेदस्थायिभावोऽस्ति शान्तोऽपि नवमो रसः॥ (काव्यप्रकाश—४ उल्लासः ३५ श्लो)

[3] न रसस्यापि—म

[4] (i) चतुर्थपुरुषार्थस्य मुक्तेरेतदेकसाध्यत्वात्। तदुक्तं भावप्रकाशे—
'सर्वप्रकारैः सम्पूर्णकामः संतुष्टमानसः।
प्राप्नोति मुक्तिं चरमे शान्तेनैव रसेन सः॥
इति। लोचने चोक्तम्—'मोक्षफलत्वेन चायं परमपुरुषार्थनिष्ठत्वात् सर्वरसेभ्यः प्रधानतमः स चायं शान्तरसः इति। (प्रतापरुद्रीयस्य-रत्नापणव्याख्याने-रसप्रकरणे शान्तरसस्थायिनः शान्तस्य निरूपणावसरे)

ii) तदेवमनुक्रमणी निर्दिष्टेन वाक्येन भगवद्व्यतिरेकिणः सर्वस्यान्यस्यानित्यतां प्रकाशयतो मोक्षलक्षण एवैकः परः पुरुषार्थः शास्त्रनये काव्यनये च तृष्णाक्षयसुखपरिपोषलक्षणः शान्तो रसो महाभारतस्य अङ्गित्वेन विवक्षित इति सुप्रतिपादितम्। (ध्वन्यालोकः-४ उद्योतः)

[5] मुक्ते—त

एवमेवेति न कोऽपि दोषः। न च रसानन्दब्रह्मानन्दयोरत्यन्तभेदश्शक्यशङ्कः। उभयोर्निर्भरानन्दरूपत्वाविशेषेण तथावक्तुमयुक्तत्वात्। तदुक्तम्—

पाठादथ ध्रुवा गानात् ततस्सम्पूरितो रसः।
तथास्वादभरैकाग्रो हृष्यं तन्मुखःक्षमः।

ततो निर्विषयस्यास्य स्वरूपावस्थितो बीजः मृज्यते ह्लादनिष्यन्दो येन तुष्यन्ति योगिन इति।

न चैवं रसाद्वैतप्रसङ्गः। रसवेदान्तार्थवादिनामिष्टापत्तेः। शृङ्गारादिभेदव्यवहारस्तु औपाधिक एवेति न तात्त्विकः। तथा चानुमानम्—'रसः अभिन्नो भवितुमर्हति। उपाधिभेदमन्तरेण[1]विभाव्यमानभेदत्वात्। गगनवदिति। ननु रसो भिन्नो भावतुमर्हति। भिन्नदेवताकत्वात्। भिन्नदेवताकर्मवत्। न चासिद्धिः। शृङ्गारादीनां विष्ण्वादिदेवताकत्वस्य शिङ्गभूपालादिभिः प्रतिपादितत्वादिति चेन्न। भिन्नदेवतास्वरूपस्योपाधितत्वात्। न च साधनव्यापकता। शृङ्गाररससखिमूर्तिमानिव मधौ मुग्धो हरिः क्रीडति' इत्यादि अलङ्कारादेव तयोर्भेदप्रतिपादनात्। न च अत्र अनन्वयालङ्कारशङ्का पतति। द्वितीयसब्रह्मचारिवृत्तेरभावात्। यद्वा अभिन्नद्रव्यकत्वमुपाधिः। अतो न सम्प्रतिपक्षितोरभेदप्रयोग इति सिद्धम्। अत एव शृङ्गाररस एक एवेति शृङ्गारप्रकाशिकाकारवचनं प्रत्युक्तम्। शृङ्गाराद्वैतस्यायुक्तत्वात्। तथाहि-किं रसान्तराणां शृङ्गारत्वेन प्रतीतेः शृङ्गाराद्वैतं किं वा, निर्भरानन्दरूपत्वात्। नाद्यः। तथा तेषाम् अप्रतीतेः। नेतरः। सामान्येन रसाद्वैतस्यैव युक्तत्वात्। अत एव सुषुप्तिजागरादौ प्रतीयमानः

---

[1] भाव्यमानत्व न् गगनवदिति—त

सर्वोऽप्यानन्दो ब्रह्मानन्द एवेति वेदान्तिनोऽपि वदन्ति। अत एव एवमेष्वन्तर्भावाङ्गीकारे सर्वत्र एकरसस्य प्रसङ्ग इति [1]रत्नापणकारवचनमपि निरस्तम्। अतस्सिद्धं नवैव रसा इति। वत्सलादिरसान्तराणाम् अन्तर्भावस्तु ग्रन्थान्तरेष्वेव स्पष्ट इत्यलं विस्तरेण।

स च रसः सरसकाव्यसङ्गृहीतया निपुणनटाभिनयप्रदर्शितया वा भावुकपुरुषभाव्यमानया वा विभावानुभावसात्त्विकव्यभिचारिभावात्मकसामग्र्या स्वयमावेद्यमानो रसशब्दाभिधेयो भवति।

तत्र विभावस्वरूपं निरूप्यते। [2]रसोत्पादनकारणं विभावः। स द्विविधः। आलम्बनविभाव उद्दीपनविभावश्चेति। रससमवायिकारणमालम्बनविभावः। अन्यत्कारणजातमुद्दीपनविभावः।

ननु सामाजिकाश्रयरसं प्रति रामादयः कथमालम्बनकारणम्। विशिष्ट[3]कालादि कथमुद्दीपनकारणमिति चेदुच्यते। रामादिनायकविशिष्टदेशकालादि रूपमुभयमपि काव्यनाटकादिमुखेन सामाजिकान्तःकरणप्रतिबिम्बितया सामाजिकनिष्ठमालम्बनविभाव उद्दीपनविभावश्चेति कथ्यते। तदुक्तम्। 'ज्ञाय-

---

[1] उत्साहस्य अहमेवंविध इत्येवंप्राणत्वेन अभिमानमयो वीरःसर्वाहंकारप्रशमैकरूपः शान्तः। एवमनयोरत्यन्तवैजात्यात। तर्हि दय वीरेऽन्तर्भाव इति चेन्न। तस्याप्येवंविधत्वे शान्तस्यैव नामान्तरकरणमनेवंविधत्वे वीरप्रभेद एवेति। एवमप्यन्तर्भावाङ्गीकारे सर्वत्रैकरसस्य प्रसङ्गः—

(प्रतापरुद्रीयरत्नापणव्याख्याने-रसप्रकरणे शमनिरूपणावसरे)

[2] विभावः कथ्यते तत्र रसोत्पादनकारणम् आलम्बनोद्दीपनात्मा स द्विधा परिकीर्त्यते॥ (प्रतापरुद्रीये रसप्रकरणम्।)

ii) ज्ञायमानतया तत्र विभावो भावपोषकृत्। आलम्बनोद्दीपनत्वप्रभेदेन स च द्विधा। (दशरूपकम्-४ प्रकाशः—२ श्लोक)

[3] कालादि वा कथम्—त

मानतया[1] वस्तु विभावो भावपोषकृदिति। उद्दीपनविभावोऽपि चतुर्विधः। आलम्बनगुणचेष्टातदलङ्कृति[2]तटस्थभेदात्। आलम्बनगुणो रूपयौवनादिः। तच्चेष्टा हावभावादिका:, हारनूपुरादिकं तदलङ्कृतिः। मलयानिलचन्द्राद्याः तटस्थाः।

अथ अनुभावस्वरूपं निरूप्यते। कार्यभूतश्शरीरजः कटाक्षादिरनु[3]भावः। अत्र स्वाभाविककाकदृष्टिप्रेरितकटाक्षेऽतिव्याप्तिनिवृत्त्यर्थं शरीरज इति विशेषणम्। तावत्युक्ते निमित्तान्तरितस्वकटाक्षेऽतिव्याप्तिनिवृत्त्यर्थं कार्यभूत इति। नन्वत्र रसापेक्षया कार्यत्वं विवक्षितम्, किं वा स्थायीभावापेक्षया? नाद्यः। अनुभावैश्चेति तृतीयया कारणत्वाभिधानादन्योन्याश्रयप्रसङ्गात्। अनुभावे सति रसः रसे सत्यनुभाव इति नेतरः। भावकजनमनोऽवस्थायिनः स्थायीभावात् पूर्वभाविनां कामिनीजनकटाक्षादीनां तत्कार्यस्वाभावात् इति चेदुच्यते। अत्र स्थायित्वयोग्यनायकाद्याश्रितलौकिकरत्यादिकार्यत्वं विवक्षितम्। तथा च तादृश एव कटाक्षादिः [4]काव्याभिनयद्वारा भावकजनमनःप्रतिबिम्बिततया सरसहृदयस्थितरत्यादिभाव-

---

[1] यत्र विभावो—(प्र. रु. रत्नापणव्याख्याने रसप्रकरणे विभावनिरूपणसन्दर्भे)

[2] आलम्बनगुणश्चैवं तच्चेष्टा तदलङ्कृतिः।
तटस्थश्चेति विज्ञेयश्चतुर्थोद्दीपनक्रमः॥
आलम्बनगुणो रूपयौवनादिरुदाहृतः।
तच्चेष्टा यौवनोद्भूतहावभावादिका मताः।
नूपुराङ्गदहारादि तदलङ्करणं मतम्॥
मलयानिलचन्द्राद्याः तटस्थाः परिकीर्तिताः।
—(शृङ्गारतिलकम्ः)

[3] (i) कार्यभूतोऽनुभावः स्यात् कटाक्षादिः शरीरजः (प्र. रु. र. प्र)
(ii) अनुभावो विकारस्तु भावसंसूचनात्मकः (द. रू. ४ प्रकाशः)

[4] कार्याभिनयद्वारा—त

मनुभावयतीत्यनुभाव इत्युच्यते ।

तदुक्तम्—

भ्रूविक्षेपकटाक्षादिविकारो हृदयस्थितम् ।
भावं व्यनक्ति यस्सोऽयमनुभाव इतीरितः ॥

इति ।

अथ सात्विकभावा निरूप्यन्ते। अभिनयादिमुखेन परगत-सुखदुःखभावनायाम् अन्तःकरणस्यात्यन्तानुकूलत्वम् सत्त्वम्। तेन निर्वृत्ता भावास्सात्त्विकाः[1]। [2]तदुक्तम् भवति विभावादिदर्शनजन्यानु-रागसंवेदावस्थायिसञ्चारिधर्मा एव तन्मयीभवनरूपेण स्थायिशब्दाभि-धेयेन सामाजिकमनसोऽत्यन्तानुकूल्येनावस्थान्तरमापन्नाः स्तम्भादयो नाम [3]सात्विकाभावा भवन्ति। तदुक्तम् रत्नापणकारैः—'एवञ्च

---

[1] (i) परस्य सुखदुःखादेरनुभावेन चेतसः।
अत्यन्तेनानुकूल्येन येन तद्भावभावनम् ॥
तत् सत्त्वं तेन निर्वृत्ताः सात्त्विका इत्युदीरिताः ।
अनुभावत्वसामान्ये सत्यप्येषां पृथक्तया ॥
लक्षणं सत्त्वजत्वाद्धि ते च स्तम्भादयः स्मृताः ।
(भावप्रकाशः)

(ii) सत्त्वजा ये विकारा स्युः स्वीयास्वीयविभागतः ।
त एव सात्त्विका भावा इति विद्वद्भिरुच्यते ॥
(भावप्रकाशः प्रथमोऽधिकारः ४—१० पङ्क्ति)

(iii) पृथग्भावा भवन्त्यन्येऽनुभावत्वेऽपि सात्विकाः ।
सत्वादेव समुत्पत्तेस्तच्च तद्भाव भावनम् ॥
(दशरूपकम्—प्रकाश ४-४)

[2] एतदुक्तं भवति—त

[3] (i) स्तम्भः प्रलयरोमाञ्चौ स्वेदो वैवर्ण्यवेपथू ।
अश्रुवैस्वर्यमित्यष्टौ सात्विकाःपरिकीर्तिताः ॥
(प्र. रु. रसप्रकरणम् ।)

(ii) स्तम्भप्रलयरोमाञ्चाः स्वेदो वैवर्ण्यवेपथू ।
अश्रुवैस्वर्यमित्यष्टौ— (दशरूपकम्—प्र. -४-५)

स्थायिसञ्चारिसङ्घ एव जीवस्य मनोमयावस्थां प्राप्य कार्यकारणरूपेण द्विविधं बाह्यमाभ्यन्तरञ्च सात्त्विकं गणं सम्पादयतीति रहस्यम् ।

केचिदयं मनोमयवर्त्ती रत्यादिगणः पञ्चभूतात्मिकान्नमयक्षोभकतया मनोमयतादात्म्यापन्नं सीदत्यस्मिन् मनोमय इति व्युत्पत्त्या सत्वगुणोत्कर्षात् साधुत्वाच्च सत्त्वशब्दाभिधेयं प्राणमयं प्रविष्टः सात्त्विकत्वमनुभवति । तच्च प्राणस्य भूभागानुग्रहे स्तम्भः जलभागानुग्रहे बाष्पः । तीव्रतेजोऽनुग्रहे स्वेदः । तेजोवैपरीत्ये वैवर्ण्यम् । आकाशानुग्रहे प्रलयः । अनिलानुग्रहस्य मन्दमध्यमोत्कृष्टतया त्रैविध्ये क्रमेण रोमाञ्चवेपथुवैस्वर्याणि सम्भवन्तीति वदन्ति ।

अन्ये त्वाहुः—

भावान्तरनैरपेक्ष्येण [1]रसापरोक्षीकरणलक्षणो बलविशेषस्सत्वम् । तज्जन्यास्सात्विका इति ।

[2]अपरे त्वाहुः—

अन्नमयप्राधान्येन अभिव्यक्तत्वं [3]जन्यत्वम् ।

यद्यपि कटाक्षादि साधारणं तथापि पङ्कजादिशब्दवत् योगरूढ्या स्तम्भादय एव सात्त्विका इति ।

इतरे त्वाहुः—

---

[1] अन्ये पुनरन्नमयप्राधान्येनाभिव्यक्तं च लक्षणपरत्वजन्यत्वोपाधेः कटाक्षादिसाधारण्येऽपि पङ्कजादिवत् योगरूढत्वेन स्तम्भादय एव सात्विका इत्याहुः ॥
(प्रतापरुद्रीयरत्नापणव्याख्यायां रसप्रकरणे)

[2] रसपरोक्षे करणलक्षणो—त

[3] सत्त्वजन्यत्वम्—त

कणादशास्त्रप्रसिद्ध्या द्रव्यादित्रयवाचकार्थशब्दवत् अलङ्कारशास्त्र-प्रसिद्ध्या स्तम्भादिष्वेव सात्त्विकव्यवहार इति वर्णयन्ति। एतेन स्तम्भा-दयोऽनुभावलक्षणलक्षितत्वात् अनुभावा एव किन्न स्युरिति शङ्कापि निरस्ता भवति। अनुभावानामुक्तविधसत्वजन्यत्वाभावात्। तदुक्तं भावप्रकाशे–

परस्य सुखदुःखादेरनुभावेन चेतसः।
अत्यन्तेनानुकूल्येन येन तद्भावभावनम्॥
तत्सत्त्वं तेन निर्वृत्तास्सात्त्विका इत्युदीरिताः।
अनुभावत्वसामान्ये [1]सत्वेऽप्येषां पृथक्तया॥
लक्षणं सत्त्वजत्वाद्धि ते च स्तम्भादयस्स्मृता।

इति।

अथ व्यभिचारिस्वरूपं निरूप्यते।

'विशेषादाभिमुख्येन चरन्तो व्यभिचा[2]रिणः।

ते च निर्वेदग्लानिशङ्कासूयामदश्रमालस्यदैन्यचिन्तामोहस्मृतिधृतिव्रीडा-

---

[1] सत्यप्येषां—त

[2] (i) विशेषादाभिमुख्येन चरन्तो व्यभिचारिणः।
स्थायिन्युन्मग्ननिर्मग्नाः कल्लोला इव वारिधौ ]
(दशरूपकम्—प्र. ४-७)

(ii) व्यभी इत्युपसर्गौ द्वौ विशेषाभिमुखत्वयोः।
विशेषेणाभिमुख्येन चरन्ति स्थायिनं प्रति॥
वागङ्गसत्त्वयुक्ता ये ज्ञेयास्ते व्यभिचारिणः।
सञ्चारयन्ति भावस्य गतिं सञ्चारिणोऽपि ते॥
उन्मज्जन्तो निमज्जन्तः स्थायिन्यम्बुनिधाविव।
ऊर्मिवद्वर्धयन्त्येनं यान्ति तद्रूपतां च ते॥
(रसार्णवसुधाकरः–द्वितीयो विलासः १-३)

[1]हर्षावेगजडतागर्वविषादौत्सुक्यनिद्रापस्मारसुप्तिविरोधामर्षावहित्थोग्रतामतिव्याध्युन्मादमरणत्रासवितर्कभेदात् त्रयस्त्रिंशत्। [2]यानि लोके कार्यकारणसहकारिशब्दवाच्यानि तान्येव नाट्यकाव्ययोर्विभावानुभावसात्त्विकव्यभिचारिशब्दवाच्यानि भवन्ति । व्यभिचारिणां सहकारिताप्रकारस्तु वृद्धैरुक्तः ।

मज्जन्तश्च निमज्जन्तः कल्लोलास्ते यथार्णवे ।
तस्योत्कर्षं वितन्वन्ति यान्ति तद्रूपतामपि ॥
तथा स्थायिनी निर्मग्ना ह्युन्मग्ना व्यभिचारिणः ।
पुष्णन्ति स्थायिनं स्वांश्च तत्र यान्ति रसात्मतामिति ।

तत्र व्यभिचारिभावानामुदयेन भावोदयः । प्रशाम्यदवस्थया भावशान्तिः । परस्परविरुद्ध[3]रसाश्रययोः स्पर्द्धया सम्बन्धे भावसन्धिः । बहूनां भावानां [4]उपमर्दकतया समावेशने भावशबलता ।

अथ शृङ्गारादिरसविशेषाणां लक्षणमुच्यते ।

तत्र —

---

[1] चपलताहर्षावेग—त

[2] कारणान्यथ कार्याणि सहकारीणि यानि च ।
रत्यादेः स्थायिनो लोके तानि चेन्नाट्यकाव्ययोः ॥
विभावाः अनुभावास्तत्र कथ्यन्ते व्यभिचारिणः ।
व्यक्तः स तैर्विभावाद्यैः स्थायिभावो रसः स्मृतः ॥
(काव्यप्रकाशः–४ उ. २७–२८ का)

[3] रसाश्रययोः भावयोः स्पर्धया —त

[4] अन्योन्योपमर्दकतया—त

[1]विभावैरनुभावैश्च सात्त्विकैर्व्यभिचारिभिः ।
नीता सदस्यरस्यत्वं रतिः शृङ्गार उच्यते ॥
[2]विभावैरनुभावैश्च स्वोचितैर्व्यभिचारिभिः ।
हासस्सदस्यरस्यत्वं नीतो हास्य इतीर्यते ॥
[3]विभावैरनुभावैश्च स्वोचितैर्व्यभिचारिभिः ।
नीतस्सदस्यरस्यत्वं शोकः करुण उच्यते ॥
[4]विभावैरनुभावैश्च स्वोचितैर्व्यभिचारिभिः ।
नीतस्सदस्यरस्यत्वं उत्साहो वीर उच्यते ॥
[5]विभावैरनुभावैश्च स्वोचितैर्व्यभिचारिभिः ।
क्रोधस्सरस्यरस्यत्वं नीतो रौद्र इतीर्यते ॥

---

1 रम्यदेशकलाकालवेषभोगादिसेवनैः ।
प्रमोदात्मा रतिः सैव यूनोरन्योन्यरक्तयोः ॥
प्रहृष्यमाणा शृङ्गारो मधुराङ्गविचेष्टितैः ।
(दशरूपकम् प्र. ४-४८)

2 विकृताकृतिवाग्वेषै: आत्मनोऽथ परस्य वा ।
हासः स्यात्परितोषोऽस्य हास्यस्त्रिप्रकृतिः स्मृतः ॥
(दशरूपकम् प्र. ४-७५)

3 इष्टनाशादनिष्टाप्तौ शोकात्मा करुणोऽनु तम् ॥ (द. रू. ४-८१)

4 वीरः प्रतापविनयाध्यवसायसत्त्वमोहविषादनयविस्मयविक्रमाद्यैः ।
उत्साहभूः स च दयारणदानयोगात् त्रेधा किलात्र मतिगर्वधृतिप्रहर्षाः ॥
(दशरूपकम् प्र. ४-७२)

5 क्रोधो मत्सरवैरिवैकृतमयैः पोषोऽस्य रौद्रोऽनुजः
(दशरूपकम् प्र. ४-७४)

[1]इति साम्प्रदायिकाः ।

ननु नेमानि लक्षणानि युक्तानि। तल्लक्षणस्य [2]तद्रसाभासेऽतिव्याप्तेः। न च तत्तद्रसाभासेषु विभावादेरभावान्नातिव्याप्तिरिति वाच्यम् ।

स्वोचितविभावादीनां तत्रापि सम्भवात् सर्वविभावादिसम्पूर्तेः प्रागुक्तन्यायेन शृङ्गारादेरप्यसम्भवात् ।

ननु तत्तदाभासव्यतिरिक्तत्वे सतीति विशेषणान्नोक्तदोष इति चेन्मैवम्। [3]आरोपित शृङ्गाररसादौ शृङ्गाराभास इत्येवं तत्तदाभासानां निर्वचनादन्योन्याश्रयापत्तेः। शृङ्गारादिरसज्ञाने तत्तदाभासज्ञानं तत्तदाभासज्ञाने च तत्तदाभासज्ञानव्यतिरिक्तत्वेन शृङ्गारादिज्ञानमिति ।

ननु तत्तदाभासास्स[4]दस्य रस्यत्वं न नीयन्त इति नोक्तदोष इति चेन्न सम्भवद्विभावादिसम्पूर्तौ सदस्यरस्यत्वप्राप्तेरपि दुर्निवारत्वात्। किञ्च प्रागुक्तन्यायेन विभावादिविशेषणोपयोगं च पश्यामः। अतो नेमानि लक्षणानि युक्तानीति चेत् अत्रोच्यते—

---

1 विभावैरनुभाव च स्वोचितैर्व्यभिचारिभिः।।
भयं सदस्यरस्यत्वं नीतं प्राक्तं भयानकम्
विभावैरनुभावैश्च स्वोचितैर्व्यभिचारिभिः ।
नीतः सदस्यरस्यत्वं विस्मयोऽद्भुत उच्यते ।।
विभावैरनुभावैश्च स्वोचितैर्व्यभिचारिभिः ।
नीतः सदस्यरस्यत्वं शमः शान्त इतीष्यते ।
इति सम्प्रदायिकाः—'त' प्रतौ दृश्यन्ते

2 तत्तद्रसाभासेऽतिव्याप्तेः—त

3 आरोपितशृङ्गाररसो वा बाधितशृङ्गाररसो वा शृङ्गाराभास इत्येवं—त

4 सदस्यारस्यत्वं न—त

सरसकाव्यश्रवणनिपुणतमनटाभिनयो[1]भयभिन्नप्रयोज्यभाव्यभावकजनास्वाद्यमानरतिप्रकर्षानन्दः शृङ्गारः। तादृशहर्षप्रकर्षानन्दो हासः। तादृशशोकप्रकर्षानन्दः करुणा। तादृशोत्साहप्रकर्षानन्दो वीरः। तादृशक्रोधप्रकर्षानन्दो रौद्रः। तादृशभयप्रकर्षानन्दो-भयानकः। तादृशजुगुप्साप्रकर्षानन्दो बीभत्सः। तादृशविस्मयप्रकर्षानन्दोऽद्भुतः। तादृशशमप्रकर्षानन्दश्शान्तः।

अत्र सर्वत्र न तत्तदाभासेष्वतिव्याप्तिः। तेषां बाध्यत्वात्। अयं रसस्सामाजिकनिष्ठः। ननु नायकगत एवास्तु रसः। स्थायिभावस्य तन्निष्ठत्वात्। तत्प्रकर्षरूपत्वात् रसस्येति चेदुच्यते। किं नायकदृष्टो रसाश्रयो भवति ? किंवा श्रुतः, किं[2]वानुभूतः ? नाद्यः। साक्षाद्दृष्टनायकगतरत्यादेः व्रीडाजुगुप्सादिकरत्वादानन्दास्वादाभावात्। नापि द्वितीयतृतीयौ। तयोस्तदानीमसद्भावात्। नन्वन्यगतरत्यादिभावनामात्रेण कथं सामाजिकेष्वानन्दास्वाद इति चेदुच्यते। मालत्यादिशब्देभ्यो योषिन्मात्रप्रतीतौ तत्तद्योषिद्भिरहस्य स्मर्यमाणत्वेन सामाजिकेष्वानन्दाविर्भावोपपत्तेः। ननु कथं तर्हि भावकानाम् अश्रुधाराविर्भाव इति चेन्नैष दोषः। सम्भोगसमये स्त्रीणामधरदंशनादौ कृतिमद्दुःखानुभवसीत्कारादिवदुपपत्तेः। अन्यथा करुणैकफलरामायणादौ सामाजिकानां प्रवृत्तिरेव न स्यात्। नन्वन्तरङ्गत्वेन नटगत एवास्तु रस इति चेन्न। तस्यानुकरणमात्रोपक्षीणत्वेन

---

[1] उभयभिन्नभिन्नप्रयोज्या—त

[2] उतानुभूतः-त

तदाश्रयत्वायोगात्। तस्यानुभावप्रकाशनत्वे अभ्यासपाटवादप्युपपद्यते। अतः सामाजिकनिष्ठो रसः।

नन्वानन्दमूले शृङ्गारादौ वस्तुनि सुखास्वादः। शोकमूले तु करुणे कथं सुखास्वाद इति चेत्सत्यम्। अनुकार्ययोः स्त्रीपुंसयोश्शोकमूले करुणे न सुखास्वादः। सहृदयसामाजिके तु स एव विभावादिमहिम्ना निरतिशयानन्दरूपः परिणमतीति शब्दः रसस्सामाजिकनिष्ठ इति। स चायं रसो न वाच्यः। तद्वाचकरसशृङ्गारादिशब्दाश्रवणेऽपि रसप्रतीतेः। नापि लक्ष्यः। अनुपपत्तिप्रतिसन्धानं विनापि प्रतीयमानत्वात्। किन्तु वाक्यार्थतया प्रधानत्वेन तात्पर्याविशेषापरपर्याय[1]व्यञ्जनावृत्त्यैव प्रतीयते। कविसंरम्भस्य तत्रैव विश्रान्तेः। तदुक्तम्—

कवेर्विवक्षया यत्र प्राधान्यं परिकल्प्यते। भवेत्स एव वाक्यार्थ इति। अतोऽयं[2]रसो व्यङ्ग्यः। विभावादयः पुनः पदार्थाः। ननु विभावादयोऽपि स्वस्ववाक्यापेक्षया वाक्यार्थ एव। तदुक्तम्—

स्थायी भावस्सात्त्विको वा सञ्चारी वा क्वचित् क्वचित्।
भावो वाक्यार्थतामेति तत्तद्भावविशेषतः॥

इतीतिचेत्सत्यम्। तथापि प्रधानवाक्यार्थरसप्रतीतिं प्रत्यवान्तरव्यापाररूपत्वात् [3]पदार्थव्यवहारः। विभावादीनामवान्तरव्यापारत्वञ्च

---

[1] व्यञ्जनादित्वेन प्रतीयते—म

[2] रसोऽयं वाक्यार्थो व्यङ्ग्यः—त

[3] पदार्थत्वव्यवहारः—त

कारकज्ञापकवैलक्षण्येन व्यञ्जनध्वननचर्वणचमत्कारादिशब्दवाच्यरसगोचरज्ञान-विशेषोपयोगित्वादुपपद्यते। तदुक्तं लोचनकारैः विभावादिरत्र न ज्ञापको न कारकः। किन्तु चर्वणोपयोगीति।

अत एव विभावादिप्रयोज्यचर्वणादिशब्दज्ञानेन वाच्यज्ञाने प्रतीय-मानत्वमेव। रसस्यालौकिकत्वमिति गीयते। सोऽयं रस उत्पद्यत इति केचित् भणन्ति। तच्चिन्त्यम्। तस्य [1]नित्यमित्ययोगात्। न च रसस्य नित्यत्वे मानाभावः। तस्य आनन्दनिरतिशयाभिरामब्रह्मानन्दरूपत्वात्। ब्रह्मानन्दानुभवस्य च 'अजो नित्यश्शाश्वत' [2]इत्यादिश्रुतेः नित्यत्वसिद्धेः। न च रसः [3]कदलीफलसुखास्वादवत् अन्य एवेति वाच्यम्। अखण्डानन्दानु-भवविरोधात्। अतिरिक्तसुखान्तरकल्पनायां गौरवापत्तेश्च। न च वेदाभिमते स्वरूपज्ञानातिरिक्तवृत्तिज्ञानवदतिरिक्तसुखकल्पनमपि युक्तमेवेति वाच्यम्। वृत्तिज्ञानस्य 'कामस्सङ्कल्प' इत्यादिश्रुतिप्रमाणसिद्धत्वेन तत्र [4]कल्पनानवतारात्। अतो रसो नित्योऽभिव्यज्यत इति सिद्धम्। [5]अतो रसो विभावादि-भिरङ्कुरितः कन्दलितः पल्लवित इति व्यपदिश्यते। स चायं रसः स्वरूपसंवेदन सिद्ध इति नात्र [6]मानान्तरगवेषणं युक्तम्।

---

1 नित्यत्वेन उत्पत्त्ययोगात्–त
2 इत्यादिश्रुतेश्च सिद्धः–म
3 कदलीफलरसास्वादसुखवदन्य एवेति–त
4 कल्पनावतारात्–म
5 अत एव रसो–त
6 प्रमाणान्त–त

अथ रसाभासस्वरूपं निरूप्यते—

"[1]उन्मादप्रवृत्तेनाङ्गरसेन बाधितः प्रधानरसो रसाभासः'।

तदुक्तं रसार्णवसुधाकरे—

अङ्गेनाङ्गी रसःस्वेच्छावृत्तिवर्द्धितसम्पदा।
अमान्येनाविनीतेन स्वामीवाभासतां व्रजेदिति।
अङ्गरसस्य तृतीयांशानुप्रवेशो मर्यादोल्लङ्घनम्।

तदुक्तम्—

भावद्वयं प्रविष्टस्य प्रधानस्यैकभावतः।
रसानां दृश्यते यत्र तत्स्यादाभास[2]लक्षणम्॥ इति।

तत्र हास्यादिभूयिष्ठाः शृङ्गारादयः [3]आभासीभवन्ति तदुक्तम्—

---

[1] उन्मर्यादं प्रवृत्तेन अङ्गरसेन बाधितः प्रधानरसो रसाभासः।
(प्रतापरुद्रीये रसप्रकरणे रत्नापणव्याख्याने)

[2] भावप्रकाशे—षष्ठोऽधिकारः (१३३-२०)

[3] शृङ्गारो हास्यभूयिष्ठः शृङ्गाराभास ईरितः।
हास्यो बीभत्सभूयिष्ठो हास्याभास इतीरितः॥
वीरो भयानकप्रायो वीराभास इतीरितः।
अद्भुतः करुणाश्लेषादद्भुताभास उच्यते॥
रौद्रः शोकभयाश्लेषाद् रौद्राभास इतीरितः।
करुणो हास्यभूयिष्ठः करुणाभास उच्यते॥
बीभत्सोऽद्भुत शृङ्गारी बीभत्साभास उच्यते।
स स्याद् भयानकाभासो रौद्रवीरोपसङ्गमात्॥
(भावप्रकाशिका)

12*

हास्यो जुगुप्सा शृङ्गारहास्यौ शोकभयानकौ ।
भयानको रौद्रवीरौ तथा शृङ्गारविस्मयौ ॥

बीभत्सकरुणौ रौद्रशृङ्गारौ च यथाक्रमम् ।
शृङ्गारादीन् सम्प्रविश्य रसाभासान्वितेनिरे ॥ इति ।

[1]रसास्तदङ्गरसानुप्रवेशादाभासिनो भवन्ति ।
शृङ्गारे त्वयमपरो विशेषः ॥

[2]एकत्रैवानुरागश्चेत्तिर्यङ्म्लेच्छगतोऽपि वा ।
योषितो [3]बहुसक्तिश्चेद्रसाभासस्त्रिधा मतः ॥ इति ।

[4]नन्विदं तर्हि स्त्रीपुंसयोरेकत्रानुरागे जाते अन्यत्रानुरागप्रागभावेऽपि रसाभासस्स्यादिति चेन्मैवम् । एकत्रैवेत्यवधारणेन अन्यत्र अनुरागात्यन्ताभाव एव रसाभास इति सूच्यमानत्वात् । ननु तर्हि [5]पुंसो बहुनायिकानुरागेऽपि रसाभासस्स्यादिति चेन् । तथा च दक्षिणनायकानुरागस्यापि रसाभासत्वप्रसङ्ग इति चेन्मैवम् । दक्षिणनायकस्य एकस्यामेव अनुरागातिशयात् । तुल्योऽनेकत्र दक्षिण इति लक्षणन्तु अनेकनायिकानुवृत्तिमात्रेण तुल्यत्वपरम् । सर्वत्र रसाभासेषु बाध्यत्वमेव रसाभासताप्रयोजकम्

---

1 एवं नवापि रसा—इ

2 एकैकं वानुरागश्चेत्—त

3 बहुशक्तिश्चेत्—त

4 नन्वेवं तर्हि—त

5 पुंसापि बहु—त

म्लेच्छादिगतरसाभासस्यापि विभावाद्यसंपूर्ति[1]रसाभासत्वमस्त्येव ।

नन्वेवं तर्हि तिर्यगादिषु मुख्यरसाभावात् कथं चमत्कार इति चेदुच्यते। शुक्तिरजतं दृष्ट्वा प्रमदाकङ्कणनिर्माणाय प्रमोदमानपुरुष इव तिर्यगादिष्वपि चमत्कारस्सम्भवतीति सिद्धम्। तिर्यगादिषु रसाभास इति तत्र स्थायिभावानां यथाक्रममुदाहरणं स्वरूपं च तत्र आह ॥

विषयस्पृहा [2]रतिः। सम्भोगो नाम यूनोरन्योन्यानन्दजनकदर्शनालिङ्गनादिकर्म। तदुक्तं भावप्रकाशे—

'कामोपचारस्सम्भोगः कामस्त्रीपुंसयोस्सुखम् ।
सुखमानन्दसम्भेदः परस्परविमर्दतः ॥
उपचारस्तदानन्दकारकं कर्म कथ्यते ॥ इति ।

स्पृहालक्षणमपि तत्रैवोक्तम्—

आत्मोपभोगकरणं स्पृशन्तीप्रियवर्त्मना ।
या जहातीतरान् भोगान् सा स्पृहेत्यभिधीयते ॥ इति

यथा—

राक्षस्यो हृदि राजहंसदयिता किं मन्यते वायसं
किं कण्ठीरवकामिनी घटयितुं क्रोष्टारमुत्कण्ठते ।
[3]जाता किं जनकान्वये रघुकुलं प्राप्तान्यमालोकये

---

[1] बाध्यत्वमस्त्येव-त

[2] तत्र संभोगविषय इच्छाविशेषः रतिः ।
(प्रतापरुद्रीयम्–रसप्रकरणम्)

[3] जाता किं—'म' प्रतौ नास्ति ।

रामे मन्मथमन्मथे मम पुनश्चेतोरथो धावति ॥ १३१ ॥

यथा वा—

कदा नु भवदागमस्तव कदा नु सन्दर्शनं
कदा नु तव सङ्गमस्तव कदा समालिङ्गनम्।
कदा नु कुचमर्दनं तव कपोलयोश्चुम्बनं
कदा नु वद त्वदधरामृतपानमुर्वीसुते ॥ १३२ ॥

आत्मनः परस्य वा विकृताकृतिवेषसन्दर्शनश्रवणजन्यो मनोविकारो [1]हासः।

[2]स षड्विधः। [3]स्मितहसितविहसितोद्धसितापहसितातिहसित-भेदात्।

तत्र 'स्मितं नाम' विकासिनयनं हसनम्। किञ्चिल्लक्ष्य-द्विहसितम्।

---

[1] विकृतिदर्शनादिजन्यो मनोविकारो हासः
(प्र-रु. रसप्रकरणम्)

[2] विकृताकृतिवाग्वेषैः आत्मनो वा परस्य वा।
हासः स्यात् परिपोषेऽस्य हास्यस्त्रिप्रकृतिः स्मृतः॥
(भावप्रकाशः)

[3] स्मितमिह विकसन्नयनं किञ्चिल्लक्ष्यद्विजं हसितम्।
मधुरस्वनं विहसितं साङ्गशिरःकम्पमुद्धसितम्॥
अपहसितं सास्राक्षं विक्षिप्ताङ्गं भवत्यतिहसितम्।
द्वे द्वे हसिते चैषां ज्येष्ठे मध्येऽधमे क्रमशः॥
(भावप्रकाशः)

मधुरस्वनं विहसितम्। सांशशिरःकम्पनम् उद्धसितम्। साम्राक्षमवहसितम्। विक्षिप्ताङ्गमतिहसितम्।

[1]तत्रोत्तमस्य स्मितहसिते। मध्यमस्य विहसितोद्धसिते। अधमस्यावहसितातिहसिते ॥

तत्राद्यं यथा—

दंठूण तं सीमं सिअकंतिं जं खु राहवो किअवो।
गुरुअणणिअंतमाणं [2]रूइअई ईखणं व दूइआकंजं ॥ १३३ ॥

छाया– दृष्ट्वा तत्र सीतां स्मितकान्तिं खलु यां राघवः कृतवान्।
गुरुजननिमन्त्र्यमानां रचितवती नैव दूतिकाकृत्यम्॥ १३३ ॥

द्वितीयं यथा—

[3]संचोदितां राघवलक्ष्मणाभ्यां
तदिङ्गिताभ्यां तरसा निशाटीम्।
पुनः पुनः [4]कामवशादटन्तीं
जहास दृष्ट्वा जनकेन्द्रपुत्री ॥ ॥ १३४ ॥

तृतीयचतुर्थपञ्चमषष्ठानि यथा—

---

[1] उत्तमस्य स्वकीयपरकीयविकारदर्शनात् क्रमेण स्मितहसिते—
(प्रतापरुद्रीये–रत्नापणव्याख्याने रसप्रकरणे)

[2] रुआवदि–त

[3] सा चोदिता–म

[4] रामवशादटन्तीं—त

पीत्वा बलात् मधुवने मधु वानरेषु
तद्रक्षिणां विमतिनां निजदेवमार्गम् ।
सन्दर्शयत्सु कपयः कति नातिहासान्
आतेनिरे विहसितोद्धसितावहासान् ॥ १३५ ॥

[1]इष्टजनवियोगादिना आत्मनि दुःखातिभूमिश्शोकः । यथा—

सिन्धुः पल्वलवत्सुलङ्घ इति मामुक्तं त्वया मारुते
स्वामिन् राघव तत्तथैव न मृषा तर्ह्यद्य पाथोनिधिः ।
एषोऽभ्रंकषवीचिवेलति कथं जाने न तत्कारणं
नूनं माद्यति मत्क्रियाश्रुनयनैर्लङ्काम्बुयन्त्रोद्धतैः ॥ १३६ ॥

यथा वा—

सिन्धावन्तरभाजिलक्ष्मण कथं सीताहरस्साध्यते
चापाद्राम बधान सम्प्रति चितैरक्षीणबाणोत्करैः ।
अद्याब्धिं नु कथं तरामि भगवन् को वा [2]रवोद्याम्बुधिः
[3]विश्लेषात्मक एष भूमिसुतया धैर्येण तं लङ्घय ॥ १३७ ॥

---

[1] (i) बन्धुव्यापत्तिदौर्गत्यधननाशादिभिः कृतः ।
चित्तक्लेशभरः शोकः-(रसार्णवसुधाकरः-द्वि- उल्लासः-१४०)

(ii) सर्वेन्द्रियपरिक्लेशः शोक इत्यभिधीयते ।
सत्त्वादिपरिभेदेन स त्रिधा परिपठ्यते ॥
(भावप्रकाशः—द्वितीयोऽधिकारः)

[2] रवोद्याम्बुधिः—म

[3] विश्लेषोत्कर एष—त

[1]शत्रुकृतापकारेण मनःप्रज्वलनं क्रोधः ।

यथा—

रे रे जल्पसि मेघनाद महताऽमोघेन[2]दानेन किं
सातः पूर्वपराक्रमक्रमकथा सद्यो निरर्थीकृता ।
अद्य त्वं ननु तिष्ठ सङ्गरमुखे बाणै रवेणागतैः
त्वामन्तर्द्धिमुपानयामि निबिडैर्मायाप्रयोगं विना ॥ १३८ ॥

[3]उत्कृष्टकार्ये दृढप्रयत्न उत्साहः । लोचनकारस्तु –'अहमेवं-विध इत्यभिमानात्मक उत्साहः' इत्याह ॥ यथा—

[4]प्राक्चारं विनिरुद्ध्य नीलनिवसानीकैः पुनर्दक्षिणं
संरुद्ध्याङ्गदतिष्ठ पश्चिममसौ वायोस्सुतो रोत्स्यति ।

---

1 (i) वधावज्ञादिभिश्चित्तज्वलनं क्रोध ईरितः ।
(र.सुधाकर—द्वितीयो विलासः १२७)

(ii) तेजसो जनकः क्रोधः- (भावप्रकाशः—द्वितीयोऽधिकारः)

2 नादेन—त

3 (i) उत्साहः सर्वकृत्येषु सत्वरा मानसी क्रिया ।।
(भावप्रकाशः—द्वितीयोऽधिकारः)

(ii) शक्तिधैर्यसहायाद्यैः फलश्लाघ्येषु कर्मसु ।
सत्वरा मानसी वृत्तिः उत्साहस्तत्र विक्रियः ॥
(भावप्रकाशः—द्वितीयो विलासः १२४)

(iii) लोकोत्तरेषु कार्येषु स्थेयान् प्रयत्नः उत्साहः—
(प्रतापरुद्रीयम् रसप्रकरणम्—५)

4 प्राग्द्वारं विनिरुद्ध्य—त

रोत्स्याम्युत्तरमुत्तरैः किमधुना मत्सायका निस्सृता
रोत्स्यन्ते प्रथमेऽद्य रावणवपुर्द्वाराणि सर्वाण्यमी ॥ १३९ ॥

यथा वा—

त्वं राम सर्वभुवनानि बिभर्षि मात्रा-
कृत्वा तदीयहृदये वसतिं करोषि।
तादृग्बलिस्त्रिपदिसंमितभूमिदाता
तुल्यौ न [1]ते मुनिवरोऽपि महेन्द्रवासी ॥ १४० ॥

[2]यथा—

श्वानं विवर्धयति भिक्षुविवादभाजं
गृध्रेण संविवदमानमुलूकमेकम् ।
धर्मेण जीवयति तं मृतविप्रबालं
शम्बूकशिक्षक भवान् खलु धर्मशूरः ॥ १४१ ॥

[3]रौद्रदर्शनश्रवणादिनानर्थाशंसनं भयम्। तच्च स्त्रीनीचादीनां स्वाभाविकमिति हेमचन्द्रः ।

---

[1] मुनिखरोऽपि—म

[2] यथा वा—त

[3] (i) भयं चित्तस्य चलनं तच्च प्राहुरनेकधा।
स्वरूपमेवमाचार्यैः स्थायिना कथितं पुरा ॥
(भावप्रकाशः—द्वितीयोऽधिकारः)

अन्ये तु सर्वं कृतकमेवेत्याहुः।

यथा—

वत्साकम्पन देव रावण ययुः क्षेमं चिराद्दण्डकाः
श्रीरामेण खरादयोऽपि रथिका नामावशेषीकृताः।
रामः कुत्र स तूणचापविशिखो[1]मासोऽनुधावन्निह
प्राप्तो हन्ति शरैर्न पश्यसि कथं हा रक्ष रक्षाधुना॥ १४२॥

[2]यथा—
.......
रामः पश्चात्सविशिखधनू राम एवाग्रभागे
रामः पार्श्वद्वितयचलितो राम एवान्तरिक्षे।
रामोऽधस्तात् [3]अपि ह मम तनोरन्तरे राम एव
क्वाहं वर्त्ते स्वयमिति भणन् रावणः प्राप लङ्काम्॥ १४३॥

---

(ii) भयं तु मन्तुना घोरदर्शनश्रवणादिभिः।
चित्तस्यातीव चाञ्चल्यं..............
(रसार्णवसुधाकरः द्वितीयो विलासः १४९)

(iii) रौद्रसन्दर्शनादिभिरनर्थाशङ्कनं भयम्
(प्रतापरुद्रीयम्—रसप्रकरणम्—६)

[1] मांसोऽनुधावन्निव—म

[2] यथा वा—त

[3] अपि ह च तनोः—म

[1]अर्थानां दोषसन्दर्शनश्रवणजन्यो मनस्सङ्कोचो जुगुप्सा ।)

निद्रानिरीतवसनप्रकटाग्रदन्ता-
लालासंसिक्तहृदयान् परिलूनकर्णा ।
अव्यक्तवर्णरचनानिखिलप्रजानां
निन्द्याकृतिर्व्यजनि शूर्पणखा तदानीम् ॥ १४४ ॥

[2]अपूर्वार्थसन्दर्शनाच्चित्तविस्तारो विस्मयः ।

'यो बाल्ये निहतक्षपाचरगणो [3]मौन्यध्वरस्या......
.........स्पर्शनपूतगौतमवधूर्भग्नोग्रबाणासनः ।

---

[1] (i) सर्वेन्द्रियार्थगर्हैव जुगुप्सेत्यभिधीयते ।
(भावप्रकाशः द्वितीयोऽधिकारः)

(ii) अहृद्यानां पदार्थानां दर्शनश्रवणादिभिः ।
सङ्कोचनं यन्मनसः सा जुगुप्सा ॥
(र. सुधाकरः—द्वि. विलासः—१४६)

[2] (i) विविधः स्यात्स्मयो हर्ष इति विस्मयतेऽथ वा
(भावप्रकाशः—द्वितीयोऽधिकारः)

(ii) लोकोत्तरपदार्थानां तत्पूर्वालोकनादिभिः ।
विस्तारश्चेतसो यस्तु विस्मयः स निगद्यते ॥
(र. सुधाकरः—द्वि विलासः—१२६)

[3] मौन्यध्वरस्यादितपादस्पर्शन—त

जेता क्षत्रिय वैरिणो हतखरः प्रोद्दण्डताबालिनो
बद्धाब्धिर्महिमास्य रावणरिपोर्निर्वर्ण्यते केन वा ? ॥ १४५ ॥

वैराग्यादिना निर्विकारचित्तत्वं शमः।[1]    यथा—

त्रिध्युक्तं कृतमात्मकर्मनिखिलं कृत्वैव रामार्पणं
लोकं राममयं विचिन्त्य रचितश्रीरामनामस्मृतिः ।
श्रीरामायणमन्त्रकर्णनपरः श्रीराममन्त्रं जपन्
यः पुण्यो नयतीह कालकलिकामन्यो न धन्यस्ततः॥ १४६ ॥

शृङ्गाररसस्यालम्बनविभावो यथा—

शृङ्गारनामरसदैवमनन्यजन्य
तातं स्वयं विलसितावयवाभिरामम् ।
लीलावसन्त[2]समये समवेक्ष्य रामं
साकेतयौवतमभूदनिमेषनेत्रम्                    ॥ १४७ ॥

उद्दीपनविभावो यथा—

उल्लङ्घ्यात्मनि यौद्धरि प्रतिभटे रोमालिवेलागुणं
मध्यस्थेऽपि वलित्रये क्षितिभुवो बाल्ये विभङ्गं गते ।

---

[1] शमो वैराग्यादिना निर्विकारचित्तत्वम

(प्र. रु. रसप्रकरणम्)

[2] समयं समवेक्ष्य—त

काञ्चीकिङ्किणिभूषणोज्वलमणीदैवप्रदीपावली
केशव्रातमयूरपिञ्छविरुदैरुज्जृम्भते यौवनम् ॥ १४८ ॥

अनुभावो यथा —

सख्येपाद्य विवाहपीठकलिता सीता समन्दस्मिता
(स्वंरथं) चलहोमधूमविधुतिव्याजाद्वहन्ती करं ।
श्रीरामं स्वकटाक्षयौवनवनीसम्भूत[1]सज्जिह्लिका
सामर्थ्येन वशीकरोत्वलमहो [2]मौग्ध्यं त्वया कल्पितम् ॥१४९॥

अथ सात्विकभावानां स्वरूपमुदाहरणञ्च ।

तत्र [3]स्तम्भो नाम रागभीत्यादिसम्भवं निष्क्रियाङ्गत्वम् ।

यथा—

विलोक्य रामं मिथिलाङ्गनास्तदा
सुवर्णसौधानधिरुह्य सत्वरम् ।
[4]स्थितास्स्मरद्विस्मयभूयनिश्चलाः
सुवर्णबन्धा इव सालभञ्जिकाः ॥ १५० ॥

---

1 सन्मूलिका—त

2 मौग्ध्यं क्व वास्यागतम्—त

3 (i) चेष्टाविघातः स्तम्भः—भावप्रकाशः-द्वितीयोऽधिकारः
(ii) स्तम्भो हर्षभयामर्षविषादाद्भुतसम्भवः
(र. सुधाकरः—प्रथमो विलास-२०२)

4 स्थितास्फुरद्विस्मयरागनिश्चला—त

[1]सुखदुःखादिना इन्द्रियमूर्च्छनं प्रलयः ।

यथा —

रामाकारनिमग्नमक्षियुगलं [2]तद्गीः श्रुतैर्वर्जिते
बाधिर्यं श्रवणे गते [3]अतितरां त्वं मे भवत्यानिले ?
सख्यालग्नतदीयमानसमहासाहाय्यमेत्याधुना
चित्तं तु स्थितमात्रमेतदखिलं रामाय विज्ञाप्यताम् ॥ १५१ ॥

[4]सुखाद्यतिशयाज्ञातो रोमविकारो रोमाञ्चः ।

---

[1] (i) प्रलयो दुःखघाताद्यैः चेष्टा तत्र विसंज्ञता ॥
(र. सुधाकरः—प्रथमो विलासः ३०९)

(ii) प्रलयस्तम्भकम्पाश्रुस्वेदरोमोद्गमादयः
(भावप्रकाशः—द्वितीयोऽधिकारः)

[2] तद्गिश्रुतैर्वर्जिते—व

[3] मूलमातृकायां-'सतितरा' इत्यपपाठो वर्तते । स तु 'अतितरां' इति शोधितः । तत्र 'श्रवणे गते इति द्विवचनान्तम् । अतः 'ईदूदेद्द्विवचनमिति' प्रगृह्यसंज्ञा ततः प्रकृतिभावः ।

[4] (i) सुखाद्यतिशयाज्जाता रोमाञ्चो रोमविक्रिया ।
(प्रतापरुद्रीयम्—रसप्रकरणम्)

(ii) रोमाञ्चो विस्मयोत्साहहर्षाद्यैस्तत्र विक्रियाः ।
रोमोद्गमोल्लासघनगात्रसंस्पर्शनादयः ॥
(र. सुधाकरः-प्र. विलासः-३०५)

मुहुर्निरस्यन्त्यपि रोमकण्टकं
निशम्यते क्षेममुदार[1]मद्गिरा ।
विलोक्य मुद्रामपि राममैथिली
बभूव सा लालितसान्द्रकण्टका ॥ ॥ १५२ ॥

[2]रागरोषादिना गात्रकम्पनं वेपथुः ।

यथा—

विभोस्सुदुस्पर्शतरेण सा त्वयि
........स्थिर स्ने(ह) निषिक्तवर्त्तिका ।
निशाचरीणामुरुघोरतर्जनै-
र्बहिर्गता दीपलतेव कम्पते ॥ १५३ ॥

रतिधर्मश्रमादिजन्यो जलोद्गमः [3]स्वेदः ।

---

[1] मस्थिरा—व

[2] (i) रागरोषभयादिभ्यो वेपथुर्गात्रवेपनम् ।
(प्रतापरुद्रीयम् रसप्रकरणम्)

(ii) वेपथुर्हर्षसन्त्रासजराक्रोधादिभिर्भवेत् ।
तत्रानुभवाः स्फुरणगात्रकम्पादयो मताः ॥
(र. सु. प्र.वि. २०७)

[3] (i) वपुर्जलोद्गमः स्वेदो रतिघर्मश्रमादिभिः ॥
(प्रतापरुद्रीयम्--रसप्रकरणम्)

स्वेदो वेपथुरेव च 'भावप्रकाशः--द्वितीयोऽधिकारः'

(iii) निदाघहर्षव्यायामश्रमक्रोधभयादिभिः स्वेदः सञ्जायते--
(र. सुधाकरः-प्रथमो विलासः)

यथा—

रघूत्तम त्वद्विरहाग्नितप्ता
स्विन्नप्रतीका शरकाण्डपाण्डुः ।
विभाति तप्तोपकृशानुकीलं
वृतेव सीता नवनीतपुत्री ॥ १५४ ॥

[1]विषादमदरोषादिना वर्णान्यत्वं विवर्णता ।

यथा—

सुवर्णगौरावयवैरुपेता
त्वया वियोगाद्धवलीभवन्ती ।
रक्षोगृहे राम विभाति सीता
रसानुलिप्तेव सुवर्णपुत्री ॥ १५५ ॥

[2]दुःखरोषहर्षादिना नेत्रोद्भवं जलमश्रु ।

---

[1] (i) विषादातपरोषाद्यैः वैवर्ण्यमुपजायते ।
मुखवर्णपरावृत्तिकार्श्याद्यास्तत्र विक्रियाः ॥
(र. सुधाकरः—प्रथमो विलासः—३०८)
(ii) विषादमदरोषादेर्वर्णान्यत्वं विवर्णता— (प्र· रु. रसप्रकरणम्)

[2] (i) विषादरोषसन्तोषधूमाद्यैरश्रु तत्क्रियाः ।
बाष्पबिन्दुपरिक्षेपनेत्रसंमार्जनादयः ॥
(र. सुधाकरः-प्रथमो विलासः—३०९)
(ii) अश्रु नेत्रोद्भवं वारि दुःखरोषप्रहर्षजम् । (प्र. रु. र. प्र)

यथा—

मायामहिम्ना तव रामचन्द्र
विलङ्घितोऽभूल्लवणार्णवोऽयम् ।
सीताश्रुसञ्जातभवस्तु सिन्धुः
न मादृशानामपि लङ्घनीयः ॥ १५६ ॥

[1]गद्गदभाषित्वं वैस्वर्यम् । यथा—

रामाधुनेह परलोकनिदानभूतं
रामेति नेत्रयुगलं गिरिसन्दधाना ।
साप्युग्रगद्गदगदप्रतिरुद्धकण्ठा
नो मुक्तिमेति मिथिलेशसुता विचित्रम् ॥ १५७ ॥

अथ व्यभिचारिणां निर्वेदादीनां
स्वरूपमुदाहरणं च प्रदर्श्यते ।

तत्र [2]निर्वेदो नाम दुःखेर्ष्यातत्त्वबोधादिना निष्फलत्वज्ञानम् ।

---

[1] (i) मतं गद्गदभाषित्वं वैस्वर्यं प्रमदादिजम् ।
(प्रतापरुद्रीयम् रसप्रकरणम्)
(ii) वैस्वर्यं सुखदुःखाद्यैस्तत्र स्युर्गद्गदादयः (र. सु-१वि.३०६)

[2] (i) दुःखेर्ष्यातत्त्वबोधादेः निर्वेदो निष्फलत्वधीः ।
तत्र चिन्ताश्रुनिश्वासदीनताः सम्भवन्ति च ॥
(प्रातापरुद्रीयम्-रसप्रकरणम्)

यथा—

किं मात्रा मे [1]विहितकुलया किं गजैः किं तुरङ्गैः ?
किं राज्यास्या नयनयशसा किन्तु साकेतपुर्या ।
किं वा प्राणैरलमलमधुना तं त्रिलोकीमहेन्द्रं
सर्वाधारं सुगुणवसतिं राममेवानुयामि ॥ १५८ ॥

[2]बलापचयो ग्लानिः । यथा—

रामवियोगग्लान्या दुर्बलदेहा कथंचनापि तृणम् ।

---

(ii) तत्त्वज्ञानाच्च दौर्गत्यादापदो विप्रयोगतः ।
ईर्ष्यादेरपि नैष्फल्यमतिः निर्वेद उच्यते ॥
(र. सु. द्वि. वि. ७)

(iii) तत्त्वज्ञानापदीर्ष्यादेः निर्वेदः स्वावमाननम् ।
तत्र चिन्ताश्रुनिःश्वासवैवर्ण्योच्छ्वासदीनताः ॥
(द. रू. ४प्र–९ श्लो)

[1] विहतकुलया—त

[2] (i) ग्लानिर्बलस्यापचयो वैवर्ण्यारतिकारणम् ।
(प्रतापरुद्रीयम्—रसप्रकरणम्)

(ii) रत्याद्यायासतृट्क्षुद्भिः ग्लानिर्निष्प्राणतेह च ।
वैवर्ण्यकम्पानुत्साहक्षामाङ्गवचनक्रियाः ॥
(द. रू.–४ प्र–१० श्लो)

(iii) आधिव्याधिजरातृष्णाव्यायामसुरतादिभिः ।
निष्प्राणता ग्लानिरत्र क्षामाङ्गवचनक्रिया ॥
तापानुत्साहवैवर्ण्यनयनभ्रमणादयः ॥
(र. सु. द्वि. वि.—१२–१३)

धृत्वा करेण सीता विनमितवदना जगर्हे लङ्केशम् ॥ १५९ ॥

[1]अनिष्टागमोत्प्रेक्षा शङ्का । यथा—

सौमित्रे त्वमुपागतोऽसि विजने हित्वा कथं मैथिलीम्
वामाक्ष्ङ्ग मम कम्पते तरुगतो घोरं खगः कूजति ।
दृश्यन्ते हरिणाङ्गनाश्च पुरतो बाष्पाविलप्रेक्षणाः
सीता प्राणिति कश्चिदद्य मुदिता मां यानुयाता वने ॥ १६० ॥

[2]परोत्कर्षासहिष्णुत्वमसूया । यथा—

---

1 (i) अनिष्टाभ्यागमोत्प्रेक्षा शङ्का रोपादिकारणम् । (प्र. रु. र. प्र.)

(ii) अनर्थप्रतिभा शङ्का परक्रौर्यात्स्वदुर्नयात् ।
कम्पशोषाभिवीक्षादिरत्र वर्णस्वरान्यता ॥

(द. रू. ४—प्र-११ श्लो)

(iii) शङ्का चौर्यापराधादेः स्वानिष्टोत्प्रेक्षणं मतम् ।
तत्र चेष्टा मुहुः पार्श्वदर्शनं मुखशोषणम् ॥
अवकुण्ठनवत्रर्ण्यकण्ठसादादयोऽपि च ।
शङ्का द्विधेयमात्मोत्था परोत्था चेति भेदतः ॥
स्वकार्यजनिता स्वोत्था प्रायो व्यङ्ग्येयमिङ्गितैः ।
इङ्गितानि तु पक्ष्मभ्रूतारकादृष्टिविक्रियाः ॥

(र. सु. द्वि. वि. २६—२८)

2 (i) परोत्कर्षासहिष्णुत्वमसूया परिकीर्तिता

(प्र. रु. र. प्र.२३ श्लो)

कैकेयीतनयो यमेति विभवं राज्यस्य निष्कण्टकं,
वाञ्छन् सम्प्रति रामचन्द्र चलितौ संहर्तुमावां वने।
सेनाभिर्भवतस्सहैव भवता तूष्णीं कथं [1]स्थीयते
ज्ञातैर्वैभवमस्य पौरुषजुषा [2]द्रष्टुं कथं शक्यते ॥ १६१ ॥

मदिरादिकृतो मोहहर्षव्यतिकरो मदः[3]।

---

(ii) परोत्कर्षाक्षमासूया गर्वदौर्जन्यमन्युजा।
दोषोक्त्यवज्ञे भ्रुकुटिमन्युक्रोधेङ्गितानि च॥
(द. रू. ४ प्र–१७ श्लो)

(iii) परसौभाग्यसम्पत्तिविद्याशौर्यादिहेतुभिः।
गुणेऽपि दोषारोपः स्यादसूया तत्र विक्रिया॥
मुखोपवर्तनं गर्हाभ्रूभेदानादरादयः॥
(र. सु. द्वि. वि–८४–८५)

1 नीयते–त

2 दृष्टं–त

3 (i) हर्षोत्कर्षो मदः पानात् स्खलदङ्गवचोगतिः।
निद्रा हासोऽत्र रुदितं ज्येष्ठमध्याधमदिषु॥
(द. रू. ४ प्र–श्लो २१)

(ii) मदस्वानन्दसंमोहसम्भेदो मदिराकृतः।
स त्रिधा तरुणो मध्योऽपकृष्टश्चेति भेदतः॥
दृष्टिः स्मेरा मुखे रागः सस्मिताकुलितं वचः।
ललिताविद्धगत्याद्याश्चेष्टाः स्युस्तरुणे मदे॥
(र. सु. द्वि. वि. १६–१७)

यथा—

सीतां पङ्क्तिमुखो जगत्त्रय[1]जयश्रीलाभमात्तो बलात्
क्रोशन्तीं रघुनाथ राम सुगुणारामेति वाचोच्चकैः।
हत्वा स्वस्य पुरे निधाय मुदितो मेने कृतार्थं स्वयं
स्वात्मानं न पुनर्विवेद स निजग्रीवावलग्नोरगीम् ॥ १६२ ॥

[2]श्रमो नाम अध्वरत्यादिजन्यः खेदः।

यथा—

साकेते रघुनायकेऽवतरिते रङ्गेषु वाराङ्गना
स्वीयास्तान्तकटाक्षदृष्टिकलना संज्ञाभिराकारिताः।

---

1 जयश्रीलाभमर्थो बलात्—म

2 (i) श्रमः स्वेदोऽध्वरत्यादेर्जातः स्वेदातिभूमिकृत्।
(प्र' रु. २ प्र.)

(ii) श्रमः स्वेदोऽध्वरत्यादेः स्वेदोऽस्मिन् मर्दनादयः॥
(द. रू- ४ प्र-१२ श्लो)

(iii) श्रमो मानसखेदो स्यादध्वनृत्तरतादिभिः।
अङ्गमर्दननिःश्वासौ पादसंवाहनं तथा॥
जृम्भणं मन्यदानं च मुखनेत्रविकूणनम्।
सीत्कृतिश्चेति विज्ञेया अनुभावाः श्रमोद्भवाः॥
(र. सु. द्वि-वि—१४-१५ श्लो)

[1]दासेराग्रकरेऽवलम्ब्य शिथिलैरङ्गैरनङ्गोत्सवैः
निश्वासोच्चलनासिकाभ्रमणयोर्निर्यान्ति वीथौ शनैः ॥ १६३ ॥

[2]कार्येषु मन्दोद्यमत्वमालस्यम् । यथा—

सौमित्रे दलयेन्द्रचापमिषुभिश्छिन्ध्यम्बुधारा न वा
हिंस्रा मे विलुनीहि चञ्चलतमामभ्राञ्चलश्चञ्चलाम् ।
मौनाक्षैर्गतगर्जितान् कुरुचरान् नागाशुगान् केतकी
वातान् पायय पान्थ रक्षिणविधेः
पुण्यं यशो यास्यसि ॥ १६४ ॥

[3]सत्त्वत्यागादनौद्धत्यं दैन्यम् । यथा—

---

1 दासीरग्रकरेऽवलम्ब्य—त

2 (i) मन्दोद्यमत्वमालस्यं कर्तव्येषु प्रकीर्त्यते । (प्र. रु. र. प्र.)
(ii) आलस्यं श्रमगर्भादेः जैह्म्यजृम्भासितादिमत् ॥
(द. रू. ४प्र—२७ श्लो)

(iii) स्वभावश्रमसौहित्यगर्भनिर्भरतादिभिः ।
कृच्छ्रात् क्रियोन्मुखत्वं यत् तदालस्यमिह क्रिया ॥
अङ्गभङ्गः क्रियाद्वेषो जृम्भणाक्षिविमर्दने ।
शय्यासनैकप्रियतानिद्रातन्द्र्यादयोऽपि च ॥
(र. सु. द्वि. वि. ६०-६१ श्लोकौ)

3 (i) सत्त्वत्यागानौद्धत्यं दैन्यं कार्पण्यसम्भवम् । (प्र. रु. र. प्र.)
(ii) दौर्गत्याद्यैरनौजस्यं दैन्यं कार्ष्ण्यामृजादिमत् ॥
(द. रू. ४. प्र-१४ श्लो)

श्रीराम त्वयि राज्यपालिनि शिवब्रह्मामरेन्द्रादयो
नीत्वा दत्तमुपायनानि सुचिरं स्थित्वा यदर्थं सुराः ।
त्वद्दौवारिकमेत्य सान्त्वनगिरा स्वं दैन्यमाचक्षते
त्वत्सन्दर्शनमीदृशं वयममी लप्स्यामहे वा कथम् ॥ १६५ ॥

[1]भयदुःखादिना मूर्च्छनं मोहः । यथा—

इन्द्रारातिविभोः प्रतापविभवादानीतमेतच्छिरो
रामस्येति पुरो निगद्य निहितं [2]मायीखरद्विट्शिरः ।
पश्यन्त्या वपुषो विदेहदुहितुः प्राणास्तदा निर्गता
विद्युज्जित्स्ववचोऽन्वयं कलयितुं नूनं पुनस्सङ्गताः ॥ १६६ ॥

---

(iii) हृत्तापदुर्गतित्वाद्यैः नैश्चिन्त्यं हृदि दीनता ।
अत्रानुभावा मालिन्यगात्रस्तम्भादयो मताः ॥
(र. सु. द्वि. वि. ११ श्लो)

1 (i) मोहस्तु मूर्च्छनं भीतिदुःखावेशानुचिन्तनैः । (प्र. रु. र. प्र.)
(ii) मोहो विचित्तता भीतिदुःखावेशानुचिन्तनैः ।
तत्राज्ञानभ्रमाघातघूर्णनादर्शनादयः ॥ (द. रू. प्र ४–२६ श्लो)
(iii) आपद्भीतिवियोगाद्यैः मोहश्चित्तस्य मूढता ।
विक्रियास्तत्र विज्ञेया इन्द्रियाणां च शून्यता ॥
(र. सु. द्व. वि. ५३ श्लो.)

2 माया—त

पूर्वानुभूतविषयं ज्ञानं [1]स्मृतिः ।

सा माता स पिता सायोध्या
 ते च मामका वासाः ।
[2]ददति सुभटतुरङ्गं स्मेतेति वने
 स राघवो वत्साः ॥ १६७ ॥

यथा—

विंकमकिंतिगुणाइं सीआ संमरदि तुं वआआरं ।
हे रामणामहेअ रामगुणारामरामभंदवति ॥ १६८ ॥

छा—विक्रमकीर्त्तिगुणान् सीता संस्मरति तवाकारम् ।
हे रामनामधेयं रामगुणारामरामभद्रेति ॥ १६८ ॥

---

[1] (i) पूर्वानुभूतिविषयं ज्ञानं स्मृतिरुदाहृता ॥
(प्र. रु. र. प्र ३० श्लो)

(ii) सदृशज्ञानचिन्ताद्यैः संस्कारात् स्मृतिरत्र च ।
ज्ञानत्वेनार्थभासिन्यां भ्रूसमुन्नयनादयः (द.रू.प्र. ४-२० श्लो)

(iii) स्वास्थ्यचिन्तादृढाभ्याससदृशालोकनादिभिः ।
स्मृतिः पूर्वानुभूतार्थप्रतीतिस्तत्र विक्रियाः ॥
कम्पनोद्वहने मूर्ध्नोः भ्रूविक्षेपादयोऽपि च ॥
(र. सु. द्वि. वि ६८–६९)

[2] ददति सुबलतुरङ्गं स्मेतेति—ड

[1]मनसो निस्स्पृहत्वं धृतिः ।

रामेऽवति द्वीपवतीं धरित्रीं
सम्पूर्णकामानि मनांसि नृणाम् ।
निवातदेशाहिततैलपूर्ण-
स्थालीप्रदीपाङ्कुरवद्विरेजुः ॥ १६९ ॥

[2]रागानङ्गस्तवादिना चेतस्सङ्कोचनं व्रीडा ॥ यथा—

---

[1] (i) धृतिश्चित्तस्य नैस्स्पृह्यं ज्ञानाभीष्टागमादिभिः । (प्र.रु.र.प्र.)

(ii) सन्तोषो ज्ञानशक्त्यादेः धृतिरव्यग्रभोगकृत् ।
(द. रू. ४ प्र १२ श्लो)

(iii) ज्ञानविज्ञानगुर्वादिभक्तिनानार्थसिद्धिभिः ।
लज्जादिभिश्च चित्तस्य नैःस्पृह्यं धृतिरुच्यते ॥
अत्रानुभावा विज्ञेयाः प्राप्तार्थानुभवस्तथा ।
अप्राप्तातीतनष्टार्थानभिसंशोधनादयः ॥
(र. सु. द्वि. वि. ७४-७५)

[2] (i) चेतःसङ्कोचनं व्रीडानङ्गरागस्तवादिभिः ।
(प्र. रु. र. प्र. ३२ श्लो)

(ii) दुराचारादिभिर्व्रीडा धार्ष्ट्याभावस्तमुन्नयेत् ।
साचीकृताङ्गावरणवैवर्ण्याधोमुखादिभिः ॥
(द. रू. ४ प्र २४ श्लो)

नीवारधान्यान्यधिपर्णशालं
रामेऽन्तिकस्थेव जया न सीता ।
पुनः पुनर्लक्ष्य कुचान्तभागा-
वाच्छादयन्ती वसनाञ्चलेन                    ॥ १७० ॥

[1]रागद्वेषादिना मनसोऽनवस्थानं चपलता ॥

---

(iii) अकार्यकरणावज्ञास्तुतिनूतनसङ्गमैः ।
प्रतीकाराक्रियाद्यैश्च व्रीडात्वनतिधृष्टता ।
तत्र चेष्टा निगूढोक्तिरधोमुख्यविचिन्तने ।
अनिर्गमो बहिः क्वापि दूरादेवावगुण्ठनम् ॥
नखानामञ्चलैर्भूमिलेखनं चैवमादयः ।।

(र. सु. द्वि. वि-६४-६५)

1 (i) चापलं त्वनवस्थानं रागद्वेषादिसम्भवम् ।

(प्र. रु. र. प्र.—३३ श्लो)

(ii) मात्सर्यद्वेषरागादेः चापलं त्वनवस्थितिः ।
तत्र भर्त्सनपारुष्यस्वच्छन्दाचरणादयः ॥

(द. रू. ४ प्र ३३ श्लो)

( ) रागद्वेषादिभिश्चित्तलाघवं चापलं भवेत् ।
चेष्टास्तत्राविचारेण परिरम्भावलम्बने ।।
निष्कासनोक्तिपारुष्यताडनाज्ञापनादयः ।

(र. सु. द्वि. वि.–८६–८७)

यथा—

कर्षन्ती परितः कटाक्षकिरणान् ताम्बूलसक्ताधरा
किञ्चिद्विश्लथनीविका नवमरुल्लोलद्दुकूलस्तना।
गण्डव्यापृतमन्दहाससुषमा हेलाञ्चलाङ्घ्रिद्वया
सद्यश्शूर्पणखा स्मरस्य ववले मायेव रामान्तिके ॥ १७१ ॥

[1]उत्सवादिना प्रसक्तिविशेषो हर्षः।

यथा—

रामस्य पाणिग्रहगर्वितापि
त्वं मुद्रिके मे कुशलं व्यतानीः।
युक्तं तवेदं हि सुवर्णजायाः
समन्ततस्सन्मणिसंवृतायाः ॥ १७२ ॥

---

[1] (i) प्रसक्तिरुत्सवादिभ्यो हर्षः खेदाश्रुकम्पकृत्। (प्र. रु. २ प्र.)
(ii) प्रसक्तिरुत्सवादिभ्यो हर्षोऽश्रुस्वेदगद्गदाः॥
(द. रू. ४ प्र. १४ श्लो)
(iii) मनोरथस्य लाभेन सिद्ध्या योग्यस्य वस्तुनः।
मित्रसङ्गमदेवादिप्रसादादेश्च कल्पितः॥
मनःप्रसादो हर्षः स्यादत्र नेत्रास्यफुल्लता।
प्रियाभाषणमाश्लेषः पुलकानां प्ररोहणम्॥
स्वेदोद्गमश्च हस्तेन हस्तसंपीडनादयः।
(र. सु. द्वि. वि. ७६-७८)

[1]इष्टानिष्टागमाज्जातश्चित्तसंभ्रम आवेगः।

यथा—

कोऽप्येकेन विलासिनि पृथुतरौ वक्षोरुहौ पाणिना
विभ्रणापरपाणिना च विगलन्नीवीं भृशं विभ्रती।
दृष्ट्वात्मीयपतिश्च वर्त्मनि तिरोधानीं सखीं कुर्वती
मार्गन्ती च समागमत् सरभसं तज्जानकीवल्लभम्॥ १७३॥

---

[1] इष्टानिष्टागमाज्जात आवेगश्चित्तसंभ्रमः॥
(प्र. रु. र. प्र. ३५ श्लो)

(ii) आवेगः संभ्रमोऽस्मिन्नभिस जनिते शस्त्रनागाभियोगो
वातात्पांसूपदिग्धस्त्वरितपदगतिर्वर्षजे पिण्डिताङ्गः।
उत्पातात् स्रस्तताङ्गेष्वहितहितकृते शोकहर्षानुभावा
वह्नेर्धूमाकुलस्य करिजमनु भयस्तम्भकम्पापसाराः॥
(द. रू. प्र. ४—श्लो २८)

(iii) चित्तस्य सम्भ्रमो यः स्यादावेगोऽयं स चाष्टधा।
उत्पातवातवर्षाग्निमत्तकुञ्जरदर्शनात्॥
प्रियाप्रियाश्रुतेश्चापि शात्रवव्यसनादपि।
तत्रोत्पातास्तु शैलादिकम्पकेतूदयादयः॥
तज्जाः सर्वाङ्गविस्रंसा वैमुख्यमपसर्पणम्।
विषादमुखवैवर्ण्यविस्मयाद्यास्तु विक्रियाः॥ (प्र. रु. र. प्र.)

[1]अप्रीतिरिष्टानिष्टागमजन्या जाड्यम् । यथा—

निशम्य रामस्य जयं हनूमतो
[2]गिरोद्यदानं······वशेन मैथिली ।
न सम्बभाषे न च चेष्टते स्म सा
चकार देहं पुलकाङ्कुराकुलम् ॥ १७४ ॥

[3]बलादिना स्वात्मोत्कर्षो गर्वः । यथा—

---

[1] (i) जाड्यमप्रतिपत्तिः स्यादिष्टानिष्टागमोद्भवा ॥
(प्र. रु. र. प्र. ३५ श्लो)

(ii) अप्रतिपत्तिर्जडता स्यादिष्टानिष्टदर्शनश्रुतिभिः ।
अनिमिषनयननिरीक्षणतूष्णींभावादयस्तत्र ॥
(द. रू ४प्र १२ श्लो)

(iii) जाड्यमप्रतिपत्तिः स्यादिष्टानिष्टार्थयोः श्रुतेः ।
दृष्टेर्वा विरहादेश्च क्रियास्तत्रानिमेषता ॥
अश्रुतिः पारवश्यं च तूष्णींभावादयोऽपि च ।
(र.सु. द्वि. वि. ६२-६३)

[2] गिरोद्यदानं·········मेनिरे—म

[3] (i) अन्यधिक्करणादात्मोत्कर्षो गर्वो बलादिजः ।
(प्र.रु. र.प्र.)

(ii) गर्वोऽभिजनलावण्यबलैश्वर्यादिभिर्मदः ।
कर्माण्याधर्षणावज्ञा सविलासाङ्गवीक्षणम् ॥
(द. रू. ४प्र १९ श्लो)

[1]तीर्त्वा निश्शेपमब्धिं दशवदनपुरीमाशु-
गत्वा समन्तात्
प्राकारान् पातयित्वा पृथुतरपरिघान्
पांसुभिः पूरयित्वा
भित्वा हर्म्याणि भङ्क्त्वा प्रथितगृह-
तरून् दीपयित्वा च लङ्कां
बध्वा गच्छानि भूयस्तमवनि-
तनयामार्गणे मे कियत् स्यात् ॥ १७५ ॥

[2]उपायाभावचिन्तया मनोभङ्गो विषादः ।

---

(iii) ऐश्वर्यरूपतारुण्यकुलविद्याबलैरपि ।
इष्टलाभादिनान्येषामवज्ञा गर्व ईरितः ॥
अनुभावा भवन्त्यत्र गुर्वाद्याज्ञाव्यतिक्रमः ।
अनुत्तरप्रदानं च वैमुख्यं भाषणेऽपि च ॥
विभ्रमापह्नुती वाक्यपारुष्यमनवेक्षणम् ।
अवेक्षणं निजाङ्गानाम् अङ्गभङ्गादयोऽपि च ॥
(र.सु.द्वि.वि. २३–२८)

1 पीत्वा निश्शेषम्—त

2 (i) विषादश्चेतसो भङ्गः उपायाभावचिन्तनैः ॥
(प्र. रु. र. प्र. ३८)

(ii) प्रारब्धकार्यसिद्ध्यादेः विषादः सत्वसंक्षयः ।
निःश्वासोच्छ्वासहृत्तापसहायान्वेषणादिकृत् ॥
(द रू ४ प्र ३१ श्लो)

यथा—

कैकेयीह [1]पुरोदितं वरयुगं मां
[2]निर्भया याचते
प्रत्यज्ञायि मया स्फुटं रघुपते
[3]राज्याभिषेकोत्सवः ।
[4]यद्यत्रैकमपि त्यजेयमधुना सा
स्यान्मृषावादिता
यातेतः परमस्य मे स भगवान्
[5]कां वा दशां दास्यति ॥ १७६ ॥

---

(iii) प्रारब्धकार्यनिर्वाहाद् इष्टानाप्तेर्विपत्तितः ।
अपराधपरिज्ञानात् अनुतापस्तु यो भवेत् ॥
विषादः स त्रिधा ज्येष्ठमध्यनीचसमाश्रयात् ।
सहायान्वेषणोपायचिन्ताद्या उत्तमे स्मृताः ॥
अनुत्साहश्च वैचित्र्यमित्याद्या मध्यमे मताः ।
अधमस्यानुभावाः स्युः वैवर्ण्यमवलोकनम् ।।
रोदनश्वसितध्यानमुखशोषादयोऽपि च ॥

(र.सु.द्वि.वि.८–१० श्लो)

[1] पुरागतं–त
[2] निर्भयाचक्षते–त
[3] राज्याभिषेकोद्भवः–म
[4] यद्यत्रैकं त्यजेम..........धुना सा
[5] कां वा भृशं दास्यति–म

[1]कालाक्षमत्वमौत्सुक्यम्। यथा—

मित्रक्ष्माभृद्गुरुबुधमहामन्त्रिसान्निध्यक्लृप्तं
रामे श्रुत्वा सुगुणवसतौ राजसूयाभिषेकम्।
आकाङ्क्षन्त्यो नगरजनतास्तन्मुहूर्तावलम्बं
भूयोभूय[2]स्तपनतुरगप्रार्थनं संवितेनुः ॥ १७७ ॥

[3]चित्तनिमीलनं निद्रा। यथा—

रे रे हराश्वैव शचीं जहीन्द्र-
मैरावणो रावणमेव यातु।

---

[1] (i) कालाक्षमत्वमौत्सुक्यं मनस्तापत्वरादिकृत्। (प्र. रु. र. प्र.)

(ii) कालाक्षमत्वमौत्सुक्यं रम्येच्छारतिसम्भ्रमैः।
तत्रोच्छ्वासत्वनिःश्वासहृत्तापस्वेदविभ्रमाः ॥
(द. रू. ४. प्र. २२ श्लो)

(iii) कालाक्षमत्वमौत्सुक्यमिष्टवस्तुवियोगतः।
तद्दर्शनाद् रम्यवस्तुदिदृक्षादेश्च तत्क्रियाः ॥
त्वरानवस्थिती शय्यास्थितिरुत्थानचिन्तने।
शरीरगौरवं निद्रातन्द्रानिःश्वसितादयः ॥
(र. सु. द्वि. वि. श्लो ७९—८०)

[2] तदनुतुरग—त

[3] (i) निद्रा चित्तनिमीलनम्—(प्र. रु. र. प्र. ४० श्लो)

(ii) मनःसमीलनं निद्रा चिन्तालस्यक्लमादिभिः।
तत्राजृम्भाङ्गभङ्गाक्षिमीलनोत्स्वप्नतादयः ॥
(द. रू. ४प्र, २३ श्लो)

इति प्रलापैरिह निद्रितानि
रक्षांस्यपश्यन्निशि रामदूतः ॥ १७८ ॥

[1]मोहदुःखाद्यैरावेगोऽपस्मारः। यथा—

[2]कण्ठेषु.........दरि मे शिरांसि
वसन्ति नो वा निवसन्ति पश्य।

---

(iii) मदस्वभावव्यायामनिश्चिन्तत्वश्रमादिभिः।
मनोनिमीलनं निद्रा चेष्टास्तत्रास्यगौरवम् ॥
आघूर्णमाननेत्रत्वमङ्गानां परिवर्तनम्।
निःश्वासोच्छ्वासने सन्नगात्रत्वं नेत्रमीलनम्।
शरीरस्य च सङ्कोचो जाड्यं चेत्येवमादयः ॥
(र. सु. द्वि. वि. ८७-८९)

1 (i) आवेशो दुःखमोहाद्यैरपस्मारोऽङ्गतापकृत्
(प्र. रु. र. प्र. ४१ श्लो)

(ii) आवेशो ग्रहदुःखाद्यैरपस्मारो यथाविधि।
भूपातकम्पप्रस्वेदलालाफेनोद्गमादयः ॥
(द. रू. ४प्र. २५ श्लो)

(iii) धातुवैषम्यदोषेण भूतावेशादिना कृतः।
चित्तक्षोभस्त्वपस्मारस्तत्र चेष्टा प्रकम्पनम् ॥
धावनं पतनं स्तम्भो भ्रमणं तत्र विक्रियाः।
स्वोष्ठदंशभुजास्फोटलालाफेनादयोऽपि च ॥
(र. सु. द्वि. वि. ४६-४८)

2 करेषु मन्दोदरि—त

रामस्सपत्राङ्कुरिते रणे गाम्
इत्थं दशास्योऽभणदाजि भीतः ॥ १७९ ॥

[1]निद्रासमुद्रेकस्सुप्तिः । यथा—

ईषा गदायोधनभिण्डिवाल
शूलादिघातैरपि कुम्भकर्णे ।
निद्राकुले मत्कुणचण्डतुण्ड-
स्पर्शव्ययाल्पापि बभूव[2] नैव ॥ १८० ॥

[3]चेतनावाप्तिर्वि बोधः । यथा—

हनूमदानीतमहौषधीनां
सौमित्रिराप्राणबलादबोधि ।

---

1 (i) सुप्तिर्निद्रासमुद्रेकः—(प्र. रु. र. प्र. ४२ श्लो)
(ii) सुप्तं निद्रोद्भवं तत्र श्वासोच्छ्वासक्रियापरम् ॥
(द. रू. ४प्र. २२ श्लो)
(iii) उद्रेक एव निद्रायाः सुप्तिः स्यात्तत्र विक्रिया
इन्द्रियोपरतिर्नेत्रमीलनं स्रस्तगात्रता ॥
उत्स्वप्नयितनैश्चल्यश्वासोच्छ्वासादयो मताः ॥
(र. सु. द्वि. वि. ९०–९१)

2 सैव—त

3 (i) विलापः—म

3 (ii) स्वप्नस्पर्शननिः(श्वास)निद्रासंपूर्णतादिभिः ।
प्रबोधश्चेतनावाप्तिश्चेष्टास्तत्राक्षिमर्दनम ॥
(र. सु. २ वि. ९२ श्लो)

तत्तद्दशालोकनजातमूर्च्छो
रामोऽपि सद्यः प्रययौ विबोधम् ॥ १८१ ॥

[1]सापराधेषु मनःप्रज्वलनममर्षः ।

यथा—

सीता त्वद्व्याजनिहृता दशकण्ठचौर्या-
न्नैवं विधा वयमिति स्फुटवाचमुक्त्वा ।
मन्दोदरीं परिचकर्ष पुरोऽस्य वाली-
पुत्रो लतामिव गजो विगलत्प्रसूनाम् ॥ १८२ ॥

[2]हर्षाद्याकारगोपनमवहित्था ।

---

1 (i) अमर्षः सापराधेषु चेतः प्रज्वलनं मतम् (प्र. रु. र. प्र. ४४)
(ii) अधिक्षेपापमानादेः अमर्षोऽभिनिविष्टता ।
तत्र स्वेदशिरःकम्पतर्जनाताडनादयः ॥ (द. रू. ४प्र. १७)
(iii) अधिक्षेपावमानाद्यैः क्रोधोऽमर्ष इतीर्यते ।
तत्र स्वेदशिरःकम्पावाधोमुख्यविचिन्तने ॥
उपायान्वेषणोत्साहव्यवसायादयः क्रियाः ॥
(र. सु. द्वि. वि. ८३–८४)

2 (i) हर्षाद्याकारसंगुप्तिः अवहित्थेति कथ्यते । (प्र. रु. र. प्र. ४५)
(ii) लज्जाद्यैर्विक्रियागुप्ताववहित्थाङ्गविक्रिया (द. रू. ४प्र. २९)
(iii) अवहित्थाकारगुप्तिः जैह्मयप्रभवनीतिभिः ।
लज्जासाध्वसदाक्षिण्यप्रागल्भ्यापजयादिभिः ॥
अन्यथाकथनं मिथ्याधैर्यमन्यत्र वीक्षणम् ।
कथाभङ्गादयोऽप्यस्यामनुभावा भवन्त्यमी ॥
(र. सु. द्वि. वि. ६६–६७)

यथा—

वातायनेन रघुपुङ्गवमीक्षमाणा
प्राप्तं तदा सहचरीगणमाकलय्य ।
संमार्ष्टि भूमितनया पुलकावलिं स्म
[1]कण्डूति . . . . . . मिषान्निजगण्डजाताम् ॥ १८३ ॥

[2]अपराधदर्शनेन चण्डत्वमुग्रता ।
सापराधेष्वभिनिवेशमात्रममर्षः ।
अपराधोचितकार्यमुग्रतेति तयोर्भेदः अवगन्तव्यः ।

यथा—

दृष्ट्वार्णवस्य छलतां स कृतप्रभावात्
उत्थाय दर्भशयनादुरुरोषगर्भः ।

---

1 कण्डूतिदण्डनमिषान्निजगण्डजाताम्—त

2 (i) दृष्टेऽपराधे चण्डत्वमुग्रता तर्जनादिकृत् । (प्र. रु. र. प्र.)

(ii) दृष्टेऽपराधे दौर्मुख्यक्रौर्यैश्चण्डत्वमुग्रता ।
तत्र स्वेदशिरःकम्पतर्जनाताडनादयः ॥
(द. रू. ४प्र. १५ श्लो)

(iii) अपराधावमानाभ्यां चैर्यादिग्रहणादिभिः ।
असत्प्रलापनाद्यैश्च कृतं चण्डत्वमुग्रता ॥
क्रियास्तत्रास्यनयनरागो बन्धनताडने ।
शिरसः कम्पनं स्वेदवधनिर्भर्त्सनादयः ॥
(र. सु. द्वि. वि. ८१-८२)

रामोऽरुणान्तनयनो धनुषीषुवर्ह्निं
सन्धाय चित्रमुदधिं वशयाञ्चकार ॥ १८४ ॥

[1] तत्त्वमार्गेणार्थनिर्धारणं मतिः। यथा—

जानाम्यहं योषिदपीह रामं
पारं हरीशानमृतान्धसोऽपि।
शेषं च सौमित्रिमशेषमेत-
न्न वेत्सि किं विंशतिलोचन त्वम् ॥ १८५ ॥

[2]मनस्तापादिजन्यो ज्वरादिः व्याधिः। यथा—

---

[1] (i) तत्त्वमार्गानुसन्धानात् अर्थनिर्धारणं मतिः ॥

(प्र. रु. र. प्र. ४८)

(ii) भ्रान्तिच्छेदोपदेशाभ्यां शास्त्रादेस्तत्त्वधीर्मतिः।

(द. रू. ४प्र. श्लो २७)

(iii) नानाशास्त्रार्थमथनादर्थनिर्धारणं मतिः।
तत्र चेष्टास्तु कर्तव्यकरणं संशयच्छिदा ॥
शिष्योपदेशभ्रूक्षेपावूहापोहादयोऽपि च।

(र. सु. द्वि. वि. ७३-७४)

[2] (i) मनस्तापाद्यभिभवाज्ज्वरादिर्व्याधिरिष्यते।

(प्र. रु. र.प्र.)

(ii) व्याधयः सन्निपाताद्याः तेषामन्यत्र विस्तरः।

(द. रू. ४प्र. २९ श्लो)

भूपतिरपि राघव त्वं किमु मामपि
[1]प्रतापमार्त्तण्डः ।
[2]नावसि निपीड्यमानां चिरमुरुविरह-
ज्वराभितापेन ॥ १८६ ॥
[3]चेतनाचेतनेषु तुल्यवृत्तित्वमुन्मादः ।

---

(iii) दोषोद्रेकवियोगाद्यैर्ज्वरः स्याद्व्याधिरत्र तु ।
गात्रस्तम्भः श्लथाङ्गत्वं कूजनं मुखशोषणम् ॥
स्रस्ताक्षताङ्गविक्षेपनिःश्वासाद्यास्तु स द्विधा ।
सशीतो दाहयुक्तश्च सशीते तत्र विक्रियाः ।
हनुसञ्चालने बाष्पः सर्वाङ्गोत्कम्पकूजने ।
जानुकुञ्चनरोमाञ्चमुखशोषादयोऽपि च ॥
(र. सु. द्वि. वि. ४९-५१)

1 चन्द्रतापमार्तण्ड—त

2 'म' प्रतौ 'नाचसि' इति, 'त' प्रतौ तावसि इति अशुद्धः पाठः दृश्यते। अर्थानुरोधात् अत्र 'नावसि' इति मया शोधितः।

3 (i) उन्मादस्तुल्यवर्त्तित्वं चेतनाचेतनेष्वपि ।
(प्र. रु. र. प्र. ४९)

(ii) अप्रेक्षाकारितोन्मादः सन्निपातग्रहादिभिः ।
अस्मिन्नवस्थारुदितगीतहासासितादयः ॥
(द. रू. ४प्र. ३० श्लो)

अपस्मारापेक्षयास्य भेदस्स्पष्टः । यथा—

'काठिन्यं परिमुच्य शैल भवता रामाय विज्ञाप्यतां
कासारप्रवरा स्वभावसरसा युष्माभिरावेद्यताम् ।
सख्यः काननदेवतास्सरभसं संकथ्यतां सादराः
वृक्षास्सम्प्रति भाष्यतां हरति ते प्राणेश्वरीं रावणः ॥ १८७ ॥

[1]मरणार्थस्तु प्रयत्नः मरणम् ।

---

(iii) उन्मादश्चित्तविभ्रान्तिः वियोगादिष्टनाशतः ।
वियोगजे तु चेष्टाः स्युर्धावनं परिदेवनम् ।
असम्बद्धप्रलपनं शयनं सहसोत्थितिः ।
अचेतनैः सहालापो निर्निमित्तस्मितादयः ॥
(र. सु द्वि. वि. ४३–४४)

1 (i) मरणं मरणार्थस्तु प्रयत्नः परिकीर्तितः । (प्र. रु. र. प्र. ४९)
(ii) मरणं सुप्रसिद्धत्वादनर्थत्वाच्च नोच्यते ।
(द. रू. ४प्र. २१ श्लो)

(iii) वायोर्धनञ्जयाख्यस्य विप्रयोगो य आत्मना ।
शरीरावच्छेदवता मरणं नाम तद्भवेत ।
एतच्च द्विविधं प्रोक्तं व्याधिजं चाभिघातजम् ॥
आद्यं त्वसाध्यहृच्छूलविषूच्यादिसमुद्भवम् ।
अमी तत्रानुभावाः स्युरव्यक्ताक्षरभाषणम् ॥
निर्वर्णगात्रता मन्दश्वासादिस्तम्भमीलने ।
हिक्कापरिजनापेक्षानिश्चेष्टेन्द्रियतादयः ॥
(र. सु. द्वि. वि. ५४–५७)

(iv) मरणार्थप्रयत्नो मरणं-त

अणीयसीमञ्चलतां दधाना प्राणान् तृणानीव विभावयन्ती ।
बध्वा स्वकण्ठे ननु राम वेणीमेणीदृशस्ते त्वयि दत्तपाणी ॥ १८८ ॥

[1]आकस्मिकभयाच्चित्तविक्षोभस्त्रासः ॥ यथा—

घोरप्रतिग्रहोन्थो निपतति मयि [2]रामचापशार्दूलः ।
शरणं भीतजनानां धानुष्कवरेण्य रक्ष रक्ष त्वम् ॥ १८९ ॥

[3] सन्देहाद्विकल्पनात्वं वितर्कः ॥ यथा—

---

[1] (i) आकस्मिकभयाच्चित्तक्षोभस्त्रासः प्रकीर्त्यते ॥
(प्र. रु. र. प्र.५१)

(ii) गर्जितादेर्मनःक्षोभस्त्रासोऽत्रोत्कम्पितादयः ।
(द. रू. ४प्र. १६ श्लो)

(iii) त्रासस्तु चित्तचाञ्चल्यं विद्युत्क्रव्यादगर्जितैः ॥
तथा भूतभुजङ्गाद्यैर्विज्ञेयास्तत्र विक्रियाः ।
उत्कम्पगात्रसङ्कोचरोमाञ्चस्तम्भगद्गदाः ॥
मुहुर्निमेषविश्रान्तिपार्श्वस्थालम्बनादयः ।
(र. सु. द्वि. वि. ३०–३२)

[2] रामपादशार्दूलः—त

[3] (i) सन्देहात् कल्पनानन्त्यं वितर्कः परिकीर्त्तितः ।
(प्र. रु. र. प्र.)

(ii) तर्को विचारः सन्देहान् भ्रूशिरोऽङ्गुलिनर्तकः ॥
(द. रू. ४प्र. २९)

'रामो मां समुपेक्षते न कलये तस्मिन् निमित्तं ह्यहं
किं कान्तां परिणीय खेलति न वा किं न क्षते मद्गतिम् ।
किं वैराग्यमुपैति किन्तु पटुमत्साध—नव्यापृतौ
किं वै [1]तादृशमेव भाव्यमिह मे त्वं ब्रूहि [2]सामीरणे ॥ १९० ॥

तत्र सात्त्विकानां व्यभिचारिणां च अनेकरससाधारणत्वाद्विशेषापेक्षया नोदाहरणं कृतम् । तथा हि—

[3]शृङ्गारे सर्वेषामनुप्रवेशः । करुणे मदधृतिव्रीडाहर्षगर्वौत्सुक्य-

---

(iii) ऊहो वितर्कः सन्देहविमर्शप्रत्ययादिभिः ।
जनितो निर्णयान्तः स्यादसत्यः सत्य एव वा ॥
तत्रानुभावाः स्युरमी भ्रूशिरःकम्पनादयः ।
(र. सु. द्वि वि. ७०-७१)

1 तादृशमेव भाग्यमिह—त

2 समीरणे—त

3 तथा हि शृङ्गारे सर्वेषामनुप्रवेशः सम्भवति। हास्ये ग्लानिश्रमचपलत्वहर्षावहित्थानां सम्भवः । करुणे मदधृतिव्रीडाहर्षगर्वौत्सुक्योग्रताभिर्विनाऽन्ये सम्भवन्ति। रौद्रे ग्लानिशङ्कालस्यदैन्यचिन्ताव्रीडावेगजडताविषादसुप्तिनिद्रापस्मारावहित्थाव्याध्युन्मादशमाः न सम्भवन्ति। वीरे रौद्रान्निर्वेदोऽधिकः। भयानकेऽसूयामदधृतिव्रीडाहर्षगर्वनिद्रासुप्त्यमर्षावहित्थोग्रतामतिभिर्विना अन्ये सम्भवन्ति। बीभत्सेऽद्भुते च चिन्तात्रासादयो यथासम्भवमूह्याः। शान्ते निर्वेदधृती सम्भवतः ॥ (प्रतापरुद्रीये रसप्रकरणम्)

ग्रनातिरिक्ताः परंसम्भवन्ति । [1]बीभत्सेऽद्भुते च चिन्तात्रासादयो यथासम्भवमुहनीयाः । शान्ते निर्वेदधृतौ सम्भवतः ।

## अथ शृङ्गारचेष्टा निरूप्यन्ते ।

भावहावहेलामाधुर्यलीलाविलासविच्छित्तिविभ्रमकिलिकिञ्चितमोट्टायितकुट्टमितविब्बोकललितकुतूहलचकितविहृतभेदाद्[2]ष्टादशशृङ्गारचेष्टाः ।

तासां स्वरूपमुदाहरणं च प्रदर्श्यते ।

तत्र बाल्ययौवनसन्ध्याद्युत्पन्नः शृङ्गारविषयः प्रथमान्तःकरण-

---

1 रौद्रे ग्लानिशङ्कालस्यदैन्यचिन्ताव्रीडावेगजडताविषादसुप्तिनिद्रापस्मारावहित्थाव्याध्युन्मादत्रासानाम् अनुप्रवेशः ॥ वीरे रौद्रान्निर्वेदोऽधिकः । (वीरे रौद्रे च निर्वेदोऽधिकः) भयानके असूयामतिधृतिव्रीडाहर्षगर्वनिद्रासुप्तावहित्थोग्रतामतिव्यतिरिक्ताः परं संभवन्ति ॥ बीभत्से—त

2 भावो हावश्च हेला च माधुर्यं धैर्यमित्यपि । लीला विलासो विच्छित्तिर्विभ्रमः किलकिञ्चितम् ॥ मोट्टायितं कुट्टमितं विब्बोको ललितं तथा । कुतूहलं च चकितं विहृतं हास इत्यपि ॥ एवं शृङ्गारचेष्टाः स्युरष्टादशविधा मताः ॥

(प्र. रु. र. प)

विकारो [1]भावः। यथा—

वयमिह निवसामो भूरि विश्वस्य सख्यो
बहिरुदितविशेषैर्जानकी बालिकेति।
कलयत वलभिस्था मन्दमेवं गवाक्षैः
[2]कुवलयदलनेत्रा सापरं पश्यतीयम् ॥ १९१ ॥

ईषद्दृष्टविकारो भावो [3]हावः ॥ यथा—

---

[1] (i) रसाभिज्ञानयोग्यत्वं भाव इत्यभिधीयते। (प्र. रु. र. प्र)

(ii) निर्विकारात्मकसत्वाद्भावस्तत्राद्यविक्रिया।
(द. रू. २प्र. ३३)

(iii) निर्विकारस्य चित्तस्य भावः स्यादादिविक्रिया॥
(र. सु. प्र. वि. १९२)

(iv) वाग्भिरङ्गैर्मुखरसैः यस्सत्त्वाभिनयेन च।
भावयन् बहिरन्तस्स्थानर्थान् भाव उदाहृतः॥
(भावप्रकाशने प्रथमोऽधिकारः ८पृ. ५. प)

[2] कुवलयदलरामं सादरं—त

[3] (i) ईषद्दृष्टविकारः स्याद्भावो हावः प्रकीर्त्यते। (प्र. रु. र. प्र)

(ii) हेवाकसस्तु शृङ्गारो हावोऽक्षिभ्रूविकारकृत्॥
(द. रू. २प्र. ३४ श्लो)

(iii) ग्रीवारेचकसंयुक्तो भ्रूनेत्रादिविलासकृत्।
भाव ईषत्प्रकाशो यः स हाव इति कथ्यते॥
(र. सु प्र. वि. १९३)

अधुना पश्यत सख्यः स्पृष्टाग्रकरेण रामचन्द्रस्य ।
सीता शशाङ्ककान्तप्रतिमेषत्स्विन्नविग्रहा भाति ॥ १९२ ॥

सुव्यक्तविकारो भावो [1]हेला ॥ यथा—

आरामे विहरामो वयमिति वचने नस्तवाङ्गेषु ।
पुलकास्फुरन्ति सान्द्रं भावस्ते भाति भूसुते रामे ॥ १९३ ॥

भूषणानि विना रम्यत्वं [2]माधुर्यम् ॥ यथा—

---

(iv) हेलाहेतुः स शृङ्गारो भावात्किञ्चित् प्रकर्षवान् ।
सग्रीवारेचको हावो नासाक्षिभ्रूविलासकृत् ॥
(भावप्रकाशने प्रथमोऽधिकारः १९३)

[1] (i) सुव्यक्तविक्रियो भावो हेलेति प्रतिपाद्यते। (प्र. रु. र. प्र.)
(ii) स एव हेला सुव्यक्तशृङ्गाररससूचिका । (द. रू. २प्र. ३४श्लो)
(iii) नानाविकारैः सुव्यक्तः शृङ्गाराकृतिसूचकैः ।
हाव एव भवेद्धेला ललिताभिनयात्मिका ॥
(र. सु. प्र. वि १९४)
(iv) स एव हावो हेला स्याल्ललिताभिनयात्मिका ।
नानाप्रकाराभिव्यक्तशृङ्गाराकारसूचिका ॥
(भावप्रकाशने—प्रथमोऽधिकार —८पृ. १३-१४ पं)

[2] (i) अभूषणेऽपि रम्यत्वं माधुर्यमिति कथ्यते । (प्र. रु. र. प्र.)
(ii) माधुर्यं नाम चेष्टानां सर्वावस्थासु मार्दवम् ।।
(र. सु. प्र. वि. १९७)
(iii) अनुल्बणत्वं माधुर्यं– (द. रू. २प्र. ३६ श्लो)
(iv) सर्वावस्थासु चेष्टानां माधुर्यं मृदुकारिता ।।
भावप्रकाशने—प्रथमोऽधिकार —८पृ. १९ पं.)

प्राप्ते विवाहसमये भूषणभूषासु भूसुताङ्गेषु ।
पौराङ्गनाविभूषामाङ्गल्यायैव भूषणाश्चक्रुः ॥ १९४ ॥

शीलाद्यलङ्घनं [1]धैर्यम् ॥ यथा—

सीताराघववेलामधिशेते नैव सिन्धुवीचीव ।
परिचितपरपुरवासा नैषापि [2]तथा विधा भवति ॥ १९५ ॥

वाग्गतिचेष्टभिः प्रियानुकरणं [3]लीला ॥ यथा—

---

[1] (i) शीलाद्यलङ्घनं नाम धैर्यमित्यभिधीयते। (प्र. रु. र. प्र)
(ii) चापलाविहता धैर्यं चिद्वृत्तिरविकत्थना ।
(द. रू. २प्र. ३७ श्लो)
(iii) स्थिरा चित्तोन्नतिर्यातु तद्धैर्यमिति संज्ञितम् ।
(र. सु. प्र. वि. १९८)
(iv) मानग्रहो दृढो यस्तु तद्धैर्यमिति कथ्यते ।
(भावप्रकाशने—प्रथमोऽधिकारः ८पृ-२१ पं)

[2] तथा तथाविधा–त

[3] (i) प्रियानुकरणं लीला वाग्भिर्गत्याथ चेष्टितैः। (प्र. रु. र. प्र)
(ii) प्रियानुकरणं लीला मधुराङ्गविचेष्टितैः। (द.रू.२प्र. ३७श्लो)
(iii) प्रियानुकरणं यत्तु मधुरालापपूर्वकैः ।
चेष्टितैर्गतिभिर्वास्यात् सा लीलेति निगद्यते ।
(र. सु. प्र. वि. २००–२०१ श्लो)
(iv) मनोमधुरवागङ्गचेष्टितैः प्रीतियोजितैः ।
प्रियानुकरणं लीला सा स्यात्पुंसः स्त्रिया अपि ॥
(भावप्रकाशने—प्रथमोऽधिकारः—९पृ. ८९)

वचोऽनुकूलैरनुकुर्वती सा वचोभिरीहानुगुणेन यापि ।
विस्मारयामास [1]रघुप्रवीरो विदेहकन्या वनवासखेदम्॥ १९६ ॥

सर्वविभूषणैरतिरम्यत्वं [2]विच्छित्तिः ॥

यथा—

अमीभिराभूषित चारुविग्रहा
त्वदाहृतैर्भानुजभूषणोत्तमैः ।
सुवर्णपुत्रीव विदेहपुत्री
तदा व्यभासीन्नवरत्नकीलिता ॥ १९७ ॥

प्रियावलोकने तात्कालिको विकारो [3]विलासः ॥ यथा—

---

[1] रघुप्रवीरं विदेहकन्या वनवासखेदम—न

[2] (i) विच्छित्तिरतिरम्यत्वं स्वल्पैरपि विभूषणैः- (प्र. रु. र. प्र.)
(ii) आकल्परचनाल्पापि विच्छित्तिः कान्तिपोषकृत् ।
(द. रू. २प्र. ३७ श्लो)
(iii) आकल्पकल्पनाल्पापि विच्छित्तिरतिकान्तिकृत् ॥
(र. सु. प्र. वि. २०२ श्लो)
(iv) स्वल्पोऽप्यनादरन्यासो माल्यादीनां स्वमण्डने ।
यः परां जनयेत् शोभां सा विच्छित्तिरुदाहृता ॥
(भावप्रकाशने-प्रथमोऽधिकारः)- (९पृ-७-८-पं)

[3] (i) तात्कालिको विकारः स्याद्विलासो दयितेक्षणे । (प्र. रु. र. प्र.)
(ii) तात्कालिको विशेषस्तु विलासोऽङ्गक्रियादिषु ॥
(द. रू. २प्र. ३८ श्लो)

रङ्गस्थितं राममवेक्ष्य सीता
विभाति [1]निर्यत्पुलकावृताङ्गी ।
निजानुभावाद्वपुषः [2]प्रति–
······स्वविसृजन्तीव सखीषु चापे ॥ १९८ ॥

त्वरया विभूषणानां स्थानविपर्ययो [3]भ्रमः ॥ यथा—

---

(iii) प्रियसम्प्राप्तिसमये भ्रूनेत्राननकर्मणाम् ।
तात्कालिको विशेषो यः स विलास इतीरितः ॥
(र. सु. प्र. वि. २०१–२०२)

(iv) प्रियसङ्गमकाले तु नेत्रभ्रूवक्त्रकर्मणाम् ।
विशेषो यस्य विज्ञेयो विलासोऽङ्गक्रियादिषु ॥
(भावप्रकाशने–प्रथमोऽधिकारः) (८ पृ. ८–७ पं)

[1] निर्यत्पुलकाकुलाङ्गी–त

[2] 'चतुर्थपादः'–अबद्धः, तृतीयपादेऽपि अन्त्ये एकमक्षरं नास्ति।
—(तथैव मुद्रितः)

[3] (i) विभ्रमस्त्वरया काले भूषास्थानविपर्ययः (प्र. रु. र. प्र.)

(ii) विभ्रमस्त्वरया काले भूषास्थानविपर्ययः ।
(द. रू. २प्र. ३९ श्लो)

(iii) प्रियागमनवेलायां मदनावेशसम्भ्रमात् ।
विभ्रमोऽङ्गदहारादिभूषास्थानविपर्ययः ॥
(र. सु. प्र. वि. २०३ श्लो)

(iv) वागङ्गसत्वाभिनयभूषास्थानविपर्ययः ।
त्वरया कल्पितोऽभीष्टदर्शने यः स विभ्रमः ॥
(भावप्रकाशने प्रथमोऽधिकारः ९पृ–१०-११ पं)

(v) विभ्रमः–त

रामावलोकनमहोत्सवसंभ्रमेण
व्यत्यस्तभूषणधरा मिथिलानगर्याम् ।
साश्चर्यभ्रूमतरुणीजनताभियान्ती
पौरोत्करेण ददृशे धृतभूमिकेव ॥ १९९ ॥

रोषहर्षभीत्यादेस्सङ्करः [1]किलिकिञ्चितम् ।

यथा—

त्वत्तोऽप्युत्तमसुन्दरीं परिणयानीत्यब्रुवाणः प्रियाम्
एकान्तेऽस्तु तथेति तत्र विमुखीभावं तया यातया ।
दत्तस्तत्परिभूतनूतनबहिस्सम्भोगचेष्टोऽपि सन्
दृष्ट्वा सात्त्विकसम्भवं न विरतो रामस्त[2]दालिङ्गनात् ॥ २०० ॥

---

[1] (i) रोषाश्रुहर्षभीत्यादेः सङ्करः किलकिञ्चितम् । (प्र. रु. र. प्र.)

(ii) क्रोधाश्रुहर्षभीत्यादेः संकरः किलकिञ्चितम् ॥
(द. रू. २प्र. ३९ श्लो)

(iii) शोकरोषाश्रुहर्षादेः सङ्करः किलिकिञ्चितम् ।
(र. सु. प्र. वि. २०४ श्लो)

(iv) क्रोधाभिलाषहर्षादेः सङ्करः किलिकिञ्चितम् ॥
(भावप्रकाशने प्रथमोऽधिकारः (९ पृ—११ पं)

(v) किलकिञ्चितम्, किलिकिञ्चितम्—इति पाठद्वयं प्रयोगे दृश्यते ॥

[2] आलिङ्गनम्—द

स्पृष्टकथादौ भावसूचनं [1]मोट्टायितम् ॥

यथा —

प्रागेव चापनमनादनया पुरारे
राकर्णितात्र पुलका ननु कूलयन्ती ।
रामात्कथाहृदयलग्नरतीशशल्या-
[2]द्धशल्यकरणीय विभाति सद्यः ॥ २०१ ॥

रतौ केशाधरग्रहणादिसंमर्दे सत्यपि सुखाधिक्यं [3]कुट्टमितम् ॥ यथा—

---

[1] (i) मोट्टायितं स्यादिष्टस्य कथादौ भावसूचनम् (प्र. रु. र. प्र.)
(ii) मोट्टायितं तु तद्भावभावनेष्टकथादिषु ।
(द. रू. २प्र. ४० श्लो)
(iii) स्वाभिलाषप्रकटनं मोट्टायितमितीरितम् ॥
(र. सु. प्र. वि. २०४ श्लो)
(iv) प्रियस्तुतिकथालापलीलाहेलादिदर्शने ।
तद्भावभावनं मोट्टायितमित्युच्यते बुधैः ॥
(भावप्रकाशने—प्रथमोऽधिकारः (९पृ. १४—१५ पं)

[2] द्धत्रिविशल्य—त

[3] (i) संमर्देऽपि सुखाधिक्यं रतौ कुट्टमितं मतम् । (प्र. रु. र. प्र.)
(ii) सानन्दान्तः कुट्टमितं कुप्येत् केशाधरग्रहे ॥
(iii) केशाधरादिग्रहणे मोदमानेऽपि मानसे ।
दुःखितेव बहिः कुप्येत् यत्र कुट्टिमितं हि तत् ॥
(र. सु. प्र. वि. २०५ श्लो)

कान्तेऽस्मिन् रघुवीरपङ्क्तनमनामासीदधः पाठनात्
कान्तः पञ्चशराहवे मुखरयानूनं त्वया निर्जितः।
गण्डोरोजयुगाधरे ननु कथं चिह्नानि [1]धत्स्यन् यथा
[2]तत्स्यात्तिष्ठ सखीति सा शशिमुखी जाता सलज्जोदया ।।२०२।।

मनाक् प्रियकथालापे अनादरो [3]विब्बोकः ।। यथा—

'आनम्य चापमहिनायककङ्कणस्य
मामग्निसाक्षिकमसौ परिणीय रामः।
भूयोऽपि भार्गवधनुर्नमनाज्जयश्री-
र्चूडालमस्य कथयायि(धि)धनुर्धरस्य ।। २०३ ।।

---

(iv) सौख्योपचारैः सानन्दाधरकेशग्रहादिभिः।
दुःखोपचारवत् कुप्येत् बहिः कुट्टमितं तु तत् ।।
भावप्रकाशने—प्रथमोऽधिकारः

[1] धत्सेऽन्यथा—त

[2] 'तत्स्यात्तिष्ठ सखीति' पाठः अत्र ऊहितः

[3] (i) मनाक् प्रियकथालापे बिब्बोकोऽनादरक्रिया। (प्र. रु. र.प्र.)
(ii) गर्वाभिमानादिष्टेऽपि बिब्बोकोऽनादरक्रिया।
(द. रू. २प्र. ४१ श्लो)
(iii) इष्टेऽप्यनादरो गर्वात् मानाद्बिब्बोक ईरितः ।।
(र. सु. प्र. वि. २०६ श्लो)
(iv) इष्टभावोपगमने तथाऽभीष्टस्य दर्शने।
गर्वादथाभिमानाद्वा बिब्बोकोऽनादरक्रिया ।।
(भावप्रकाशने—प्रथमोऽधिकार (पृ.१७-१८ पं)

सुकुमाराङ्गविन्यासो [1]ललितम् ॥ यथा—

निम्नाग्रनिस्थितविटावटभागदत्त-
वक्षोजभारविभवादि[2]निमेषनेत्रैः ।
रामं [3]पुरीमभिविशन्तमवेक्षमाणा
वाराङ्गना बभुरिवानिमिषाम्बुजाक्ष्यः ॥ २०४ ॥

---

[1] (i) सुकुमारोऽङ्गविन्यासो ललितं परिकीर्त्यते । (प्र. रु. र.प्र.)

(ii) सुकुमाराङ्गविन्यासो मसृणो ललितं भवेत् ॥
(द. रू. २प्र. ४१ श्लो)

(iii) सुकुमारोऽङ्गविन्यासः सभ्रूनेत्राधरक्रियः ।
अनुल्बणश्च मसृणः स्त्रिणां ललितमीरितम् ॥
(भावप्रकाशने–प्रथमोऽधिकारः (९पृं–१९–२० पं)

(iv) विन्यासभङ्गिरङ्गानां भ्रूविलासमनोहरा ।
सुकुमारा भवेद्यत्र ललितं तदुदीरितम् ॥
(र. सु. प्र. वि. २०६-२०७ श्लो)

(v) सुकुमाराङ्गविलासा ललितम यथा—
सीताङ्घ्रिहस्तरशनाचलनप्रकारैः
मञ्जीरकङ्कणककिङ्किणयो रणन्त्यः ।
अन्तःपुरे मनसि काकलविवादं
शङ्काङ्कुरं विदधिरे रघुनन्दनस्य ॥
रम्यदर्शने चापलं कुतूहलं–यथा–निम्नावनिश्चित
—त प्रतौ दृश्यते

[2] अनिमेषनेत्रः—म

[3] रामं पुनीमहि विशन्तमवेक्षमाणा—म

चकितं भय[1]सम्भ्रमम् ॥   यथा—

अयातासौ मुख्यं रघुकुलपतेः प्रार्थनशतैः
कदाप्येकान्ते सा प्रणयकुपिता भूमिदुहिता ॥
हठाद्दृष्ट्वा नीलोत्पलदल[2]मयीं कृष्णभुजगीं
स्तनाभोगे दत्तां चकितहृदयाश्लेषमकरोत्   ॥ २०५ ॥

लज्जया प्राप्तकालस्य वचनस्याकथनं [3]विहृतम् ॥   यथा—

तनौ [4]रामाकारा कलनजनितैस्तेऽद्य पुलकैः
पणात्प्रागेव[5] त्वं पुरहरमहाचापनमनात् ।

---

1 (i) चकितं भयसम्भ्रमः—(प्र. रु. र. प्र. ६५ श्लो)
(ii) भयसम्भ्रमश्चकितम्—त

2 मयीं—म

3 (i) विहृतं प्राप्तकालस्य वाक्यस्याकथनं ह्रिया । (प्र. रु. र. प्र )
(ii) प्राप्तकालं न यद्ब्रूयात् व्रीडया विहृतं हि तत् ॥
(द. रू. २प्र. ४२ श्लो)
(iii) ईर्ष्यया मानलज्जाभ्यामदत्तं योग्यमुत्तरम् ॥
क्रियया व्यज्यते यत्र विहृतं तदुदीरितम् ॥
(र. सु. प्र. वि. २०७.२०८)
(iv) स्वभावाद् व्रीडया वापि प्राप्तकालमनुत्तरम् ।
विहृतं तदिति प्राहुर्मानेर्ष्याभ्यामथापि वा ॥
भावप्रकाशने–प्रथमोऽधिकारः

4 वामाकारा—त

5 प्रागे च—त

रिंसुस्तेनैव स्फुरसि [1]गिरमुक्त्वेति हसिनीं
करेणैवादौषीत् [2]प्रियसहचरी मैथिलसुता ॥ २०६ ॥

यौवनादिविकारजं [3]हसितम् ॥ यथा—

श्वश्रूसमीपगतराममुखं विलोक्य
दोषातनप्रियकथास्मरणाद्धसन्त्याम् ।
अस्यां क्षमादुहितरि द्युतिपाण्डुगण्डा-
च्चोत्तेजकीर्तिरमला बहिरश्चतीव ॥ २०७ ॥

[4]अथ शृङ्गारस्य अङ्कुरितत्वपल्लवितत्वकुसुमितत्वहेतवो द्वादशावस्था निरूप्यन्ते ॥

---

[1] गिरमुक्तेति—त

[2] प्रियसहचरीं—त

[3] आकस्मिकं तु हसितं यौवनादिविकारजम् । (प्र. रु. र. प्र.)

[4] कामशास्त्रानुसारतः इत्यनेन अलङ्कारशास्त्रे संख्यासंज्ञादौ विशेषः अस्तीति सूच्यते । अत एव उक्तं भावप्रकाशे—

दशधा मन्मथावस्था भवेद् द्वादशधापि वा ।
इच्छोत्कण्ठाभिलाषाश्च चिन्तास्मृतिगुणस्तुती ॥
उद्वेगोऽथ प्रलापः स्यादुन्मादो व्याधिरेव च ।
जाड्यं मरणमित्याद्ये द्वे कैश्चिद्वर्जिते बुधैः ॥ इति । अन्ये तु—

दृङ्मनःसङ्गसंकल्पा जागरः कृशतारतिः ।
ह्रीत्यागोन्मादमूर्च्छान्ता इत्यनङ्गदशा दश ॥ इत्याहुः

—(प्रतापरुद्रीयस्य रत्नापणव्याख्याने रसप्रकरणे)

चक्षुःप्रीतिर्मनस्सङ्कल्पप्रलापजागरकार्श्यारतिलज्जात्यागसंज्वरो न्मादमूर्च्छनमरणानीति [1]द्वादशावस्थाः ॥ २०८ ॥

तत्र आदरेण दर्शनं [2]चक्षुःप्रीतिः ॥ यथा—

रामस्तटित्वानिव राजतेऽसौ विचित्रकोदण्डमनोज्ञवेषः ।
अहो मरुत्वानिव सख्यजस्रं सहस्रनेत्रैरपि दर्शनीयः ॥ २०९ ॥

[3]शिवार्चनोद्यानमुपागतायाः महीसुताया कुचपर्वताग्रम् ।
विभिद्य लग्नान्तरतीरमग्ना न रामदृष्टिः त्वरयोज्जगाम ॥ २१० ॥

प्रियतमे नित्यं चित्तविश्रान्तिः [4]मनस्सङ्गः ॥

यथा

चेतोवृत्ते रमसे नित्यं रामेण मदनरम्येण ।
न क्षयसे मम किं त्वं स्थाने स्त्रीलिङ्गधारिणी भवसि ॥ २११ ॥

---

[1] चक्षुः प्रीतिर्मनःसङ्गः सङ्कल्पोऽथ प्रलापिता ।
जागरः कार्श्यमरतिर्लज्जात्यागोऽथ संज्वरः ॥
उन्मादो मूर्च्छनं चैव मरणं चरम विदुः ।
अवस्था द्वादश मताः कामशास्त्रानुसारतः ॥ (प्र. रु. र. प्र.)

[2] आदराद्दर्शनं चक्षुःप्रीतिरित्यभिधीयते । (प्र. रु. र. प्र.)

[3] पद्यमिदं 'त' प्रतौ दृश्यते, अन्यत्र न। इदमेव पद्यं पुनः अरति-नामकावस्थायाः निरूपणावसरे उदाहरणरूपेण दृश्यते। तत्र चतुर्थपादेः—'स वामदृष्टिः त्वरया जगाम' इति वर्तते

[4] मनःसङ्गः प्रियतमे नित्यं चित्तस्य विभ्रमः (प्र रु. र. प्र.)

नाथविषयमनोरथ[1]स्सङ्कल्पः ॥ यथा—

रामस्ससूर्त्तिकुसुमायुधजैत्रसूर्ति-
रारोपयिष्यति कदा [2]पदमेव वैरम् ।
आरोपयिष्यति कदा धनुरिन्दुमौले-
रारोपयिष्यति कदा हृदि मे प्रमोदम् ॥ २१२ ॥

प्रियगुणालापः [3]प्रलापः ॥ यथा—

'यथान्ववायप्रभवाभिमानी-
कृपासमुद्रस्सकलाभिरक्षी ।
विशेषतस्त्वाश्रितकल्पशाखी
रामः कथङ्कारमुपेक्षते माम् ॥ २१३ ॥

विनिद्रत्वं [4]जागरः ॥ यथा—

कृतोपवासा कृतमूर्तिरेषा
शिवाकृतिं त्वां परिचिन्तयन्ती ।
प्रजागरूका रघुनाथ सर्वां
करोति रात्रिं शिवरात्रिमेव ॥ २१४ ॥

---

[1] सङ्कल्पो नाथविषयो मनोरथ उदाहृतः॥ (प्र. रु. र. प्र.)

[2] पदमेष रङ्गे—त

[3] प्रलापः प्रियसंश्लिष्टगुणालाप उदाहृतः (प्र. रु. र. प्र.)

[4] जागरस्तु विनिद्रत्वम् (प्र. रु. र. प्र.)

शरीरतनुत्वं [1]कार्श्यम् ॥  यथा—

कार्श्यं गते तावकभक्तकार्श्ये
त्वच्चित्तधारामसकृत् कृशत्वम् ।
सदा भवध्यानपरायणायाः
सोढुं कथं शक्यमिलासुतायाः  ॥ २१५ ॥

अन्यत्र अप्रीति[2]ररतिः ॥  यथा—

[3]शिवार्चनोद्यानमुपागताया
महीसुतायाः कुचपर्वताग्रम् ।
विभिद्यलग्नान्तरतीव्रमग्ना
स वामदृष्टिस्त्वरया जगाम  ॥ २१६ ॥

यथा वा—

हारं न वाञ्छति न कामयते विहारं
नाहारमिच्छति न काङ्क्षति चाङ्गरागम् ।
व्याहारमृच्छति परेण न राम सीता
नामामृतं तव तु जीवति सेवमाना  ॥ २१७ ॥

---

[1] कार्श्यमङ्गस्य तानवम्  (प्र. रु. र. प्र.)

[2] अन्यत्राप्रं तिररतिः—(प्र. रु. र. प्र. ७५)

[3] एतत्पद्यं चक्षुःप्रीतिः इत्यस्य उदाहरणान्तरत्वेन त प्रतौ दृश्यते। इदं तु अत्र परिदृश्यते।

व्रीडामोचनं लज्जात्यागः ॥ यथा—

या काननप्रवसनादिव वीतलज्जा
स्वैरं जगाद धुरि मे विरहासहिष्णुः ।
सीतेयमत्र विगता[1]त्वनुपर्णशाले
किं लज्जसे वद चिरं त्वयि सानुषक्ता ॥ २१८ ॥

तापाधिक्यं [2]ज्वरः ॥ यथा—

पूर्णचन्द्रोदय त्वं वियोगज्वरोपपश्चतां
वाधसे मामिदं युज्यते ।
संविराजद्रसस्यौषधी शक्यते
किं महीजेति सन्तापमेत्युल्वणम् ॥ २१९ ॥

[3]उन्मादमरणयोः प्रागेवोदाहरणं कृतम्
वाह्येन्द्रियनिमीलनेन अन्तरिन्द्रियवृत्तिः [4]मूर्च्छना ।
रामेन्दुकिरणकुन्तैः मूर्च्छति पीडावियोगिनी सीता
विजयप्रयाणवार्ता[5]सञ्जीविन्याशु जीवयैनां त्वम् ॥ २२० ॥

---

[1] क्व नु वर्णशौरे—त

[2] तापाधिक्यं ज्वरो मतः—(प्र. रु. र. प्र.)

[3] स्थायिभावसहकारित्वेन उपाधिना सञ्चारित्वम् ।
रसास्वादनिमित्तत्वेनोपाधिना अवस्थात्वं चेति विवेकः
(प्रतापरुद्रीयम्—रत्नापणव्याख्याने रसप्रकरणम् प. २७०)

[4] मूर्च्छा त्वभ्यन्तरे वृत्तिः वाह्येन्द्रियनिमिलनात् ॥ (प्र. रु. र. प्र.)

[5] सञ्जीविन्याशु जीवयैना—त

शृङ्गारो द्विविधः। सम्भोगो विप्रलम्भश्चेति। [1]अत्र संयुक्तयोस्तु सम्भोगः। वियुक्तयोस्तु विप्रलम्भः। सम्भोगः यथा—

प्रियसखि जानकि नयने वीक्षेते तेऽद्य पाटलद्युतिनी।
प्रियतनुकण्टकवेधात् [2]गाढोन्मेषेण किं न निद्रा ते ॥ २२१ ॥

विप्रलम्भः पुनः अभिलाषेर्ष्याविरहप्रवासहेतुकतया [3]चतुर्विधः। तत्र अभिलाषो नाम सम्भोगात् प्रागनुरागः॥ यथा—

कदा वा चेतोऽभूः खरकिरणसन्तापिततनुः
तवोरःकासारे [4]तरुणिमजलापूरकलिते।
पतित्वा पाणिभ्यामुरसिरुहकुम्भग्रहमहं
विधाय क्रीडिष्याम्यनिशमवनीनन्दिनि कदा ॥ २२२ ॥

प्रियासक्त्या चित्तविक्रिया [5]ईर्ष्या।
तथा विप्रलम्भो यथा—

---

[1] तत्र—त

[2] गाढश्लेषेण

[3] अपरस्तु—अभिलाषविरहेर्ष्याप्रवासशापहेतुकः इति पञ्चविधः इति काव्यप्रकाशे उक्तम्। तत्र 'शापहेतुकः'—इति एकः भेदः पृथक् परिगणितः।

[4] तरुणिमजरापूरकलितेः—त

[5] (i) ईर्ष्या नाम नायकस्य अन्यासक्तिभवा चित्तविक्रिया (प्र. रु. र. प्र.)

(ii) प्रियस्य अन्यासक्त्यां चेतोविक्रिया ईर्ष्या—त

आरोपाद्धनुषो हरस्य दयिता रामस्य मैथिल्यभू
देवं भार्गवकार्मुकस्य नमनाल्लब्धा जयश्रीरपि ।
तेनेतः परमीर्ष्यया कृतमये नोपेक्षणीयेव सा
भूलोके बहुवल्लभा हि विदिताः प्रायेण भूपालकाः ॥ २२३ ॥

[1]विरहो नाम संयुक्तयोस्त्रीपुंसयोः केनापि प्रकारेण सङ्गमकालातिक्षेपः ।

यथा—

[2]वियोगिहिंस्र ननु पूर्णमासि
किं पूर्णचन्द्रं नयसीह मासि ।
निजाश्रितानामवनैकदीक्षं
तूर्णं तमेवानय रामचन्द्रम् ॥ २२४ ॥

यूनोर्देशान्तरवृत्तित्वं प्रवासः ॥ यथा—

आकारतस्स्मरति किं रघुरा.........
आकारतस्सरति ते विगतेति सीता ।
[3]मन्मोचनाय भवतीह किमाञ्जनेय
दग्धुं पुरं भवति जानकि वैरिणोऽपि ॥ २२५ ॥

---

[1] विरहो नाम लब्धसंयोगयोर्नायिकानायकयोः
केनचित् कारणेन पुनः समागमकालातिक्षेपः । (प्र. रु. र. प्र.)

[2] वियोगे हिंस्रं ननु पौर्णमासि–त

[3] मन्मोचनाय भवतीह किमाञ्जनेय दण्डं पुरं भवति जानकि वैरिणोऽपि–त

[1]रसाभासो यथा—

राभानुयायि भरतानुचलद्ध्वजिन्यां
वाराङ्गनाः पथितटाकविहारभाजः ।

---

[1] (i) तदाभासाः अनौचित्यप्रवर्तिताः
तदाभासाः रसाभासाः भावाभासाश्च ॥
(का. प्र. चतुर्थः उल्लासः—३५ का)

(ii) अङ्गेनाङ्गी रसः स्वेच्छावृत्तिवर्धितसम्पदा ।
अमात्येनाविनीतेन स्वामीवाभासतां व्रजेत् ॥
(र. सु. द्वि. वि. २६३ श्लो)

(iii) हास्याभिभूतः शृङ्गारः तदाभासो भविष्यति ।
हास्यो बीभत्समिलितो हास्याभास उदाहृतः ॥
वीरो भयानकाविष्टो वीराभास इतीरितः ।
बीभत्सकरुणाश्लेषादद्भुताभास उच्यते ॥
रौद्रः शोकभयाविष्टो रौद्रभास इतीरितः ।
हास्यशृङ्गारखचितः करुणाभास उच्यते ॥
वीभत्सोद्भुतशृङ्गारी वीभत्साभास उच्यते ।
रौद्रवीरानुषक्तश्चेदाभासाः स्याद्भयानके ॥
भावप्रकाशने—षष्ठोऽधिकारः १३२ पृ. १७—२३ पं
१३३ पृ.—१—२ पं

रक्तापरक्तयोश्चेष्टा यतो हासकारी नृणाम् ।
दृष्टा श्रुता सूचिताऽपि शृङ्गाराभासकारिका ॥

वासोपहारकुपिता ननु धावमाना
स्पष्टोरुमध्यमखिलान् स्म विहारयन्ति ॥ २२६ ॥

---

पूयशोणितमांसादिविष्ठालेपादयोऽपि च ।
हास्यं भिन्दन्ति यत्रैते स हास्याभास ईरितः ॥

सभासु योषितामध्ये शूरमानस्य कस्यचित् ।
भयात्पलायनं युद्धाद्वीराभास उदीरितः ॥

दिव्यादिदर्शनेऽस्त्रादिलेपोरस्ताडनादयः ।
अद्भुतं घ्नन्ति यत्तस्मात् अद्भुताभास इष्यते ॥

अवज्ञाक्षेपवाक्यादिरौद्रा कर्मकृतोद्यमः ।
बिभेति शोचति यदि स रौद्रभास उच्यते ॥

शोचतो हास्यशृङ्गारभूयिष्ठं चेष्टितं यदि ।
स एव करुणाभासः तद्भावश्चेत्स्वभावजः ॥

यत्तु बीभत्सरूपस्य सम्भोगो वनिताजनैः ।
रूपयौवनसम्पन्नैः बीभत्साभास उच्यते ॥

बिभ्रतो यत्र दृश्येत वीररौद्रादिभाषितम् ।
भयानकाभास इति कविभिः प्रविविच्यते ॥

भागद्वयं प्रविष्टस्य प्रधानस्यैकभागता ।
रसानां दृश्यते यत्र तत्स्यादाभासलक्षणम् ॥

(भावप्रकाशने षष्ठोऽधिकारः)

१३३ पृ. ३—२० पङ्क्तियः

अयं हास्यभूयिष्ठ. शृङ्गाररसाभासः ।

तिर्यग्गतशृङ्गाराभासो यथा—

हे कोक क्षणदामुखेन भवता विश्लेषितां त्वत्प्रियां
प्रातः प्राप्य पुनर्नितान्तमुदितो [1]विस्तीर्णपक्षाकुलः ।
कूजन् चुम्बितचञ्चुकोटि च मिथः पक्षान्तराले तया
कृत्वा स्वैररतिं सुखं स्वपिषि ते पुण्यानि किं वर्णये ॥ २२७ ॥

एवमाभासान्तराण्यप्युदाहार्याणि ॥

[2]भावोदयो यथा—

रामो विजित्य विमतं भवतीं दिदृक्षु-
रास्ते मुदेत्यभिनिशम्य हनूमदुक्तिम् ।
उत्फुल्लगण्डनयना पुलकाकुलाङ्गी
तस्थौ क्षणं प्रतिवचोरहितेव सीता ॥ २२८ ॥

अत्र हर्षोदयो गम्यते ।

[3]भावशान्तिर्यथा —

---

[1] विस्तीर्णरक्षाकुल —न

[2] (i) रसाभावतदाभासभावशान्त्यादिरक्रमः
ध्वनेरात्माङ्गिभावेन भासमानो व्यवस्थितः ॥
(ध्वन्यालोकः—२उ—३-का)

[3] भावस्य शान्तिरुदयः सन्धिः शबलता तथा—
(काव्यप्रकाशः—४ उल्लास—३६ का)

धरारजोधूसरचारुहारं न ते पयोधावतिनम्रमौलौ ।
आकृष्टचापस्य रघूत्तमस्य नेत्रान्तजातोऽरुणिमा निवृत्तः॥ २२९॥

अत्रामर्षस्य प्रशमः ।

भावसन्धिर्यथा—

सुदुर्निरोधैरवरोधरोदनैः
बहिः प्रभूतैरपि वीरगर्जितैः ।
पुरि क्षणं [1]स्थातुमशक्नुवन् स्वयं
दशाननो निर्गतवान् हतात्मजः ॥ २३० ॥

अत्र विषादामर्षयोस्सन्धिः ।

भावशबलता यथा—

[2]णराशिआणइकुडोतुहम्मुंन्य
चदोलहो अ फलिदोण णु खणेदे ।
दिईपि एधमयि एवं विरो इ देमा
कान्तारिणा अवतादिशकं मुकं मे ॥ २३१ ॥

---

[1] चित्रमशक्नुवन्—म

[2] णं राशियाण इ कुतो तु ह मं झ मं वचेदो वहे पथलि दोण णु खणेदे ।
दिक्तापि पे थमयित्व इ लाम देमा
कान्वारिणा अवहतादिशकं मुकं मे नुष्टजानकि कुतस्व मध्यमाम्व-
चेतो रथोऽद्य फलिते न तु लक्ष्मणः॥
दृष्टिप्रयेहमयैव विलोकितेयं कान्ताकिणास्म वहतादिशनामकर्म ॥
—त प्रतौ दृश्यते

अत्र विषादासूयाहर्षवितर्काणां शबलता ।

एतान्येवासंलक्ष्यक्रमव्यङ्ग्यस्य उदाहरणानि द्रष्टव्यानि ।

अथ [1]रससङ्करस्य उदाहरणं प्रदर्श्यते—

शृङ्गारकरुणयोस्सङ्करो यथा—

नित्यं मत्परिरम्भसंभ्रमजुषा वक्षस्थलेनामुना
देवीं वानर सार्वभौमवसुधां गाढं [2]सदालिङ्गसि ।
मद्वक्षोजविमर्दनिर्दयगतिः पाणिस्तवेतः परं
रम्भोरोजयुरो चलिष्यति दधौ तस्यां कृपा राघवः ॥ २३२ ॥

वीरभयानकयोस्सङ्करो यथा—

बाणोन्मर्दित[3]वीरवानरबलो रामाभिमुख्यागतः
तद्बाणाशनिजातपातविदलच्छारीर[4]मर्मान्तरः ।
मुष्टयाघात[5]विधूत राक्षसचमूसंमर्दभूमाकुलः
सङ्ग्रामाद्विमुखः [6]पलायत दशग्रीवोऽभिलङ्कापुरम् ॥ २३३ ॥

---

[1] रसाः कार्यवशात् सर्वे मिलन्त्येव परस्परम् ।
प्रथमं यो रसः ख्यातः स प्रधानो भविष्यति ॥ (भावप्रकाशः)

[2] समालिङ्गसि—त

[3] वानरभटो रामाभिमुख्या—त

[4] वर्मान्तरः-त

[5] विघात-त

[2] पलायितदशग्रीवोऽभिलङ्कापुरम्—त

एवं रसान्तरसङ्करोऽपि यथासम्भवमूह्यः ।

ननु रससङ्कराङ्गीकारे प्रधानयोरुभयोरपि रसयोर्वाक्यार्थत्वे-नार्थभेदाद्वाक्यभेदस्स्यादिति चेन्मैवम् । एकस्य रसस्य प्रधानत्वे अन्यरसस्य तदङ्गत्वेन अनुप्रवेशादुभयोः प्राधान्याभावात् ।

तदुक्तम् भावप्रकाशे—

[1]रसाः कार्यवशात् सर्वे मिलन्त्येव परस्परम् ।
प्रथमं यो रसः ख्यातस्तत्प्रधानो भविष्यति ।। इति ।

नन्वङ्गभूतो रसः चमत्कारं प्राप्नोति न वा? [2]नान्त्यः । रसत्व-व्याघातात् । नेतरः । रसत्वेन अङ्गत्वासम्भवात् । तस्मादयुक्तं रस-सङ्कर इति चेत् न । अङ्गभूतरसस्य चमत्कारसम्भवेऽपि रसान्तरोपस्कारक-त्वेन अङ्गत्वाङ्गीकारात् ।

तदुक्तम्—

गुणः कृतात्मसंस्कारः प्रधानमनुरज्यते ।
प्रधानस्योपकारे हि तथा भूयसि वर्तते ।।

इति । अत एव विरोधिनोरपि रसयोः कविप्रौढोक्तिबलेन एकत्र समावेशो न विरुद्धः । [3]अत्र शृङ्गारबीभत्सौ वीरभयानकौ रौद्राद्भुतौ हास्यकरुणौ

---

[1] भावप्रकाशने षष्ठोऽधिकारः

[2] नाद्य —म

[3] (i) शृङ्गारबीभत्सरसौ तथा वीरभयानकौ ।
रौद्राद्भुतौ तथा हास्यकरुणौ वैरिणौ मिथः ।।
(शृङ्गारतिलके)

च परस्परं विरुद्धाविति [1]मन्तव्यौ ॥ तथा [2]शृङ्गाराद्धास्यस्य रसस्य रौद्रात् करुणस्य वीरादद्भुतस्य बीभत्साद्भयानकस्याप्युत्पत्तिरप्यवगन्तव्या ।

रसादेरङ्गत्वे रसवदाद्यलङ्कारा भवन्ति ।

तदुक्तम्—साहित्यचिन्तामणौ—

रसाङ्गभूतो रसवत् प्रेयो भावस्तथाविधः ।
तदाभासस्तथौर्जस्वीभावशान्तिस्समाहितम् ॥ इति

एतेषामुदाहरणान्यलङ्कारसर्वस्वे द्रष्टव्यानि ॥
विशेषाभावान्नात्र तदुदाहरणप्रपञ्चः ॥

[3]व्यभिचारिभावानां तत्तद्रसानुगुण्यं शृङ्गारतिलकादावुक्तम् प्रदर्श्यते ।

---

(ii) रसानां परस्परविरोधः यथा वीरशृङ्गारयोः शृङ्गारहास्ययोः रौद्रशृङ्गारयोः वीराद्भुतयोः वीररौद्रयोः रौद्रकरुणयोः शृङ्गाराद्भुतयोर्वा—

ध्वन्यालोकः-३ उद्योतः २४ का

1 मन्तव्यम्—त

2 हास्यो भवति शृङ्गारात् करुणो रौद्रकर्मणः ।
अद्भुतश्च तथा वीरात् बीभत्साच्च भयानकः ॥
(शृङ्गारतिलके)

3 शङ्कासूयाभयं ग्लानिर्व्याधिश्चिन्ता स्मृतिर्धृतिः ।
औत्सुक्यविस्मयावेगा व्रीडोन्मादौ मदस्तथा ॥
विषादो जडतानिद्रावहित्था चापलं मृतिः ।
इति भावाः प्रयोक्तव्याः शृङ्गारे व्यभिचारिणः ॥

शङ्कासूयाभयग्लानिव्याधिचिन्तास्मृतिधृत्यौत्सुक्यविस्मयावेगव्रीडोन्मा-
दमदविषादजडतानिद्रावहित्थाचापलमृतयः शृङ्गाररसे व्यभिचारिणः ।

[1]श्रमचापलनिद्रालस्यग्लानिशङ्कासूयावहित्था हास्ये व्यभिचारिणः ।

दैन्यचिन्ताग्लानिनिर्वेदजडतास्मृतिव्याधयः करुणे व्यभिचारिणः ॥

हर्षासूयागर्वोत्साहमदचापलोग्रता रौद्रे व्यभिचारिणः ।

---

श्रमश्चपलता निद्रा स्वप्नो ग्लानिस्तथैव च ।
शङ्कासूयावहित्था च हास्ये भावा भवन्त्यमी ॥
सन्त्रासो मरणं दैन्यं ग्लानिश्चैव भयानके ।
अपस्मारो विषादश्च भयं रोगो मृतिर्मदः ।
उत्साहश्चेति विज्ञेया भावा बीभत्ससम्भवाः ।।
आवेगो जडता मोहो हर्षण विस्मयः स्मृतिः ।
इति भावा निबद्धव्या रसज्ञैरद्भुते रसे ।
दैन्यं चिन्ता तथा ग्लानिर्निर्वेदो जडता स्मृतिः ।
व्याधिश्च करुणे वाच्या भावा भावविशारदैः ॥
हर्षोऽसूया यथा गर्व उत्साहो मद एव च
चापल्यमुग्रता चैव रौद्रे भावाः प्रकीर्त्तिताः ॥
अमर्षः प्रतिबोधश्च वितर्कोऽथ मतिर्धृतिः ।
क्रोधोऽसूयाथ संमोह आवेगश्चोपहर्षणम् ॥
गर्वो मदस्तथोग्रत्वं भावा वीरे भवन्त्यमी ।
रसः सर्वोऽपि सम्पूर्णस्तिरोधत्ते रसान्तरम् ॥

(शृङ्गारतिलकम्)

[1] श्रमचापलनिद्रास्वप्नग्लानिशंकासूयावहित्था हास्ये व्यभिचारिणः-त

अमर्षप्रीतिबोधवितर्कमतिधृतेक्रोधासूयामोहावेगामर्षगर्वमदोग्रता वीररसे व्यभिचारिणः ।

शान्तेऽपि मतिहर्षादयो व्यभिचारिणो यथासम्भवम् ऊहनीयाः ॥

इति श्री चरुकूरिकोण्डुभट्टोपाध्यायतनययज्ञेश्वरदीक्षितेन
तिरुमलयज्वप्रियसोदरेण विरचिते अलङ्कारराघवे रसप्रकरणं [1]समाप्तम् ।।

---

निरूपणेनान्यमपारसानां कृते न शृङ्गाररसाधिदैवम् ।
चतुर्थजन्ये शमहावतारः प्रीतिं परां यातु रघुप्रवीर ॥

इति पद्यम् ऊहनीयाः इत्यनन्तरं त प्रतौ दृश्यते—

---

[1] सम्पूर्णम्—त

# अथ दोषनिरूपणम्

[1]अथ काव्यनिरूपणानन्तरं गुणानां सम्यग्विवेकाय दोषा निरूप्यन्ते ।
ननु "दोषः काव्यापकर्षस्य हेतुः शब्दार्थगोचर" इति विद्यानाथः ।

मुख्यार्थहतिर्दोषो रसश्च मुख्यः तदाश्रयाद्वाच्यः ।
उभयोपयोगिनस्स्युः शब्दाद्यास्तेन तेष्वपि सः ।। इति साहित्यचिन्तामणिकारः ।

धर्मापकर्षहेतुर्यस्स दोष इति कथ्यते इति काव्यप्रकाशिकाकारः ।

तत्र न तावद्विद्यानाथलक्षणं युक्तम् । आत्माश्रयान्योन्याश्रयप्रसङ्गात् । 'अदोषौ सगुणौ सालङ्कारौ शब्दार्थौ काव्यमिति । तेन काव्यलक्षणस्य उक्तत्वेन दोषज्ञाने दोषज्ञानमित्यात्माश्रयः । काव्यज्ञाने च दोषज्ञानं दोषज्ञाने च तदभावशब्दार्थरूपकाव्यज्ञानमित्यन्योन्याश्रयः । [2]किञ्च काव्यापकर्षहेतुतावच्छेदकं किञ्चिदस्ति वा न वा । नाद्यः। तदभावे तद्धेतुत्वस्यैव दुर्ग्रहत्वेन इतरभेदसाधने अज्ञानासिद्धिप्रसङ्गात् । आद्येऽपि [3]दोषत्वं वा अन्यद्वा । नाद्यः। आत्माश्रयप्रसङ्गात् । द्वितीये लाघवात् तदेव लक्षणमस्तु किमनेन कण्ठशोषणेन ? किञ्च कोऽयं काव्यापकर्षो नाम यद्धेतुत्वं दोषत्वं स्यात् । तस्यावयवप्रच्युतिर्वा दुष्टं काव्यमिति व्यवहारविषयत्वं वा । सत्कविहासास्पदत्वं वा । अप्रचयगमनं वा । उत्तमचरितादितरत्वं वा ? शब्दार्थदूषितत्वं वा ; जातिविशेषो वा ?

---

[1] दोषनिरूपणं—मदरास् पत्तनस्य अडयार् ग्रन्थालयप्रतौ अलङ्कारनिरूपणानन्तरं दृश्यते ।

[2] किन्तु—म

[3] दोषार्थं वा—म

काव्याभासता वा ? अन्यद्वा ? नाद्यः। काव्यस्य निरवयवस्य अवयवप्रच्युतेरसंभवात्। न द्वितीयः। कर्तृवर्ण्यदोषादावतिव्याप्तेः। शूद्रपतितादिकृतकाव्यं दुष्टं काव्यमिति व्यवहारदर्शनात्। असद्वर्णनीयकादम्बर्यादावपि तथा व्यवहारदर्शनाच्च। न तृतीयः। गुणाभावादावतिव्याप्तेः। गुणरहितेऽपि काव्ये सत्कवीनां ह्रासोदयात्। न चतुर्थः। तत्प्रयोजकदुरदृष्टादावतिव्याप्तेः। न पञ्चमः। च्युतसंस्कारादीनाम् उत्तमपुरुषचरितानङ्कितत्वं प्रति अहेतुत्वादसम्भवप्रसङ्गात्। न षष्ठः। तेषामिदानीमपि असिद्धेः [1]आश्रयापत्तेः। न सप्तमः। जातेर्नित्यत्वेन तद्धेतुत्वासम्भवेन असम्भवप्रसङ्गात्। नाष्टमः। गुणाभावादावतिव्याप्तेः। न नवमः। तस्यानिर्वचनात्। तस्मान्न तद्दोषलक्षणं युक्तम्। यदपि काव्यप्रकाशिकाकारलक्षणं मुख्यार्थहतिर्दोष इति। मुख्यार्थापकर्षो दोष इत्यर्थः। तदपि चिन्त्यम्। गुणाभावेऽतिव्याप्तेः। ननु गुणाभावउत्कर्षाभावरूपो नापकर्ष इति चेन्न। उत्कर्षाभावरूपस्यैव अपकर्षरूपत्वात्। गुणाभावेऽप्यपकृष्टोऽर्थ इति व्यवहारात्। ननु तथापि गुणाभावोऽपकर्षहेतुरेव न तद्रूप इति नोक्तदोष इति चेत् तर्हि अप्रयुक्तादेरप्यपकर्षहेतुत्वेन न तद्रूपत्वाभावात् असम्भवप्रभवप्रसङ्गः। ननु हेतुहेतुमतोरभेदविवक्षया तथोक्तिर्युक्तेति चेत् तर्हि तत एव गुणाभावेऽप्यतिव्याप्तिर्वज्रलेपायितैव। [2]तथापकर्षोऽपि प्राक्तनन्यायेन निर्वक्तुमशक्य एव। अतो न तदपि लक्षणं युक्तम्। अत एव न साहित्यचिन्तामणिकारलक्षणमपि युक्तम्। [3]अपकर्षहेतुत्वात्।

---

[1] आत्माश्रयोपपत्तेः—त

[2] अर्थापकर्षोऽपि—त

[3] अपकर्षहेतुतातदवच्छेदकयोः—त

तदवच्छेदकयो[1]र्दुर्निर्वचनात् । किञ्च किमिदं काव्यदोषलक्षणं किं वा दोषमात्रलक्षणम् । नाद्यः । [2]स्वक्रुनधर्मकीर्तनादावतिव्याप्तिप्रसङ्गात् । [3]धर्मः क्षरतीति कीर्तनादिति वचनात् तस्यापि धर्मापकर्षहेतुत्वात् । नेतरः । इतरभेदसाधने भागेऽर्थान्तरापत्तेः । तस्माद्दोषलक्षणं दुर्वचमिति चेदत्रोच्यते–

आत्मगणनिष्ठत्वे सति गुणाभावव्यतिरिक्तत्वे सति गुणत्वविरुद्धत्वेन-प्रसिद्धधर्माधिकरणं दोष इति दोषलक्षणनिष्कर्षः । अत्र गुणेष्वतिव्याप्ति-निरासाय गुणत्वविरुद्धत्वेनेत्युक्तम् । विरुद्धधर्मा अप्रयुक्तादयः विरुद्धत्व-पदेन सहानवस्थानविवक्षया घटत्वादावतिव्याप्तिनिरासाय प्रसिद्धेरित्युक्तम् । घटत्वादेर्वस्तुतो गुणत्वविरोधेऽपि तत्त्वेन प्रसिद्धेरभावात् तेन तद्व्यावृत्तिः । गुणाभावेऽतिव्याप्तिनिरासाय द्वितीयं सत्यन्तं विशेषणम् । जगणरगणादि-दोषेष्वतिव्याप्तिनिरासाय [4]गणादिनिष्ठत्वे सतीत्युक्तम् । उपपातकादिदोषेऽति-व्याप्तिनिरासाय आत्मपदम् इति विशेषणोपयोगः । न च गणादिदोषाः काव्यदोषा एवेति न तद्व्यावृत्त्यर्थं विशेषणदानम् युक्तमिति वाच्यम् । एतेषां काव्यदोषत्वेन आलङ्कारिकैरपरिगणितत्वात् तत्परिगणितानामेव लक्षणनिर्वच-नौचित्यात् ।

यद्वा प्रथमसत्यन्तं व्यर्थम् । न च गणदोषेष्वतिव्याप्तिः । तेषामपि काव्यदोषत्वेन तत्पृथक्करणानौचित्यात् । आलङ्कारिकाणां तदपरिगणनं तु वृत्तशास्त्रसिद्धत्वेन न तु काव्यदोषत्वेन । यथा वेदप्रामाण्यं

---

1 दुर्निर्वचत्वात्–त

2 स्वक्रुनकर्मणि कीर्तनादौ–म

3 धर्मःक्षरति कीर्त्तनादिति–त

4 गुणादिनिष्ठत्वे सति–त

पूर्वमीमांसाशास्त्रसिद्धमिति नेचरमीमांसाशास्त्रे [1]तत्कारैः निरूपितमेवमेवेति । न च उपपातकादौ अतिव्याप्तिः । गुणत्वशब्देन श्लेषत्वादिव्यापकधर्मविशेषस्य ग्रहणात् उपपातकादीनां च तद्विरुद्धधर्माधिकरणत्वाभावात् । अतोऽनवद्यं दोषलक्षणम् ।

इदञ्च अनुगतोपाधिमात्रं न दूषकताबीजम् । अनेन कारणेन अनुद्भावनात् । [2]किन्तु प्रयुक्तत्वं दोष इत्याद्याकारेणोद्भावनात् अप्रयुक्तत्वादिप्रातिस्विकरूपमेव दूषकताबीजम् । तत्रापि न्यूनपदादेः न्यूनपदत्वमात्रेण न दूषकता । किन्तु गुणादोषदशानापन्ना गुणा दोषदशानापन्नन्यूनपदत्वादिरूपेणैव । तेन यत्र न्यूनपदं गुणः ।

गाढालिङ्गनवामिनीकृतकुचप्रोद्भिन्नरोमोद्गमा
सान्द्रस्नेहरसातिरेकविगलत्काञ्चीप्रदेशापरा ।
मामामानदमातिमामलमिति
क्षामाक्षरोल्लापिनी
सुप्ता किन्नु कृता नु किं मनसि
मे लीना विलीना नु किम् ॥ २३४ ॥

इत्यादौ । तत्र तस्य न दूषकत्वं [3]गुणदशानापन्नत्वात् । यत्र तत्र दोषो गुणः ।

---

[1] रत्नाकरै :

[2] किञ्च-त

[3] दशापन्नत्वात्—न

तिष्ठेत्कोपवशात्प्रभावपिहिता दीर्घं न सा कुप्यति
स्वर्गायोत्पतिता भवेन्मयि पुनर्भावार्द्रमस्याः मनः ।
तां हर्तुं विबुधद्विषोऽपि न च मे शक्ताः पुरोवर्त्तिनीं
सा चात्यन्तमगोचरं नयनयोर्यातेति कोऽयं विधिः ॥ २३५ ॥

[1]इत्यादौ तत्र पिहितेत्यनन्तरं नैतत् यत इति न्यूनपदानि न गुणः न दोषः । तत्र तस्य न दोषत्वापत्तिः । तस्य अगुणादोषदशापन्नत्वात् । न चोक्त[2]दशानापन्नतयोद्भाव्यत इति कथं तेन रूपेणापि दूषकत्वमिति वाच्यम् । दोषोद्भावनमहिम्नैव तस्याप्युद्भावनमिति ज्ञातत्वात् । अन्यथा दोषत्वोद्भावनमेव [3]न स्यात् । तथा सन्दिग्धग्राम्याश्लीलादिकपदतदितरपदकथितपदपतत्प्रकर्षसमासपुनरात्तपदस्थसमासादेरपि न प्रातिस्विकरूपेण दूषकता । तेषां तेन तेन रूपेण तत्र गुणत्वदर्शनात् । तदुदाहरणानि तु काव्यप्रकाशे प्रपञ्चितानि द्रष्टव्यानि । किन्तु [4]गुणदशानापन्नसन्दिग्धत्वादिरूपेणैवेति सन्तोष्टव्यमायुष्मता । स च दोषो द्विविधः । शब्ददोषोऽर्थदोषश्चेति । शब्ददोषोऽपि द्विविधः । पददोषो वाक्यदोषश्चेति । तत्र पददोषास्सप्तदश ।

अप्रयुक्तापुष्टार्थासमर्थनिरर्थकनेयार्थच्युतसंस्कारसन्दिग्धाप्रयोजकक्लिष्टगूढार्थग्राम्यान्यार्थप्रतीतिकाश्लीलाविमृष्टविधेयांशविरुद्धमतिकृत्परुषभेदात् ।

---

1 इत्यादिर्न तत्र पिहितेत्यनन्तरं—म

2 दशानापन्नत्वं नोद्भाव्यत इति—त

3 तस्या—त

4 गुणदशापन्नसन्दिग्धत्वादि—त

१) तत्र [1]कविभिरप्रयुक्तमप्रयुक्तत्वम् ।

यथा—

वचन्ति वेदान्तिवचांसि रामं
न मुख्यवृत्त्या मुखरं सुराणाम् ।
तमेकमालापशतैः किमत्र
[2]चेतोऽपि चेतोविचलन्न वेदः ॥ २३६ ॥

अत्र वचन्तीत्यप्रयुक्तदोषः । वदन्तीति सम्यक् पाठः ।

२) प्रकृतानुपयुक्तार्थमपुष्टार्थम् यथा—

दिवि सूर्य इवाम्नायैरवतीर्णो रघूत्तमः ।
रेजे रघुकुले साकं द्वादशार्धार्धसोदरैः ॥ २३७ ॥

अत्र त्रित्वविवक्षायां द्वादशार्धार्धसोदरैः इति अपुष्टार्थः । त्रिभिः प्रियसहोदरैरिति ।

३) [3]सम्यक्पाठयोगमात्रप्रयुक्तमसमर्थम् ।

---

[1] अप्रयुक्तं तथा आम्नातमपि कविभिः नादृतम्
(काव्यप्रकाशः—७ उल्लास १४४)

[2] वेदोऽपि—न

[3] (i) योगमात्रप्रयुक्तं यदसमर्थं तदुच्चते ।
(प्र. रु. दोषप्रकरणम्)

(ii) असमर्थ-यत तदर्थं पठ्यते न च तत्रास्य शक्तिः ।
(का. प्र. ७उ)

यथा—

सपदि समिति मुक्ताः कौशिकादिष्टमन्त्रैः
हरिपदपरिद्रष्टा रामबाणोरगेन्द्राः ।
प्रययुरधिक तृप्तिं शल्यवक्त्रैः[1] प्रपीतैः
सकलसुकृतलोकप्राणवायूपहारैः ॥ २३८ ॥

अत्र राक्षसपरपुण्यशब्दार्थे सुकृतलोकशब्दो असमर्थः ॥ सकल-बुधवैरीति सम्यक् पाठः ।

४) पादपूरणमात्रं निरर्थकम् ॥ यथा—

*पौलस्त्यादीनतिभयकरान् पाप पुरुपान् कृपापात्रे
ते वै मयि निपतितान् पातकभरान् ।
क्षणात्संहृत्य्योर्वीमिव मम तनूमानतनुलघुं
गुरो त्वं राम स्याः लघुरितरथाशेषभुवने ॥ २३९ ॥

अत्र वै शब्दो निरर्थकः । कृपायाः पात्रे त इति सम्यक्पाठः ॥

५) [2]स्वसङ्केतमात्रप्रसिद्धो नेयार्थम् ॥

यथा—

---

1 वृत्ति शल्यवक्त्रैः—म

2 (i) स्वसङ्केतमात्रे प्रसिद्धार्थं नेयार्थम्—त

(ii) निरूढाः लक्षणाः काश्चित सामर्थ्यात् अभिधानवत् ।
क्रियन्ते साम्प्रतं काश्चित काश्चिन्नैव स्वशक्तितः ॥
इति यत् निषिद्धं लाक्षणिकम् ॥
(तन्त्रवार्तिके ३-१-६-१२)

*सर्वत्र मातृकासु पाठदोषाः दृश्यन्ते ।

बालापशब्दरचनामुदितः पिता तद्-
ज्ञानुषङ्गिमलकल्मषमिवातिरूढाम् ।
मद्दुष्टवाक्यविनुतैरतिमोदमानः
सर्वां क्रियां शमय राम दुरुत्तरां मे ॥ २४० ॥

अत्र दुरुत्तरां क्रियामित्यनेन दुष्क्रियाशब्दोपस्थितौ तेन दुष्कर्मरूपार्थ प्रतीतेः नेयार्थत्वम् ॥

सर्वात्मना शमय राघव दुष्क्रियां मे इति सम्यक्पाठः ॥

६) [1]शब्दशास्त्रविरुद्धं च्युतसंस्कारम् ।

यथा—

[2]आरभ्य जन्मारचितानशेषान्
दोषान् मदीयान् हर राम रक्ष ।
नो चेज्जगत्पालनलोपशक्ति-
र्भवेत लोकेश्वर कुण्ठिता ते ॥ २४१ ॥

अत्र भवेतेति भवतेस्सप्तम्यामात्मनेपदं च्युतसंस्कारम् ॥

भवेत् त्रिलोकीश्वरेति सम्यक्पाठः ।

७) [3]सन्दिग्धार्थप्रतीतिकरं सन्दिग्धम् ।

---

[1] च्युतसंस्कृति—व्याकरणलक्षणहीनम् ॥ (का. प्र. ७उ)

[2] आरब्धजन्मा—त

[3] सन्दिग्धं तन्मतं यत्र स्यात् सन्दिग्धार्थप्रतीतिकृत् ।
(प्र. रु. दो. प्र.)

यथा—

विभिन्नदोषानुगमस्य भानोः
कुलेऽवतीर्णो रघुनायक त्वम् ।
दोषानुषङ्गं हरमामकं तत्
वामो हि पुंसः स्वकुलानुसारः ॥ २४२ ॥

अत्र वामपदं सुन्दरवक्रार्थयोस्सन्दिग्धम् ।

युक्तो हि पुंसः स्वकुलानुसार इति सम्यक् पाठः ।

८) पदादतिदूरावगतिः [1]क्लिष्टम् ।। यथा—

मयार्जितानि पापानि रामचन्द्र निवर्तय ।
श्रीशार्धमन्दिरोल्लासहेतुद्योतस्तमो यथा ॥ २४३ ॥

अत्र श्रीशो विष्णुः तस्यार्द्धं दाराः । लक्ष्मीः इति यावत् । अर्धो वा एष आत्मा यत्पत्नीति श्रुतेः । [2]तस्या मन्दिरं पद्मं तदुल्लासस्य हेतुद्योतः प्रकाशस्सूर्यः प्रतीयत इति क्लिष्टता ॥

पद्मबन्धुर्यथा कृष्णपक्षगाढतमं तमः इति सम्यक् पाठः ॥

९) अप्रसिद्धार्थं [3]गूढार्थम् ॥ यथा—

---

[1] (i) क्लिष्टं यतोऽर्थप्रतिपत्तिः व्यवहिता ॥ (का. प्र. ७ उ.)
(ii) क्लिष्टं तदर्थावगतिर्दूरदूरायतो भवेत् । (प्र. रु. दोषप्रकरणम्)

[2] तस्या मन्दिरं तदुल्लासस्य—म

[3] (i) प्रयुक्तमप्रसिद्धार्थे गूढार्थं परिकीर्त्यते । (प्र. रु. दो. प्र.)
(ii) निहतार्थं यत् उभयार्थं अप्रसिद्धेऽर्थे प्रयुक्तम् (का.प्र.७उ.)

दुष्कर्मजातं हर मे रामचन्द्रान्यथा मया ।
विलब्धे ते [1]क्रियाजाले तत्फलं भोक्ष्यते भवान् ॥ २४४ ॥

अत्र प्राप्त्यर्थतया प्रसिद्धस्य विलब्धशब्दस्य दानपरत्वेन प्रयोगात् गूढार्थता ।

'अर्पिते ते क्रियाजाल' इति सम्यक् पाठः ॥

१०) पामरव्यवहारप्रसिद्धं ग्राम्यम् ॥

यथा—

निवर्त्य रामाम्बुद दोषतापं
त्वं भोगयोनौ भवदाश्रितानाम् ।
दयामृतैस्सान्द्रविमृष्यमाणै
रोमाञ्चशष्पौघमुदञ्चयाशु ॥ २४५ ॥

अत्र योनिशष्पशब्दौ ग्राम्यौ ॥

[2]जातं त्वमङ्ग भवदाश्रितानां रोमाञ्चजालं समुदञ्चयाशु । इति सम्यक् पाठः ।

११) रूढिप्रच्युतमन्यार्थम् ॥ यथा—

वेदान्तवेद्यावनिनन्दनीश
साक्षात् कृतिस्ते दुरितांतसाध्या

---

[1] क्रिया जाते-त

[2] जालं-त

[1]तथैव चान्तश्रितपातकानां

विभक्ततुष्ट्यै हर दोषमेतम् ॥ २४६ ॥

अत्र विभक्ततुष्ट्यै हर दोषमेतं दोषमन्योन्याश्रयरूपं हरेति वियुक्तवाचकत्वेन प्रसिद्धस्य भक्तपरत्वेन प्रयुक्तत्वात् अन्यार्थत्वम् ॥

भक्ततुष्ट्यै इति सम्यक् पाठः ॥

१२) अश्लीलं त्रिविधम्। अमङ्गलं [2]व्रीडाकरं जुगुप्साकरञ्चेति।

i) तत्रामङ्गलं यथा—

हर मादृशदासानां राम चेतसि पातकम्।
न युज्यते तवोपेक्षा श्राद्धपूजाकृतां नृणाम् ॥ २४७ ॥

अत्र श्राद्धपदममङ्गलम्।

अत्र भक्त्या पूजाकृतामिति सम्यक् पाठः ॥

ii) व्रीडाकरं यथा—

मनो यन्मैथुनं तत्र सीतया सहितस्य ते।
जातु स्मरति तत्पापं क्षणाद्दंदह्यते भवान् ॥ २४८ ॥

अत्र मैथुनमित्यनेन सुरतप्रतीतेः व्रीडाकरत्वम् ॥

मनो यत्प्रणिनामिति सम्यक् पाठः।

iii) जुगुप्साकरं यथा—

---

[1] तयैव—त

[2] व्रीलाकरं—म

त्वं राम कल्याणगुणाभिराम क्षेत्राण्यमेध्यानि पुनास्यमूनि ।
पदारविन्दन्यसनैः पवित्रैः त्वदीयनामस्मरणानुभावैः ॥ २४९ ॥

अत्रामेध्यानीति नरपुरीषप्रतीतेः जुगुप्साकरत्वम् ।

अत्र क्षेत्राण्यपात्राणीति सम्यक्पाठः ।

गुणीभूतविधेयम[1] विमृष्टविधेयांशम् ॥

यथा—

अनेककोटीरपि नाहमेनसां
स्फुटं विधायापि बिभेमि किञ्चन ।
रघुप्रवीराखिलदेवतामणे
दयारसापूरितदृक्भवत्ययम् ॥ २५० ॥

अत्र भवति दयारसापूरितदृगिति दयारसापूरितदृक्त्वं विधेयम् ॥

तस्य उपसर्जनत्वेन अविमृष्टविधेयांशता ॥

दयारसापूरितलोचनेति सम्यक् पाठः ।

विपरीतार्थधीकरं [2]विरुद्धमतिकृत् ।

यथा—

चण्डदीधितिमयूखमण्डलं पूर्वपर्वत[3]गुणान्तरं यथा ।
हंसि रामनिजभक्तमानसं तत्क्षणेन हरसे तमोव्रजम् ॥ २५१ ॥

---

[1] (i) अविमृष्टः प्राधान्येन अनिर्दिष्टः विधेयांशः यत्र तत्—
अविमृष्टविधेयांशम्—काव्यप्रकाशः—७ उल्लासः

[2] विपरीतार्थधीर्यस्माद्विरुद्धमतिकृन्मतम् ॥ (प्र. रु. दो. प्र.)

[3] महान्तरं यथा—त

अत्र हंसीत्यनेन हिंसारूपार्थप्रतीतेः विरुद्धमतिकृत् ॥ यासीति सम्यक् पाठः ।

यथा वा—

भक्तानामघसन्तापं हरसे रघुनन्दन ।
भवानीपतिरत्युग्रं यथा हालाहलानलम् ॥ २५२ ॥

अत्र भवस्य पत्नी भवानी, तस्याः पतिरिति पार्वत्याः पत्यन्तरप्रतीतेः विरुद्धमतिकृत् ।

[1]पार्वतीपतिरिति सम्यक् पाठः ।

परुषाक्षरविहितं [2]परुषम् । यथा—

योगीन्द्रहृदयावास राम मे हृद्गत तमः ।
त्वत्पादपद्मनखररुट्त्विट्क्षुण्णं क्षणात् कुरु ॥ २५३ ॥

तेजसा शान्तमातनु इति सम्यक्पाठः ॥

अथ वाक्यदोषाः प्रदर्श्यन्ते ।

शब्दहीनक्रमभ्रष्टविसन्धिपुनरुक्तिमद्व्याकीर्णवाक्यसङ्कीर्णापूर्णवाक्यगर्भितभिन्नलिङ्गभिन्नवचनन्यूनोपमाधिकोपमाछन्दोभङ्गयतिभ्रष्टाशरीरारीतिकविसर्गलुप्तास्थानसमासवाच्यवर्जित- समाप्तपुनरात्तसम्बन्धवर्जितपतत्प्रकर्षाधिकपदप्रक्रमभङ्गभेदाच्चतुर्विंशतिसंख्याकाः ॥

---

[1] अपर्णापतिरिति—त

[2] परुषं नाम तद्यत् स्याद्विहितं परुषाक्षरैः (प्र. रु. दो. प्र.)

(i) [1]अत्र शब्दशास्त्रहतं वाक्यं [2]शब्दहीनम् ॥

यथा—

चित्ते त्वया सञ्चरता पदाभ्यां
हृतं तमो योगभृतामशेषम् ।
न दृश्यते त्वय्यपि राम युक्तं
न ह्यस्ति सूर्येऽपि हृतान्धकारः ॥ २५४ ॥

अत्र पदाभ्यां सञ्चरतेति वाक्यदोषोद्भावनया न पददोषशङ्कावकाशः । [3]समस्तृतीयायुक्तादिति संपूर्वात् तृतीयायुक्ताच्चरतेः आत्मनेपदविधानात् । चलतेति सम्यक्पाठः ।

(ii) [4]क्रमभ्रष्टं द्विविधम् । अर्थक्रमभ्रष्टम् । शब्दक्रमभ्रष्टं चेति । तत्र अर्थक्रमो यत्र भ्रश्यति तदर्थक्रमभ्रष्टम् ॥

यथा—

अधिवसति ममान्तरङ्गरङ्गं
भवति यथा रघुनाथ नीलमेघे ।
इह समुदितपापरूपताप-
स्फुटमुपगच्छति सद्य एव शान्तिम् ॥ ॥ २५५ ॥

---

[1] त—तत्र

[2] शब्दशास्त्रहतं वाक्यं शब्दहीनं प्रकीर्त्यते ॥ (प्र. रु. दो. प्र.)

[3] समस्तृतीयायुक्तादिति संपूर्वात् तृतीयायुक्ताच्चरतेरात्मने पदविधानात् सञ्चरसीति सम्यक्पाठः—त

[4] क्रमभ्रष्टं भवेदार्थः शाब्दो वा यत्र न क्रमः ॥ (प्र. रु. दो. प्र.)

अत्र यथा नीलमेघ इति वक्तव्ये भवति यथेत्युक्तेः अर्थक्रमभङ्गः। 'रघुकुलतिलक त्वयि मेचके यथाब्दे' इति सम्यक्पाठः।

यत्र शब्दक्रमो भ्रश्यति तत् शब्दक्रमभ्रष्टम् ॥ यथा—

'हेमनीलाम्बुदाकारौ भवन्तौ रामलक्ष्मणौ।

निरस्य पातकव्रातं प्रसन्नौ भवतां मम ॥ २५६ ॥

अत्र नीलाम्बुदहेमाकाराविति वक्तव्ये हेमनीलाम्बुदाकाराविति शब्दक्रमभङ्गः ॥

'नीलाम्बुदस्वर्णरुचाविति' सम्यक्पाठः।

(iii) सन्ध्यभावो वा विपरीतसन्धिर्वा [1]विसन्धिः।

तत्राद्यो यथा —

चित्तालवालेऽघतरूनुदीतान्

उन्मूलय त्वं मम रामचन्द्र।

अर्थेऽति नीचेऽथवेति त्वयालं

तथा परं कारय किङ्करेण ॥ २५७ ॥

अत्रानीचे सन्धि अथवेति सन्ध्यभावः। नीचक्रियायामथवेति सम्यक्पाठः अत्र अति नीचेऽथवेति सम्यक्पाठः।

द्वितीयो यथा —

त्वं सुप्रसन्नो विविधप्रबन्धग्रंथं वराय रामचन्द्र लोकेन्यावाशाश्रुतिकीर्तिभावो भवेति तीव्रप्रबलापकीर्तिः[2]—

---

[1] विसंहितो विरूपो वा यस्य सन्धिः विसन्धि तत् ॥ (प्र. रु. दो. प्र)

[2] मातृकायामेव दोषेऽस्ति।

अत्र प्रबन्धवधमिति विरूपसन्धिः

प्रबन्धपापं हरेति सम्यक्पाठः—

(iv) [1]शब्दार्थपौनरुक्त्यं पुनरुक्तवाक्यम् ।

यथा—

रामनाम्नस्तवध्वस्तमहापातकसन्ततेः ।
ममोपपातकव्रातं किं यत्र स्वोपपातकम् ॥ २५८ ॥

अत्र सर्वमपि पौनरुक्त्यमिति शब्दार्थपौनरुक्त्यम् ।

क्रियासर्वात्मनार्जितमिति सम्यक् पाठः ॥

(v) विभक्तीनां परस्परान्वये व्याकीर्णे व्याकीर्णम् । यथा—

नेत्रेण भक्त्याभय[2]नाममुद्रां
हस्तेन कारुण्यरसं दधानः ।
प्रसीद सौमित्रिमहीसुताभ्यां
राम क्व मे स्थास्यति [3]पापहारः ॥ २५९ ॥

---

[1] शब्दार्थपौनरुक्त्यं पुनरुक्तं वाक्यं यथा—
रामनाम्नस्तवध्वस्तमहापातकसन्ततेः ।
ममोपपातकव्रातंप्रबलापकीर्तिः—म

[2] दानमुद्रां—त

[3] पापभारः—त

अत्र नेत्रेण कारुण्यरसं दधानः हस्तेन [1]अभयदानमुद्रां दधानः इत्यन्वयः। नेत्रहस्तशब्दयोर्वैपरीत्येन प्रक्षेपः

(vi) वाक्यान्तरपदसङ्कीर्णं [2]वाक्यसङ्कीर्णम्।

यथा—

'पुण्यं यशो यस्य पुनाति काशीं
पाषाणमेकं परितस्त्रिलोकीम्।
पादाब्जतीर्थं हृदयं पुनातु
देवो मदीयस्य पदारविन्दम् ॥ २६० ॥

अत्र यस्य पादाब्जतीर्थं काशीं पुनाति यस्य पुण्यं यशः त्रिलोकीं पुनाति यस्य पदारविन्दमेकं पाषाणं पुनाति स देवो रामो मदीयं हृदयं पुनात्विति बहुवाक्यस्थपदानां सङ्कीर्णता॥

पुनाति काशीमपि यत्पदाम्बु-
यशो मदीयं भुवनत्रयं च।
शिलां च दुश्शीलतमां यदङ्घ्रिः
पुनातु रामस्स ममान्तरङ्गम् ॥ २६१ ॥

इति सम्यक् पाठः॥

(vii) यत्र क्रियान्वयो न सम्पूर्णः तत् [3]अपूर्णम्॥ यथा—

---

[1] अभयमुद्रां दधानः—म

[2] वाक्यान्तरपदैः कीर्णं वाक्यसङ्कीर्णमुच्यते॥ (प्र. रु. दो. प्र.)

[3] अपूर्णं तद्भवेद्यत्र न सम्पूर्णो क्रियान्वयः (प्र. रु. दो. प्र.)

सुलभा पापसम्पत्तिः दुर्लभः सुकृतोदयः ।
सुकुर्वन्ति वृथा राम त्वमन्यान्यात्मताकरः ॥ २६२ ॥

अत्र हे राम पाषाणस्य स्त्रीरूपापादकतया अन्यस्य अन्यात्मतासम्पादके त्वयि सुलभपापान्यपि सुकृतीकुर्वति सति सुकृतिनो बहुप्रयासैः सुकृतं वृथा सम्पादयन्तीत्ययमर्थो विवक्षितो न सम्पूर्ण इत्यसम्पूर्णता ।

सुलभान्यपि पापानि सुकृतीकुर्वति त्वयि।
सुकुर्वन्ति वृथा राम प्रयासैर्भुवने जनाः॥ इति ॥ २६३ ॥

सम्यक् पाठः ॥

(viii) यत्र मध्ये वाक्यान्तरमुपक्षिप्यते [1]तद्वाक्यगर्भितम् ॥ यथा—

प्रक्षाल्य मे हृदयपङ्करुहावलग्नं
[2]पङ्कं त्वदङ्घ्रिघटनाभ्रनदीजलेन ।
[3]पीठे वसन्ति भुवने विमले महान्तः
तिष्ठ त्वमत्र सुचिरं ननु रामचन्द्र ॥ २६४ ॥

अत्र हृदयाम्बुजपीठे सुचिरं तिष्ठेति वाक्यमध्ये पीठे वसन्तीति वाक्यान्तरप्रयोगात् वाक्यगर्भितम् ॥

तृतीयचतुर्थपादयोर्व्यत्यये सम्यक् पाठः ॥

---

[1] तद्वाक्यगर्भितं यस्य मध्ये वाक्यान्तरं भवेत् (प्र. रु. दो. प्र)

[2] पङ्कं त्वदङ्घ्रिघटनाभ्रनदीजितेन—त

[3] पीठेऽपि सन्ति भुवने—म

(ix) 'यत्र भिन्नलिङ्गयोर्भिन्नवचनयोरुपमानोपमेयभावः ते [1]भिन्न-लिङ्गभिन्नवचने ।। यथा—

नैशानि तिमिराणीव पापं मे देव दृश्यते।

तन्निवारय राम त्वं धामेव खरदीधितेः ।। २६५ ।।

अत्र पापं तिमिराणीवेति भिन्नवचनयोरुपमानोपमेयभावः। 'त्वं खर-दीधितेर्धामेवेति भिन्नलिङ्गयोरुपमानोपमेयता। तत्र त्वमित्यस्य प्रकरणात् [2]पुल्लिङ्गतेति बोध्यम् ।।

नैशं ध्वान्तमिव स्वान्ते

[3]प्रकाश उपभास्वत इति सम्यक्पाठः ॥

(x) यत्र विशेषणैः न्यूनमुपमानं तत्र न्यूनोपमा ।। यथा—

कटाक्षास्ते दया शीता [4]मयि मयि संसारतापिते।

निपतन्तु यथा राम गिरौ चन्द्रमसः कराः ।। २६६ ।।

अत्र दृष्टान्ते विशेषणानुपादानान्न्यूनोपमात्वम् ।।

'सुधार्द्राः चन्द्रभानव इति सम्यक्पाठः ॥

(xii) यत्रोपमानं विशेषणैरधिकं तत्र अधिकोपमम् ।। यथा—

---

[1] यत्रोपमा भवेद्भिन्नवचना भिन्नलिङ्गका।
तद्भिन्नवचनं भिन्नलिंङ्ग चाहुर्मनीषिणः ।। (प्र. रु. दो. प्र)

[2] पुल्लिङ्गतेति भिन्नलिङ्गत्वं बोध्यम्—त

[3] प्रकाशमिव भास्वत इति सम्यक्पाठ —त

[4] सन्तापिते भुवि—म

[1]दुरिताच्चकितो राम त्वामहं शरणं गतः ।
विभीत इव सामात्यो दशकण्ठाद्विभीषणः ॥ २६७ ॥

[2]अत्र दृष्टा[न्ते] विशेषणादानात् अधिकोपमा ॥

विभीत इव संरक्षेति सम्यक् पाठः ॥

(xiii) भग्नश्छन्दः [3]छन्दोभङ्गः ॥

यथा—

प्रतिग्रहस्त्वं रघुवरदेव धनं
[4]प्रतिग्राह्यमपि······मेव ।
[5]प्रतिग्रहीता······भो त्वमेव
प्रतिग्रहीतुः कुत एव पापम् ॥ २६८ ॥

अत्र रघुनाथेति गुर्वक्षरप्रयोगाभावात् छन्दोभङ्गः ॥

स एव सम्यक्पाठः ॥

(xiv) यत्रास्थाने यतिभ्रंशः तद्यतिभ्रष्टम् ॥

यथा—

---

[1] दुरिताच्चकितो इत्यारभ्य—यदि मुनि इति पर्यन्तं—त पुस्तके नास्ति

[2] 'अत्र दृष्टान्ते' इति पाठः सङ्कलितः

[3] छन्दोभग्न वचो यत्र तद्भग्नछन्द उच्यते ॥ (प्र. रु. दो. प्र.)

[4] मातृकायां त्रुटितमस्ति ।

[5] मातृकायां त्रुटितमस्ति ।

[1]यदि मुनिविनुतायोध्यो हि विश्वम्भरस्त्वं
मयि पतितमघानां भारमद्योद्वहस्व।
प्रणमदभयदाया[2]भिन्धिभीतिं यदि स्यात्
यदि विभुरपि चेतोदर्पणे मे स्फुरेत् यः ॥ २६९ ॥

अत्र अष्टमवर्णे यतिभङ्गः। 'यदि सुदृढमयोध्यानाथविश्वं-भरस्त्वमिति सम्यक्पाठः।

(xv) क्रियापदहीनमशरीरम्॥ यथा—

[3]सकृदेव प्रपन्नानां नृणामभयदायकः।
प्रपन्नं पातकाङ्क्षीतं किं मां राम दयानिधे ॥ २७० ॥

अत्र क्रियापदाभावादशरीरम्।

मां राम किमुपेक्षसे इति सम्यक्पाठः।

(xvi) रसाननुगुणरीतिररीतिकम्। यथा—

लोकेषु स्वैरमालोलं क्रूरं पातकपूरुषम्।
आन्त्राण्युन्मूल्य परितो जहि राम नृकेसरीन् ॥ २७१ ॥

अत्र रौद्रे मृदुसन्दर्भोऽनुचित इत्यरीतिकम्।

---

[1] यदि मुनिविनुतायोध्यो हि विश्वम्भरस्त्वं इत्यत्र 'हि' इति पदं अर्थानुसारेण संशोधकेन सङ्कलितः

[2] भिन्दिभीतिं—म

[3] सकृदेव प्रपन्नानां—त

xvii) यत्र विसर्गो बहुधा ओत्वं लोपं वा प्राप्नोति [1]तद्विसर्गलुप्तम् ॥

दुराचारोऽतिकृपणो बद्धो जालं पटोऽनिशम् ।
तव राम कवीशोऽहं नोपेक्ष्यास्मि वचोऽर्पकः ॥ २७२ ॥

xviii) यत्र समासोऽनुचितोऽनुबद्ध्यते तदपदस्थसमासम् ॥

यथा—

'स्वमस्तकाग्राहितपद्मकुड्मला
प्रतीक्षणीयाञ्जलिबद्धसादरम् ।
भवन्तमेकं शरणं गतं भिया
समस्तपापादव राम मां विभो ॥ २७३ ॥

अत्र रामवर्णने न समासः। किन्तु निजस्वरूपकथन एवेत्यपदस्थ-समासता ।

अनर्थहेत्वन्तरबाह्यत्रिद्विषद्भिीतलोकाभयदानसादर इति सम्यक् पाठः ॥

xix) यत्र वक्तव्यं न कथ्यते तद्वाच्यविवर्जितम् ॥ यथा—

तापत्रयं [2]दुश्शममन्यदेवैः
निवर्तयैतन्मम रामचन्द्र ।
नीहारशीतैर्निबिडैः कटाक्षैः
त्वां लक्ष्मणं त्वद्दयितां नमामि ॥ २७४ ॥

---

[1] ओत्वलोपौ विसर्गस्यासकृल्लुप्तविसर्गकम् ॥ (प्र. रु. दो. प्र)

[2] दुश्शममघादेवै —र

अत्र त्वां लक्ष्मणं त्वद्दयितां चेति वक्तव्ये च शब्दो न प्रयुक्तः इति वाच्यवर्जितम् ।

(xx) यत्र समाप्य पुनरादीयते तत् समाप्तपुनरात्तकम् ।। यथा—

[1]'पाषाणमादा . . . . . . . कठोरशापेन कृतं खरारे।
पुनातु यत्तन्मम हृत्सरोजं[2] पादं च यत्ते त्रिजगत्पवित्रम् ।। २७५ ।।

[3]अत्र तत्ते पादं च मम हृत्सरोजं पुनात्विति समाप्य त्रिजगत्पवित्रमिति पुनरादानात् समाप्तपुनरात्तकम् ।।

xxi) यत्र प्रकर्षो [4]विकृतो भवति तत् पतत्प्रकर्षम् । यथा—

इन्द्रेशवरुणब्रह्ममुखैस्ते राम चिन्तितम् ।
पदारविन्दयुगलं पुनातु मम मानसम् ।। २७६ ।।

अत्र 'ईशब्रह्मेन्द्रवरुणेति' वक्तव्ये तथा नोक्तमिति पतत्प्रकर्षता ।।

xxii) [5]यत्रेष्टेऽन्यान्वयो हतस्तत्सम्बन्धवर्जितम् ।।

यथा—

---

[1] (i) पाषाणमादा च पुनान्मुनीश कठोरशापेन—उ
(ii) 'म' प्रतौ मध्ये त्रुटितमस्ति ।

[2] पादद्वयं ते—म

[3] अत्र तत्पादद्वयं मम हृत्सरोजं—म

[4] विश्लथो भवति—म

[5] यत्रेष्टेनान्वयो—त

हृदब्जकर्णिकाग्रस्थे त्वत्पादयुगले विभो ।
तन्नखज्योत्स्नया धूतं भूयाद्रामान्तरं तमः ॥ २७७ ॥

[1]अत्र मम हृदब्जकर्णिकाग्रस्थे ममान्तरं तमो निर्धूतं भूयादिति वक्तव्ये तथा नोक्तमिति सम्बन्धवर्जितम् ॥

xxiii) [2]यत्राधिकपदमुत्क्षिप्यते तदधिकपदम् ॥

यथा—

राम ते नामदावाग्नेर्महापापवनाद्विपः ।
मृदूपपातकतूलानां राशिर्मम कि[3]यानहम् ॥ २७८ ॥

अत्र मृद्विति पदमधिकम् । 'उपपातकतूलानामिति' सम्यक् पाठः ॥

xxiv) यत्र प्रक्रान्तनियमो भज्यते तत्र भग्नक्रमता ॥ यथा—

अदन्तु कुत्राप्यनृतं वदन्तु
चरन्तु हिंस्राः कनकं हरन्ताम् ।
व्रजन्त्वगम्या दुरितं सृजन्तु
ध्यायन्तु रामं न भयं तु यान्तु ॥ २७९ ॥

अत्र हरन्तामित्यात्मनेपदप्रयोगात् भग्नप्रक्रमता ।
हरन्त्विति सम्यक् पाठः ॥

---

[1] अत्र हृदब्जे कर्णिकाग्रस्थे—त

[2] यत्राधिकपदमुपक्षिप्यते—त

[3] कियानयम्—म

अथ अर्थदोषा निरूप्यन्ते ।

तत्र अपार्थव्यर्थैकार्थससंशयापक्रमभिन्नातिमात्रपरुषविरसहीनाधिकोपमविसदृशोपमाप्रसिद्धोपमहेतुशून्यनिरलङ्कृत्यश्लीलविरुद्धसहचर भ्रष्टभेदादष्टा[1]दशदोषाः ॥

१) तत्र समुदायार्थशून्यम् अपार्थकम् ॥

यथा—

भाति वित्तमयोध्यायां भासते दण्डकावनम् ।
महेन्द्रगिरिराविद्धो रामनामाघदाहकम् ॥ २८० ॥

अत्र समुदायार्थशून्यत्वात् अपार्थकम् ।

२) प्रयोजनशून्यं व्यर्थम् ॥ यथा—

अयोध्यानगरीवासः तव हर्म्याकुलाकुला ।

---

[1] (i) अष्टादशार्थदोषाः-त

(ii) अपार्थं व्यर्थमेकार्थं ससंशयमपक्रमम् ।
भिन्नं चैवातिमात्रं च परुषं विरसं तथा ॥
हीनाधिकोपमे स्यातामसदृशोपमं तथा ।
अप्रसिद्धोपमं हेतुशून्यं च निरलङ्कृति ॥
अश्लीलं च विरुद्धं च तथा सहचरच्युतम् ।
एवमष्टादश प्रोक्ता दोषा अर्थसमाश्रयाः ॥

(प्रतापरुद्रीयम्-दोषप्रकरणम्)

[1]मम [गण्यानि ना]घानि गुणवान्स्त्वं रघूत्तम ॥ २८१ ॥

अत्र गुणवतस्तव [2]मम अघगणनं नोचितमित्यर्थे अयोध्यावर्णनं निष्प्रयोजनम् ॥

३) उक्ताभिन्नार्थमेकार्थम् ॥ यथा—

पापवानपि पुण्यात्मा राम त्वत्कृपयेक्षितः ।
अघवानपि सत्कर्मादयाद्दष्टस्त्वया विभो ॥ २८२ ॥

अत्र पूर्वोत्तरार्थयोरैकार्थ्यम् ॥

४) संन्दिग्धवाक्यार्थं ससंशयम् ॥ यथा—

अहनिशं जनाराम गुणाराम रमानिधे ।
विहाय भूरि कुर्वन्ति पातकं स्मरणं तव ॥ २८३ ॥

अत्र पातकं विहाय स्मरणं कुर्वन्तीति वा [3]स्मरणं विहाय पातकं कुर्वन्तीति वा वाक्यार्थसंशयात् ससंशयता ॥

५) पूर्वापरीभाववैपरीत्यमपक्रमम् ॥

यथा—

---

[1] अत्र 'त' प्रतौ ममागण्यान्यघनि इति वर्तते ।
'म' प्रतौ 'मम......घानि' इति वर्तत । मध्ये भागः त्रुटितः।
अतः योग्यार्थनिश्चयार्थं 'मम गण्यानि नाघानि' इति पाठः शोधितः । आवरणे दत्तश्च ।

[2] मम गणनं—म

[3] स्मरणं विहाय पातकं कुर्वन्तीति वा—इति भागः 'म' प्रतौ नास्ति ।

त्वदुपासनया राम [1]मुक्ता···वा कृताः।
[2]अन्यार्थकरणं सद्यो भ्रान्तिं मुञ्चन्ति तत्क्षणे ॥ २८४ ॥

अत्र भ्रान्तेः मोक्षानन्तरं मुक्तिरित्यपक्रमता ॥

६) सम्बन्धवर्जितं भिन्नम् ॥ यथा—

रामे राजनि पापानि [3]नेक्ष्यन्ते तत्र भूतले।
यद्दारिद्र्यपदं जातम् अर्थसम्बन्धवर्जितम् ॥ २८५ ॥

अत्र दारिद्र्यपदनैरर्थक्यस्य पापानां क्वाप्यदर्शनस्य च न सम्वन्ध इति भिन्नता ॥

७) यत्सर्वलोकातीतं तदतिमात्रम्।

यथा—

पिशाचकल्पैः किं ब्रह्ममहेन्द्रमुखरैस्सुरैः।
सर्वपापहतौ रामचन्द्रेणालं जगद्भृता ॥ २८५ ॥

अत्र ब्रह्मेन्द्रादिषु पिशाचकल्पैरिति अतिनीचोक्तिरतिमात्रता।

८) अप्रस्तुतरसं विरसम् ॥ यथा—

---

[1] मुक्ता भूत्वा तवाचिताः—इति 'त' प्रतौ दृश्यते। सः अपपाठः। अतः तथैव त्रुटितभागः अत्र दत्तः ॥

[2] अनर्थकारणं-त

[3] नेक्ष्यन्तेऽद्यापि भूतले—त

निशाचरी सा सौमित्रिलूयमानाग्रनासिका ।
कामुकी प्रार्थयामास रामचन्द्रं पुनः पुनः ॥ २८७ ॥

अत्र [1]नासिकाच्छेदनदशायामपि शूर्पणखायास्सुरतेच्छायाः रामचन्द्र-प्रार्थनं विरसम् ॥

९) यत्र उपमानं हीनं तद्धीनोपमम् ॥

यथा—

श्रीरामचन्द्र त्वदुपास्ति कर्म
निरन्तरायं भुवि ये चरन्ति ।
मुक्तौ नतास्ते त्रिदिवं प्रयान्ति
नरा यथा मद्यग्रहं सुरापाः ॥ २८८ ॥

अत्र सुरापानरामचन्द्रग्रहं यथेति हीनोपमा ॥

१०) यत्रोपमानमधिकं तदधिकोपमम् ॥ यथा—

राम ते स्मृतिनिर्धूताः स्मर्तॄणां पातकोत्तराः ।
त्वद्भक्तदूपके लग्नाः स्फुरन्तीन्द्रोपला इव ॥ २८९ ॥

अत्र इन्द्रोपला इवेत्यधिकोपमा ॥

११) यत्रोपमानमतुल्यं तदसदृशोपमम् ॥

यथा—

पापान्यपहरन् राम भ्राजसे त्वं भजन् नृणाम् ।
प्रकीर्णकिरणव्रातश्चण्डभानुरिवाभितः ॥ २९० ॥

---

[1] नासिकाभेदनदशायामपि—म

अत्र पापान्यहरन् त्वं प्रकीर्णकिरणव्रातः चण्डभानुरिवेत्युपमानोपमेययोः वैसादृश्यम् ॥

१२) यत्रोपमानमप्रसिद्धं तदप्रसिद्धोपमम् ॥

यथा—

भगवन् [[1]पादचन्द्रस्ते] राम जीयादहर्निशम् ।
त्वत्सेवया प्रशाम्यन्ति सद्यस्तापा ममाखिलाः ॥ २९१ ॥

अत्र पादस्य चन्द्रौपम्यं कविजनाप्रसिद्धमिति अप्रसिद्धोपमता ॥

१३) हेतु विना कृतार्थकथनं हेतुशून्यम् ॥

यथा—

मया नानाविधाघानि रचितानीह जन्मनि ।
[2]उपेक्षा तन्निरासेऽद्य नोचिता रघुनन्दन ॥ २९२ ॥

अत्र उपेक्षा नोचिता इत्यत्र परमकारुणिकत्वादिर्हेतुर्नोक्त इति हेतुशून्यता ॥

१४) अलङ्काररहितं निरलङ्कारम् ॥ यथा—

उत्थापयन् कामदण्डं [3]परनार्युचितं तथा ।
कालं नयति रामेह त्वत्सेवाविमुखो जनः ॥ २९३ ॥

---

[1] मूलमातृकायां रामचन्द्रः इति वर्तते। विवरणे 'अत्र पादस्य चन्द्रौपम्यं कविजनाप्रसिद्धमिति अप्रसिद्धोपमता' इति कथनानुसारात् 'पादचन्द्रस्ते' इति पाठः स्वयं स्वीकृतः ।

[2] तन्निरासे तवोपेक्षा नोचिता रघुनन्दन—त

[3] परस्त्रीयोनिचिन्तया कालं—त

अत्र नालङ्कारान्तरं शङ्कनीयम । विच्छित्तेरभावात् ।

१५) अश्लीलार्थकथनमश्लीलम् ॥ यथा—

सञ्चयं पातकानां त्वम् अनेकजननार्जितम् ।
राम संहर दावाग्निरिव शुष्केन्धनं वने ॥ २९४ ॥

अत्र सञ्चयशब्दार्थोऽश्लीलः ॥

१६) देशकालादिविरुद्धं विरुद्धम् ॥

यथा—

श्रेयस्कामा वितन्वन्ति पापानि बहुधा जनाः ।
जानन्ति तव सेवायां दुःखमेव महीतले ॥ २९५ ॥

अत्र वस्तुविरोधः ॥ एवं विरोधान्तरमुदाहार्यम् ॥

१७) अतुल्यानां सहनिबन्धने सहचरभ्रष्टम् ॥ यथा—

[1]परस्त्रीस्मरणेनैव नयन्ति समयं विटाः ।
रामस्य स्मरणेनैव नयामो दिवसान् वयम् ॥ २९६ ॥

अत्र परस्त्रीस्मरण रामस्मरणयोरतुल्ययोः सहनिबन्धनात् सहचरभ्रष्टता ॥

परुषनामकदोषलक्षणं उदाहरणं च नोक्तम् ।

एवं दोषान्तरमप्युदाहार्यम् ॥

---

[1] परस्त्रीस्मरणेनेह—त

[1]रसभावादीनां स्वशब्दवाच्यता दुष्टैव ॥

इति चरुकुरिकोण्डुभट्टोपाध्यायतनयेन यज्ञेश्वरदीक्षितेन तिरुमलयज्वप्रियसोदरेण विरचिते अलङ्कारराघवे दोषप्रकरणं संपूर्णम् ।

॥ श्री रामचन्द्रपरब्रह्मणे नमः ॥

दोषप्रकरणस्यास्य पठनेन विपश्चितां ।
सर्वे दोषाः प्रशाम्यन्ति रामानुग्रहवैभवात् ॥

---

[1] रसभावादीनां स्वशब्दवाच्चता दुष्टैव इति प्रतापरुद्रीयेऽपि दोषप्रकरणस्य अन्ते उक्तम् । अस्य वाक्यस्य व्याख्यानं—रत्नापणव्याख्याने—एवं निरूपितमस्ति—रसेति । भावाः सञ्चारिभावाः । आदिग्रहणात् स्थायिभावा गृह्यन्ते । तेषां स्वशब्दवाच्यता रसशृङ्गारादिसामान्यशब्दाभिधेयता दुष्टैवेति । रसप्रतीतेः विभावादिप्रयोगान्वयव्यतिरेकानुविधानात् रसादिशब्दप्रयोगेऽपि तदप्रतीतेश्च नित्यव्यङ्ग्यस्य रसादेर्वाच्यत्वं दुष्टमेवेति भावः । तदुक्तं काव्यप्रकाशे रसदोषप्रकरणे—
'व्यभिचारिरसस्थायिभावानां शब्दवाच्यता इति।

# अथ गुणा निरूप्यन्ते

ननु काव्यशोभायाः कर्त्तारो धर्माः गुणाः

इति वामनरुद्रटौ ॥

रसोऽङ्गिसमवेतैर्यैर्धर्मैरुत्कर्षमश्नुते ।

शौर्यादिभिर्यथैवात्मा ते गुणाः कथिता बुधैः ॥

इति साहित्यचिन्तामणिकारः ।

अङ्गिनि रसे स्थिता ये बिभ्रत्युत्कर्षहेतुतां सततम् ।

आत्मनि शौर्यादय इव ते नामैते गुणाः कथिताः ॥

इत्येकावलीकारः ॥

ये रसस्याङ्गिनो धर्माः शौर्यादय इवात्मनः ।

उत्कर्षहेतवस्ते स्युः अचलस्थितयो गुणाः ॥

इति [1]काव्यप्रकाशिकाकारः ॥

काव्योत्कर्षहेतुर्गुण इत्यन्यैर्वर्ण्यन्ते । तत्र नाद्यन्तलक्षणे युक्ते । अदोषौ सगुणौ सालङ्कारौ काव्यमिति उक्तेः काव्यस्वरूपस्य गुणघटितत्वात् गुणस्वरूपस्य च काव्यघटितत्वादन्योन्याश्रयप्रसङ्गात्। किञ्च अलङ्कारे कविवर्ण्यगुणादिषु अतिव्याप्तिः । तेषामपि काव्योत्कर्षहेतुत्वात् । किञ्च गुणमेलके अतिव्याप्तिं को वारयेत् ! [1]तस्य ..... तद्धेतुत्वात् । न

---

[1] काव्यप्रकाशकारः—व

[2] मध्ये त्रुटितः

च मेलकातिरिक्तमेलकाभावश्शक्यशङ्कः। एकैकगुणेऽपि मेलकबुद्धिप्रसङ्गात्। न च अनेकगुणा एव मेलका इति वाच्यम्। विशकलितगुणेष्वपि मेलक-बुद्धिप्रसङ्गात्। न च एकाश्रयाश्रितानेकगुणेषु मेलकशब्दप्रयोग इति वाच्यम्। गुणानामेकाश्रयसम्बन्ध एव मेलकः प्राप्त इति तत्रैव अतिव्याप्तिदुर्वारत्वात्। किञ्च दोषाभावगुणेष्वतिव्याप्तमिदं लक्षणद्वयम्। तेषामपकर्षाभावे प्रयोज-कत्वेन उत्कर्षहेतुत्वाभावात। न चापकर्षाभाव एव उत्कर्षः। तत्र तथा व्यवहाराभावात्। किञ्च हेतुतावच्छेदकं किञ्चिदस्ति वा न वा। नान्त्यः। तदभावे हेतुत्वस्यैव दुर्ग्रहत्वेन अज्ञानासिद्धिप्रसङ्गात्। आद्ये तत् किं गुण-त्वम् अन्यद्वा। नाद्यः। [1]आत्माश्रयप्रसङ्गः। अन्त्ये लाघवात् तदेव लक्षणमस्तु किमनेन? अत एव नोक्तलक्षणत्रयमपि युक्तम्। दोषाभाव-रूपगुणेष्वव्याप्तेरेव। ननु [2]मुख्यलक्षणमेवेदमिति चेन्न। पाकेऽव्याप्तेः।

तस्य रसास्वादप्रभेद[3]रूपत्वेन तदुत्कर्षहेतुत्वात। किञ्च [4]को वा रसोत्कर्षो नाम? रसस्योपचयो वा? अभिव्यक्तिविशेषो वा? सजातीय-विजातीयानभिभवो वा? जातिविशेषो वा? वेद्यान्तरमिति निरासो वा? नाद्यः। तस्य नित्यत्वेन अवयवसंश्लेषाभावात्। न द्वितीयः। विभावादि-ष्वतिव्याप्तेः। न तृतीयः। स्थायिभावस्थायित्वधर्मेऽतिव्याप्तेः। तस्य

---

[1] आत्माश्रयप्रसङ्गात—त

[2] मुख्यलक्षणगुणमेवेदमिति चेन्न—त

[3] रूपत्वे—म

[4] कोऽयं—त

सजातीयविजातीयानभिभूततया यावद्रसानुभवमवस्थानरूपत्वेनतद्धेतुत्वात्। न चतुर्थः। जातेः नित्यत्वेन असम्भवप्रसङ्गात्। विभावाति वेद्यान्तरप्रतीतेरसम्भवप्रसङ्गात्। ननु विभावातिरिक्तव्यतिरिक्तवेद्यान्तर-निरासः उत्कर्ष इति चेत्तर्हि विभावादिरसानुभवसामग्र्यामतिव्याप्तिं को वारयेत्। नान्त्यः। तदनिर्वचनात्। तस्माद्गुणलक्षणं दुर्निर्वचमिति चेत् अत्रोच्यते —

'सङ्घटनाधर्मत्वेन प्रतीयमानत्वे सति वस्तुतो रसासाधारणधर्मो गुण' इति लक्षणनिष्कर्षः। अत्र रसत्वादावतिव्याप्तिनिरासाय सत्यन्तम्। सङ्घटनासाधारणधर्मेष्वतिव्याप्तिनिरासाय वस्तुत इत्याद्युत्तरप्रतीकम्। न च गुणानां वस्तुतः सङ्घटनाधर्मत्वात् असम्भव इति शङ्क्यम्। तस्य निराकरिष्यमाणत्वात्। न च अलङ्कारेष्वतिव्याप्तिः। शब्दार्थालङ्काराणां [1]रसोपकारकत्वाङ्गीकारात्। वस्तुतो रसधर्मत्वाभावात्। अत एव यत्र तु नास्ति रसः तत्र उक्तिवैचित्र्यमात्रपर्यवसिता अलङ्कारा इति काव्यप्रकाशिकाकारः। न च वाक्येऽतिव्याप्तिः। तस्यार्थ[2]गम्भीरिमरूपत्वेन सङ्घटनाधर्मत्वेन प्रतीतेरभावात्। गुणो रसधर्म इति वादिनां मतेऽपि गुणानामापाततः सङ्घटनाधर्मत्वेन [3]प्रतीतिर्निर्वार्येति नासम्भवः। असाधारणपदेन सत्ताप्रमेय-

---

[1] रसोत्पत्त्यङ्गीकारात्—भ

[2] गम्भीरिमरूपत्वसङ्घटनाधर्मत्वेन—त

[3] प्रतीतिरनिवार्येति नासंभवः-त

त्वादावतिव्याप्तिनिरासः। अत एव न कैशिक्यादिवृत्तिष्वतिव्याप्तिः। न च दोषाभावादिरूपगुणेष्वव्याप्तिः। तत्राप्युक्तलक्षणत्वात्। न च गुणमेलके अतिव्याप्तिः। [1]तस्य गुणधर्मत्वेन रसधर्मत्वाभावात्।

ते च गुणाः—

श्लेषप्रसादसमतामाधुर्यसौकुमार्यार्थव्यक्त्युदारत्वकान्त्युदात्ततौजस्सुशब्दतः प्रेयान्और्ज्जित्यविस्तरसमाधिसौक्ष्म्यगाम्भीर्यसङ्क्षेपभाविकसंमितत्वप्रौढिरीत्युक्तिगतिभेदात् बहुविधाः। अत्र माधुर्यौजप्रासदास्त्रयः दोषभावरूपगुणाश्च मुख्यगुणाः। गुणत्वजातिरेव मुख्यगुणलक्षणम्। [2]न च आत्माश्रयः। वृत्त्यलङ्कारपाकादिव्यावृत्तो रसाभिव्यञ्जकनिष्ठो जाति विशेषोवा गुणत्वमिति निर्वचनात्। न च दोषाभावे अतिव्याप्तिः। तस्याभावरूपत्वेन तत्र जातेरनङ्गीकारात्। न च दोषरूपगुणेषु गुणत्वजात्यङ्गीकारे गुणत्वदोषत्वयोस्सङ्करापत्तिरिति वाच्यम। अन्यत्र दोषस्य सतोऽन्यत्र गुणत्वाङ्गीकारेण गुणत्वदशायां दोषत्वाभावेन तदनापत्तेः। सौकुमार्यादिषु दोषाभावरूपतया गुणत्वमौपचारिकम्। तथा हि—श्रुतिकटुरूपदोषाभावतया सौकुमार्यं ग्राम्यदोषाभावरूपतया कान्तिः अपुष्टार्थाभावरूपतयार्थव्यक्तिः न्यूनाधिकाभावरूपतया सम्मितत्वं अनुचितार्थाभावरूपतया उदात्तता विसन्ध्यभावरूपतया और्जित्यं पतत्प्रकर्षाभावरूपतया रीतिः क्लिष्टाभावरूपतया प्रसादः [3]अश्लिष्टाभावरूपतया उक्तिः च्युतसंस्काराभाव-

---

[1] तस्य कर्मत्वेन रसधर्मत्वाभावात्–म

[2] न च आत्माश्रयः शङ्कनीयः–त

[3] अश्लीलभावरूपतया–त

रूपतया सौक्ष्म्यं प्रक्रमभङ्गाभावरूपतया समता [1]पारुष्याभावरूपतया प्रेयांश्च गुण इति व्यपदिश्यते। दोषाभावस्य मुख्यगुणत्वे परतः प्रामाण्यवादिना-दोषाभावातिरिक्तगुणकल्पनं प्रामाण्येन स्यात्। स्वतःप्रामाण्यवादिनामपि [2]अधर्मभावातिरिक्तधर्मकल्पनं न स्यात्। तस्मात् दोषाभावे गुणत्वमौपचारिक-मिति सिद्धम्। सर्वेषां गुणानां स्वरूपमुदाहरणं च प्रदर्श्यंते।

१) तत्र पदानां मिथः संश्लेषः [3]श्लेषः॥ यथा—

निगमशिखरवल्ली फुल्लसूनायमानाम्
अखिलकविमुखाम्भोजातसौगन्ध्यलीलाम्।
सकलदिगबलानामुल्लसत्कण्ठभूषाम्
अहमिह रघुमौले त्वद्गुणश्रेणिमीडे ॥ २९७ ॥

अत्र पदानां पाठसमयेऽपदानामेव पदवदवभासमानत्वेन श्लेषः॥

२) प्रसिद्धार्थपदत्वं [4]प्रसादः॥ यथा—

---

[1] पारुष्यदोषाभावरूपतया—त

[2] अधर्माभावातिरिक्त—त

[3] (i) मिथः संश्लिष्टपदता श्लेष इत्यभिधीयते। बहुनां पदानामेकपद-वदवभासमानत्वं श्लिष्टत्वम्॥ (प्र. रु. गुणप्रकरणम्।

(ii) यत्रैकपदवद्भान्ति पदानि सुबहून्यपि।
अनालक्षितसन्धीनि स श्लेषः परमो गुणः॥
(वामनकाव्यालङ्कारसूत्रवृत्तिः गुणप्रकरणम्)

[4] शुष्केन्धनाग्निवत् स्वच्छजलवत् सहसैव यः॥
व्याप्नोत्यन्यत् प्रसादोऽसौ सर्वत्र विहितस्थितिः॥
(काव्यप्रकाशः--८ उल्लास ७०-७१ का)

विधास्यमानं भवता दशास्य-
विपक्षसिद्धाविह सेतुबन्धम् ।
वल्मीकजन्मा कविराडजानन्
तत्तुल्यगाम्भीर्यमवर्णयत् वाम् ॥ २९८ ॥

अत्र सर्वाणि पदानि प्रसिद्धर्थानि ।

३) वाक्यार्थसम्पूर्त्तिः [1]अर्थव्यक्तिः ॥

यथा—

श्रीरामचन्द्राप्रतिमानकीर्त्ते
ब्रह्मण्यता ते किमु वर्णनीया ।
यतो मृतं ब्राह्मणपुत्रमेक-
मजीवयस्त्वं करुणासमुद्रः ॥ २९९ ॥

अत्र अर्थप्रतिपादने वाक्यस्य निराकाङ्क्षत्वेन परिपूर्णत्वात् अर्थव्यक्तिः ।

४) [2]मार्गाभेदस्समता ॥ यथा—

वसन्तमग्रे हनुमन्तमन्ते
वसन्तमन्तः प्रतिबोधयन्तम् ।

---

[1] यत्तु संपूर्णवाक्यत्वमर्थव्यक्तिं वदन्ति ताम् ॥
(प्र. रु. गुणप्रकरणम्)

[2] अवैषम्येण भणनं समता सा निगद्यते ॥ (प्र. रु. गु. प्र)

समुद्रमुद्दामगभीरभाव-

समुद्रमाराधय [1]रामभद्रम् ॥ ३०० ॥

५) [2]अपरुषशब्दत्वं [3]सौकुमार्यम् ॥

यथा—

सकलसुजनवृन्दामन्दमन्दारलीलं

जनकदुहितृनेत्रामन्दकन्दर्पकल्पम् ।

मुनियुवतिपवित्रस्पन्दपादारविन्दं

निरुपमगुणसान्द्रं रामचन्द्रं भजामः ॥ ३०१ ॥

६) आनन्दस्यन्दिता [4]माधुर्यम् ॥ यथा—

---

[1] रामचन्द्रम्—त

[2] अपौरुषशब्दत्वं—म

[3] सुकुमाराक्षरप्रायं सौकुमार्यं प्रतीयते ।
सुकुमारत्वं नाम सानुस्वारकोमलवर्णत्वम् ॥

(प्र. रु. गुणप्रकरणम्)

[4] (i) आनन्दस्यन्दिता तज्ज्ञैः माधुर्यमभिधीयते ।

(एकावली-पञ्चम उन्मेषः-२ का)

(ii) आह्लादकत्वं माधुर्यं शृङ्गारे द्रुतिकारणम् ।
करुणे विप्रलम्भे तत् शान्ते चातिशयान्वितम् ॥

(काव्यप्रकाशः—८उ, ६९ का)

(iii) या पृथक्पदता वाक्ये तन्माधुर्यं प्रकीर्त्यते ।

(प्र. रु. गु. प्र)

मुक्त्वा लग्नमशेषबन्धमभितो
रोमाञ्चसञ्चारिणो
भूभृत्कन्दरमन्दिरान्तःगता-
निष्पन्दधीदीपिकाः ।
घर्मान्ताम्बरलम्बमानविलसत्-
कादम्बिनीडम्बरं
स्वानन्दं रघुरामचन्द्रमनिशं
ध्यायन्ति योगीश्वराः ॥ ३०२ ॥

६) विकटाक्षरबन्धत्वमौदार्यम् ॥ यथा—

कोदण्डोद्धत चण्डकाण्डदलित
क्षीबद्विपक्ष्माधरः
तच्चण्डोन्नतवीचिखण्डखचितो
[2]द्विट्चित्रकूर्माकुलः ।
त्वद्योधोद्भटमुष्टिघातनिपतद्रक्षो-
भटाग्रोच्चल-
दृग्गोलाद्भुतबुद्बुदस्स्फुरति ते
श्रीराम शौर्याम्बुधिः ॥ ३०३ ॥

७) अत्युज्वलबन्धत्वं [3]कान्तिः ॥ यथा—

---

[1] चन्द्रकान्तदळित—त

[2] द्विट्छत्रकूर्माकुलः—त

[3] अत्युज्वलत्वं बन्धस्य काव्ये कान्तिरितीष्यते ॥ (प्र. रु. गु. प्र)

रघुनाथ देव महदेव वीक्ष्यते
करुणारसस्तवविलोचनोज्वलः ।
विकचारविन्दमकरन्दमाधुरी
धुरमावहन्कृपणभृङ्गमङ्गलम् ।। ३०४ ।।

८) श्लाघ्यविशेषणयुक्तत्व[1]मुदात्तत्वम् ।।

यथा—

पीताम्बरं दधतमुज्वललम्बहारं
व्यालोलकुण्डलयुगं धृतमन्दहासम् ।
रूपं निसर्गरुचिरं तव रामचन्द्र
सञ्चिन्तये त्रिजगतामपि मोहनीयम् ।। ३०५ ।।

९) [2]ओजस्समासभूयस्त्वम् ।। यथा—

उन्मत्तवैरिनृपकुञ्जरमस्तकाग्र-
संशिक्षकाङ्कुशमयीं[3] कुशलेखिकाङ्कम् ।
आत्तोद्धतारिविरुद्ध्वजरूपके तु
रेखाङ्कितं तव पदाब्जमवैमि राम ।। ३०६ ।।

---

[1] श्लाघ्यैर्विशेषणैर्योगो यस्तु सा स्यादुदात्तता (प्र. रु. गु. प्र.)

[2] दीप्त्यात्मविस्तृतेः हेतुः ओजो वीररसस्थिति ।
बीभत्सरौद्ररसयोः तस्याधिक्यं क्रमेण च ।।
(काव्यप्रकाशः—८उ. ६९ का)

[3] रेखिकाङ्कम्-त

१०) सुप्तिङ्व्युत्पत्तिस्सौ[1]शब्दयम् ॥ यथा—

[2]वर्षत्वम्बुदनीलिमा वपुषि ते
स्थेमापि रारज्यते
सत्कीर्त्ते दिशि लालसीति महिमा
धामाभिलालस्यते ।
सज्जङ्गन्ति तथाणिमापि विमलं
नामापि जेगीयते
प्रेमाचारिषु वोभवीति च भवान्
रामाभिजाज्वल्यते ॥ ३०७ ॥

११) प्रियतराख्यानं [3]प्रेयः ॥ यथा—

अनयननयनस्त्वं निर्गतीनां गतिस्त्वं
विगतनयनिधिस्त्वं निर्विभूनां विभुस्त्वम् ।
हितरहितहितस्त्वं निष्पितॄणां पिता त्वं
त्रसदभयभरस्त्वं पाहि मां रामचन्द्र ॥ ३०८ ॥

१२) प्रौढबन्धत्व[4]मौर्जित्यम् ॥ यथा—

---

[1] सुपां तिङां च व्युत्पत्तिः सौशब्द्यं परिकीर्त्यते ॥ (प्र.रु.गु.प्र.)

[2] सर्वस्त्वम्बुद—त

[3] प्रेयः प्रियतराख्यानं चाटूक्त्या यद्विधीयते ॥ (प्र. रु. गु. प्र.)

[4] औजित्यं गाढबन्धत्वम् (प्र. रु. गु. प्र.)

आरक्षकस्मरणदक्षिणरक्षणेषु
पूर्णक्षमस्त्रिदशशिक्षकपक्षशिष्टे ।
रामोक्षरोक्षरवतिस्फुटपक्षपाती
मां रक्षतादिह दयेक्षण दक्षशीलः ॥ ३०९ ॥

१३) [1]अन्यस्य अन्यधर्मारोपणं [2]समाधिः ।

यथा—

गुणैस्त्वदीयै रघुनाथकोच्चै
स्साम्याभिमानप्रबलापराधात् ।
मुक्ताफलानीह विनिर्मलानि
नानाविधं वेधमभिप्रयान्ति ॥ ३१० ॥

अत्र चेतनधर्मस्य अभिमानस्य मुक्ताफलेष्वारोपात् समाधिः।

१४) उक्तस्यार्थस्य समर्थनप्रपञ्चो [3]विस्तरः ।

यथा—

जानामि लोकेषु जनं न किञ्चित्
रघूत्तम त्वादृशसत्यसन्धम् ।
यदैहिकामुष्मिकपुंफलेषु
भवन्ति सत्या भवदीयवाचः ॥ ३११ ॥

---

[1] अन्यधर्मस्यान्यत्रारोपणम्-यथा—त

[2] समाधिरन्यधर्माणां यदन्यत्राधिरोहणम् ॥ (प्र. रु. गु. प्र.)

[3] समर्थनप्रपञ्चोक्तिरुक्तस्यार्थस्य विस्तरः ॥ (प्र. रु. गु. प्र.)

१५) अन्तस्सञ्जल्परूपत्वं [1]सौक्ष्म्यम् ॥ यथा—

व्याकुर्वन् हरतेः कर्म रामाकार्षीः पुरागमात् ।
विना युक्तस्य तस्य त्वं [2]कर्मापि मुनिमानसे ॥ ३१२ ॥

अत्र व्याहरति विहरतेत्यत्र अन्तस्सञ्जल्परूपत्वात् सौक्ष्म्यं भवति ॥

१६) ध्वनिमत्त्वं [3]गाम्भीर्यम् ॥ यथा—

गम्भीर्यगुणदृष्टान्ता लोके राम पयोधयः ।
ते स्वेदविन्दव इव दृश्यन्ते तव विग्रहे ॥ ३१३ ॥

अत्र स्वेदबिन्दव इवेत्युपमा ॥

निरुपमं तव गाम्भीर्यमिति व्यज्यते।

१७) विस्तीर्णार्थस्य सङ्क्षेपेण [4]व्यक्तिस्सङ्क्षेपः ॥

यथा—

भूत्वा रघुकुले राम व्यूढसीतो वनं गतः ।
अवधी रावणं यत्तत् लीलाकैवल्यमेव ते ॥ ३१४ ॥

अत्र रामायणार्थ सङ्क्षेपात् सङ्क्षेपः ।

---

[1] अन्तःसंजल्परूपत्वं शब्दानां सौक्ष्म्यमुच्यते ॥ (प्र. रु. गु. प्र.)

[2] कर्तापि—त

[3] ध्वनिमत्ता तु गाम्भीर्यम् (प्र. रु. गु. प्र.)

[4] संक्षिप्तार्थाभिधानं यत् संक्षेपः परिकीर्त्यते ॥ (प्र. रु. गु. प्र.)

१८) [1]भावतो वाक्यवृत्तिर्भाविकम् ।

यथा—

सन्त्येव निर्मलास्तात वत्स राम गुणास्त्वयि ।
सपत्नीं [2]कुरु वैदेह्याः साकेतनगरश्रियम् ॥ ३१५ ॥

अत्र दशरथस्य प्रेमरूपभाववशात् वत्स तातेत्युक्तिः ।

१९) यावदर्थपदत्वं [3]सम्मितत्वम् ॥

यथा—

राम ते दर्शनालग्ना गन्धलेशा इवाङ्कके ।
कुलाचला [4]विलोक्यन्ते कथं वर्ण्या तवोन्नतिः ॥ ३१६ ॥

---

1 भावतो वाक्यवृत्तिस्सात्विकम्—म

2 कुरु सीतायाः—त

3 यावदर्थपदत्वं तु संमितत्वमुदाहृतम् ॥ (प्र. रु. गु. प्र.)
यावदिति यावन्तोऽर्थाः यावदर्थमिति तद्धितान्तेन विग्रहः ।
तदुक्तं हरदत्तेन—
'यावदित्यव्ययं चास्ति तद्धितान्तश्च विद्यते ।
अतो नित्यसमासेऽपि तद्धितान्तेन विग्रहः ॥ इति
'यावदवधारणे' इत्यव्ययीभावः । यावदर्थं पदानि यस्य तस्य भावस्तत्वम् । अभिधेयापेक्षया यत्रैकमपि पदं न न्यूनं नाप्यधिकं तत्संमितमित्यर्थः ।
(प्रतापरुद्रीयरत्नापणव्याख्यानं—गुणप्रकरणम्)

4 विरोध्यन्ते—त

२०) उक्तिपरिपाकः–प्रौढिः ॥

यथा—

आपूर्णशारदसुधाकरबन्धुरीश
पाणिन्धमः प्रियसखो भुजगेश्वरस्य ।
जम्भारिकुञ्जरसहोदरतामुपेतः
श्रीरामकीर्तिमहिमा तव लालसीति ॥ ३१७ ॥

२१) विदग्धफणिति[1]रुक्तिः ॥ यथा—

युक्तमेव रघुनाथ पण्डितै-
स्सर्वरूप इति गीयसेऽखिलैः ।
शङ्करोऽपि चतुराननो हरिः
[2]यः कलानिधिरपीह भास्करः ॥ ३१८ ॥

२२) यथाक्रमनिर्वाहो [3]रीतिः ॥

यथा—

[4]लोकात्त्रय[स्ते]रघुरामसृष्टिः
त्रयोऽपि वेदाश्चरितं त्वदीयम् ।

---

[1] विदग्धभणितिर्या स्यादुक्तिं तां कवयो विदुः ॥ (प्र. रु. गु. प्र.)

[2] 'यत्कलानिधिः' इति मातृकास्थपाठः–
यःकलानिधिरिति शोधितः ।

[3] यथोपक्रमनिर्वाहो रीतिरित्यभिधीयते–(प्र. रु. गु. प्र.)

[4] म' प्रतौ लोकात्त्रयो रघुरामसृष्टिः इति दृश्यते, मध्ये वर्णमेकं लुप्तम्।

त्रयोऽपि तेजोविभवाद्दशस्ते
त्रयोऽपि देवास्तव चांशभूताः ॥ ३१९ ॥

२३) [1]स्वरारोहावरोहरम्यत्वं [2]गतिः ॥

यथा—

गुणानां वर्णनायां ते परिशेषमुपेयिवान् ।
सहस्रवदनश्शेष इत्युक्तो रघुनन्दन ॥ ३२० ॥

अत्र पूर्वार्द्धे दीर्घाक्षरप्रायत्वात् स्वरारोहः । उत्तरार्द्धे तदभावात् अवरोहः ।

एते गुणाः [3]रसधर्मा एव समुचितवर्णैः व्यज्यन्ते। न सङ्घटनाधर्माः । ननु गुणानां सङ्घटनाधर्मत्वाभावे गुणालङ्कारस्वरूपभेद एव दुर्निरूपः ।

यो हेतुः काव्यशोभायाः सोऽलङ्कारः प्रकीर्त्यते ।
गुणोऽपि तादृशो ज्ञेयो दोषस्स्यात्तद्विपर्ययः ॥ इति

रुद्रटेन गुणालङ्कारस्वरूपप्रतिपादनादिति चेन्मैवम् । नेदं गुण स्वरूपमिति प्रागेवोक्तत्वात् । नाप्यलङ्कारस्वरूपमिति वक्ष्यमाणत्वाच्च । गुणादीनां शौर्यादीनामिव समवायसम्बन्धाङ्गीकारात् अलङ्काराणां च हारादीनां कण्ठादिनेव संयोगसम्बन्धाङ्गीकारात् सम्बन्धभेदेनैव गुणालङ्कारभेदसिद्धेश्च ।

---

'त' प्रतौ 'लोकास्त्रियामो रघुनाथसृष्टिः' इति वर्तते। सोऽपि न युक्तः। अतः अत्र लोकास्त्रयस्ते रघुरामसृष्टिः इति शोधितः।

[1] स्वराणामारोहावरोहरम्यत्वं गतिः–त

[2] गतिर्नाम सुरम्यत्वं स्वरारोहावरोहयोः ॥ (प्र. रु. गु. प्र.)

[3] परधर्मा एव—म

ननु गुणानामन्तरङ्गधर्मत्वमेव युक्तम् । न हि बहिरङ्गरसधर्मत्वम् । अन्तरङ्गबहिरङ्गन्यायादिति [1]चेत् शब्दस्यापि रसप्रधानत्वेन रसप्रतीत्युपयुक्ततया शेषीभूतरसधर्मत्वमेव युक्तम् । मुख्यजघन्यन्यायात् तस्य च अन्तरङ्गबहिरङ्गन्यायबाधकत्वात् । एतेन सङ्घटनाधर्मत्वेन च गुणालङ्काराण [2]व्यक्तं स्थानमित्यलङ्कारसर्वस्वकारवचनं निरस्तम् । [3]तस्मान्निरूपिता गुणाः ॥

[4]इति चरकुरिकोण्डुभट्टोपाध्यायतनययज्ञेश्वरदीक्षितेन
[5]तिरुमलयज्वप्रियसोदरेण [6]पण्डितसार्वभौमेन विरचिते अलङ्कारराघवे

गुणप्रकरणं सम्पूर्णम् ॥

रामचन्द्रगुणरत्नवर्णनाशोभिकाव्यगुणसन्निरूपणम् ।
विश्रुतं हृदि मुदं परां [*शुभां] कस्य नात्र वितनोति [7]सन्ततम् ॥

प्रथमभागः समाप्तः

॥ श्री रामचन्द्रः प्रीयताम् ॥

---

1 चेन्न—त

2 व्यक्तमित्यलङ्कार—म

3 तस्मात्सुनिरूपिता गुणाः—त

4 इतिश्रीचरकुरि—त

5 तिरुमलयज्वसोदरेण—त

6 पण्डितसार्वभौमेन—इति पदं 'त' प्रतौ नास्ति

7 पद्यमिदं 'त' प्रतौ दृश्यते नान्यत्र ॥

* शुभाम् इति पदं मूलमातृकायां नास्ति तदत्र संयोजितम् ।

## अलङ्काररराघवस्य—प्रथमभागस्य
## उदाहरणपद्यानाम् अकारादिसूची

— ★ —

---

# शुद्धाशुद्धपत्रिका

| अशुद्धपाठः | शुद्धपाठः | पृष्ठसंख्या | श्रेणीसंख्या |
|---|---|---|---|
| प्रवृतिदर्शनात् | प्रवृत्तिदर्शनात् | 9 | 8 |
| प्रवृति श्च | प्रवृत्तिश्च | 10 | 5 |
| तदथनिदि | तदर्थनिदि | 17 | 15 |
| सर्वव्रिद्या | सर्वविद्या | 28 | 13 |
| परिमार्गीतुं | परिमार्गितुं | 34 | 8 |
| तत्यैव | तस्यैव | 49 | 4 |
| कठिणा | कठिना | 98 | 18 |
| निरूप्यते | निरूप्यन्ते | 104 | 1 |
| संहार | संहारं | 114 | 13 |
| कल्पवृक्षश्वेति | कल्पवृक्षश्चेति | 120 | 16 |
| षण्डकच्चुकि | षण्डकञ्चुकि | 140 | 21 |
| इतिवृत्तम | इतिवृत्तम् | 144 | 7 |
| सत्वादेव | सत्वादेव | 170 | 22 |
| ाबभावैः | विभावैः | 174 | 3 |
| कथ | कथं | 184 | 13 |
| पच्चात्सविशिख | पश्चात्सविशिख | 187 | 8 |
| घमदिषु | घमादिषु | 197 | 16 |
| नैश्चिस्त्यं | नैश्चिन्त्यं | 200 | 10 |

| अशुद्धपाठः | शुद्धपाठः | पृष्ठसंख्या | श्रेणीसंख्या |
|---|---|---|---|
| चेतनावाप्तिः | चेतनावाप्तिः | 211 | 8 |
| त्वत्द्व्याज | त्वद्व्याज | 212 | 5 |
| पूर्णमासि | पूर्णिमासि | 236 | 7 |
| हृद्गत | हृद्गतं | 258 | 10 |
| अहनिश | अहनिशं | 271 | 9 |
| नृणाम् | नृणाम् | 273 | 18 |
| हेतु | हेतुं | 284 | 8 |
| काल | कालं | 274 | 16 |

---